॥ अर्हम् ॥

श्री नमो नमः श्री प्रभुधर्मसूरये

# योग प्रदीपः



कर्ता—

न्याय-विशारद न्याय-तीर्थ उपाध्याय

श्री मङ्गलविजयजी महाराज

प्रकाशकः—

हेमचन्द सवचन्द शाह

कलकत्ता

प्रथमावृत्तिः

१०००

वीर सं० २४६६ धर्म सं० १८ वि० सं० १९९६

योगप्रदीप :



स्वर्गीय शास्त्र विशारद जैनाचार्य
श्री विजयधर्म सूरीश्वरजी महाराज

# गुरुदेवसमर्पणम् ।

धर्मोद्योतकसद्विहारकरणान्मिथ्यात्वमो बाधिता
मांसाहारिजनस्य स्वान्तगुहिरे धर्माङ्कुरोरोपितः
ज्ञानोद्योतकरी च जैनविबहे संस्था [illegible] देता
तान्वन्दे कमल[illegible] प्रतिदिनं श्रीधर्मसूरीन् गुरून्
धर्मो विश्ववरेण सेवितक्रमः धर्मं श्रयन्ते जनाः ।
धर्मेणैव कृतं च दुःखशमनं धर्माय सौख्यं सदा ।
धर्मात्स्वर्गशिवाप्तिता च भविनां धर्मस्य कार्यं महत् ।
धर्मे यस्य जनस्य स्वान्तमखिलं स सेव्यते पण्डितैः ॥२
श्रीमद्गुरूणां कृपया च कार्यं सर्वं कृतमस्ति सफलं
मदीयम् ।
अज्ञानिनर्णेषु शिरोमणित्वं शीघ्रं मयि येन
विनाशितं तत् ॥३॥

महोपकारिणां तेषां, माहात्म्यैः किं विधीयते ।
प्रत्युपकारकर्त्तव्ये, शक्तिलेशो न विद्यते ॥४॥
तुम्मकृतिर्मदीयाऽतः गुरूणां पादपङ्कजे ।
अर्प्यते हि भावेन, स्वीकारा क्रियतां प्रभो ॥५॥

## प्रस्तावना मङ्गलाचरणम् ।

श्रीवीरदेवे जगदीश्वरत्वं
परेषु तल्लेशत्वं न विद्यते ।
रागित्वद्वेषित्वरूपं च तत्र
ईशस्वरूपे प्रतिपादितं तत् ॥१॥

यतो हि त्वत्तः न परः प्रभुः स्यात्
ततः श्रयन्ते त्वामेव योगिनः ।
विशुद्धभावेन श्रीवीरदेवं
नमामि नित्यं जगदीश्वरं तम् २

श्रीधर्मसूरिं च हृदि निधाय
योगप्रदीपे च वक्तव्यमादौ ॥
वितन्यते योगविकाशरूपं
कृपया च स्खलनां संसूचयन्तु ॥४॥

दीक्षाकालं समारभ्य, योगेच्छा परिवर्धते ।
सामग्रीविरहेणैव, तत्पूर्त्तिर्नैव जायते ॥४॥
संस्कृतज्ञानशून्ये च, योगज्ञानं कथं भवेत् ।
अतः संस्कृतग्रन्थानां, पठनं सुन्दरं खलु ॥५॥

गुरुदेवं विना नैव, काश्यां गन्तुं च शक्यते ।
पूर्णरूपेण साहाय्यं, तेषामत्रैव सम्मतम् ॥६॥
साधुछात्रेण सार्धं च, गुरूणां गमनं शुभम् ।
गत्वा व्याकरणादीनां, प्रारब्धं पठनं मया ॥७॥
न्यायसाहित्यपाठोऽपि, प्रत्यहं परिजायते ।
परीक्षां दातुमिच्छापि, जाता गुरुनिदेशतः ॥८॥
पातञ्जलीययोगस्य, पठनं तत्र सम्मतम् ।
तदर्थं बङ्गदेशीयः, पण्डितोऽपि समानीतः ॥९॥
तेनाऽपि योगशास्त्रं च, पाठितं चारुरूपतः ।
तत्रापि खलु शङ्कायाः, समाधानं न जायते ॥१०॥
चित्तवृत्तिनिरोधश्च, योगस्य लक्षणं यदि ।
तदा तु बहुदोषत्वं, प्रदीपे प्रतिपादितम् ॥११॥
अन्यग्रन्थे च शङ्कायाः, समाधानं न विद्यते ।
तं विना नैव तज्ज्ञानं, निःशंकं जायते मम ॥१२॥
योगशास्त्रीयटीकानां, सर्वासां प्रविलोकने ।
कृतं प्रायेण तत्रापि, समाधानं च नो भवेत् ॥१३॥
भगवद्धेमचन्द्राणां, सूरीणां योगशास्त्रके ।
प्रोक्तं शुद्धस्वरूपं च, लक्षणं सूरिणा तदा ॥१४॥

मदीयभाग्यदोषेण, मद्धृदये च नागतम् ।
अङ्गानां लक्षणं प्रोक्तं, पूर्वपद्धतितः खलु ॥१५॥
अतस्तत्रापि तच्छङ्का, समाधानं न जायते ।
योगदृष्टौ च योगस्य, स्वरूपं दृष्टिरूपतः ॥१६॥
अष्टदृष्टिस्वरूपेण, अष्टाङ्गस्य निरूपणम् ।
कृतं विशुद्धभावेन, हरिभद्रेण सूरिणा ॥१७॥
योगविंशतिका ग्रन्थे, अपि तत्रैव दर्शितम् ।
अतः शङ्का समाधानं, कथं ततः प्रजायते ॥१८॥
अपूर्ववर्णनं तत्र, योगस्य नव्यशैलितः ।
आत्मस्पर्शि भवेज्ज्ञानं, योगदृष्ट्यादि शास्त्रतः १९
पातञ्जलीययोगस्य, शङ्कासमाधिकारिका ।
एकाऽपि तादृशी टीका न दृष्टा कुत्रचिन्मया ।२०।
अन्वेषणे च कर्त्तव्ये, विज्ञजनस्ययोगतः ।
एका टीका च सम्प्राप्ता, उपाध्यायकृता खलु ॥२१॥
सम्पूर्णभाग्ययोगेन, तट्टीका परिदर्शनम् ।
संजातं मर्मस्पर्शित्वं, पूर्णरूपेण तत्र वै ॥२२।

१ पूज्यपादयशोविजयोपाध्यायैः

लक्षणं सुन्दरं तत्र, योगस्य प्रतिपादितम् ।
निर्दोषं सर्वथाशुद्धं, विशुद्धाचारदर्शकम् ॥२३॥
समितिगुप्तिमुख्यत्वव्यापारो यत्र विद्यते ।
स एव योगधर्मः स्याद्धर्मव्यापारनामतः ॥२४॥
निरवद्यश्च यः कोऽपि, व्यापारो धर्मपोषकः ।
प्रतिक्रमणसत्पाठपूजासामायिकात्मकः ॥२५॥
सर्वस्मिन् तत्र योगत्वं, योगलक्षणयोगतः ।
सन्ध्यावन्दनकार्ये च, अन्यथा नैव योगता ॥२६॥
योगस्याऽभावता तत्र, कथं त्वया विधीयते ।
दशादाडिमवत्सर्वा, निष्फला न कथं भवेत् ॥२७॥
धर्मव्यापाररूपे च, लक्षणे स्वीकृते सति ।
निर्दोषव्यापृताऽऽख्ये च, लक्षणं घटते खलु ॥२८॥
चित्तवृत्तिनिरोधे वै, लक्षणे नैव शुद्धता ।
योगांगे नैव कुत्रापि, लक्षणं घटते तथा ॥२९॥
सर्वत्र चित्तवृत्तित्वं, लक्षणे नैवशुद्धिता ।
प्रायोऽसंभवरूपं तत्, लक्षणं परिकीर्त्तितम् ॥३०॥
सर्वशब्दत्वसंयोगे, लक्षणे शुद्धता न हि ।
योगस्य लक्षणं तस्माच्छुद्धं जैनैर्निरूपितम् ॥३१॥

यशोविजयटीकासु, विशुद्धलक्षणं मतम् ।
तत्रैव संशयाऽभावः, सर्वथा परिजायते ॥३२॥
पुनः पुनश्च टीकायाः, दर्शनं च कृतं मया ।
तदा च स्पष्टरूपेण, सम्प्राप्तं योगलक्षणम् ॥३३॥
सम्यग्योगस्य कर्त्तव्यं, सम्यग्ज्ञानेन संमतम् ।
सम्यग्ज्ञानाच्च रागादिक्षयश्च सर्वथा खलु ॥३४॥
योगस्य पालनेनापि, न भवेद् मोहमन्दता ।
रागद्वेषादिसामग्री, यत्र प्रत्युत वर्धते ॥३५॥
तत्र योगो न मन्तव्यः, दम्भता किन्तु तत्र वै ।
भोगबाहुल्यसामग्री, योगस्तत्र कथं भवेत् ॥३६॥
यत्र विशुद्धयोगत्वं, पूर्णवैराग्यवासना ।
चारित्रं समतारूपं, तत्रैव सर्वथा मतम् ॥३७॥
शत्रौ मित्रे तृणे स्त्रैणे, लोहाऽश्मनि मणौ मृदि ।
मोक्षे भवे च सर्वत्र, समभावविधापनम् ॥३८॥
बाह्याडम्बरलेशोऽपि, कीर्त्तिलोलुपता न हि ।
लोकरञ्जनकर्याणि, न सन्ति यत्र लेशतः ॥३९॥

*१ पंण्डिवर्य सुखलालजीकृतयोगदर्शनपुस्तकमपि अतीव-सहायकारी मन्तव्यं ।*

तत्रैव योगरूपत्वं, आत्माभिमुखता सदा ।
निन्दकेस्तावके चैव, वर्तते समभावना ॥४०॥
विशुद्धाचार्यवर्येषु, योगिषु पाठकेषु च ।
सार्वाज्ञा दृढभावेन, शमभावश्च सर्वदा ॥४१॥
यादृशः परिदृश्येत, तादृशश्च परेषु न ।
यथाऽऽचार्यादिपूज्यानां, लक्षणं जैनदर्शने[1] ॥४२॥
ऋषिणा वेदव्यासेन, प्रोक्तं कूर्मपुराणके ।
दर्शितं तादृशं तत्र, अत्रापि प्रविधीयते ॥४३॥
आचाराङ्गादिकाङ्गानां, एकादशाऽभिधावताम्[2] ।
पाठादिकार्यकर्त्तृणामुपाध्यायकता मता ॥४४॥
मुनिसंघेषु मध्ये च, प्रायश्चित्तविधापनम् ।
रक्षणादिककार्यं च, येनैव प्रविधीयते ॥४५॥
विशुद्धाऽऽचार्यता तत्र, कूर्मपुराणशास्त्रतः ।
विचारोऽप्यत्र कर्त्तव्यः बुध्यनुसारतः खलु ॥४६॥
आचारांगादिशास्त्राणि, परत्र सन्ति नैव च ।
तेषामङ्गत्वनामापि, अन्यत्र दृश्यते नहि ॥४७॥
वेदाङ्गानि च षट् तत्र, एकादश न सन्ति वै ।
शिक्षाकल्पौ च ज्योतिष्कं, छन्दोव्याकरणे तथा ॥

१ योगाङ्के ५४५ पृष्ठे ।

निरुक्तिश्च षडेवात्र, वेदाङ्गानि च वैदिके ॥
आचाराङ्गादिशास्त्राणामङ्गत्वं नैव कीर्त्तितम् ।४६॥
यत्र तेषां च नाङ्गत्वं, पठनं-पाठनं कुतः ॥
तेन विना न वक्तव्यः, उपाध्ययस्तु तन्मते ॥५०॥
जैनदर्शनशास्त्रे च, आचाराङ्गादिपाठनम् ॥
पठनं साधुभिः सर्वैः, क्रियते सर्वदा तथा ॥५१॥
तेषां च पाठकानां, वै उपाध्यायपदं मतम् ॥
अन्येषां पाठकानां, च तत्पदं नैव सम्मतम् ॥५२॥
अतो हि जैनशास्त्रानुसारेण, तत्र जल्पनम् ॥
ऋषिणा सत्यरूपेण, कृतमिति च मन्यताम् ॥५३॥
तद्दृदिशुद्धजैनत्ववासना विद्यते यका ॥
तया च तेन तत्रैव, शुद्धरूपं प्ररूपितम् ॥५४॥
हठयोगादियोगेष, केवलं लोकरञ्जनम् ॥
आत्मशुद्धित्वलेशोऽपि, विद्यते न कदाचन ॥५५॥
नोलिधौत्यादिकर्त्तव्ये, बस्तिक्रियादिके तथा ॥
कष्टं शारीरिकं तत्र, आत्माभिमुखता नहि ॥५६॥
आत्मशुद्धिविधातव्ये, एष मार्गो न कीर्त्तितः ॥
संवरनिर्जरारूपः विशुद्धः परिवर्णितः ॥५७॥

कर्मागमनिरोधश्च, संवरेण विधीयते ।
प्राचीनकर्मशाटश्च, निर्जरातः प्रजायते ॥५८॥
अहिंसासत्यमस्तेयं, सन्तोषो ब्रह्मचर्यकम् ।
कर्मजलतटाकाच्च, कर्मजलनिरोधनम् ॥५९॥
क्रियते यमयोगेन, जलाऽऽगतिनिरोधनम् ।
तपोध्यानादिद्वारेण, प्राचीनकर्मशाटनम् ॥६०॥
तत आत्मप्रदेशेभ्यः, निष्कासनं विधीयते ।
संवरात्कर्मनैरोधः, निष्कासो निर्जरादितः ॥६१॥
ततश्च शुद्धरूपत्वं, आत्मन्येव प्रजायते ।
मोक्षः स एव मन्तव्यः, विशुद्धो जैनशासने ॥६२
अतोऽन्यदीययोगेन, मोक्षप्राप्तिश्च नो भवेत् ॥
स्वरूपे भ्रान्तिरूत्वाद् भ्रान्तं, च प्रतिपादितम् ॥६३
सर्वज्ञशुद्धरूपत्वं यत्र, योगे न वर्णितम् ।
तं विना ध्यानसद्भावः, नागच्छति कदाचन ॥६४॥
विना ध्यानेन चिच्छुद्धिः, जायते नैव कर्हिचित् ।
कर्मापगमशून्येन, मलहानिश्च नो भवेत् ॥६५॥
शुद्धदृष्ट्या विचारे तु, जैनानां नैव दोषता ।
सर्वनयावलम्बित्वं, जैनशासनसम्मतम् ॥६६॥

सम्यग्दृष्टिमनुष्याणां, यस्य कस्यापि शास्त्रकम् ।
यद्धस्ते च समायाति, तत्सर्वं शुद्धरूपकम् ॥६७॥
मिथ्यादृष्टिमनुष्याणां, विशुद्धमपि शास्त्रकम् ।
परिणमति मिथ्यात्वरूपेण, दोषदृष्टितः ॥६८॥
अतो मिथ्यात्वसद्भावः, यस्य हृदि च विद्यते ।
विशुद्धयोगसद्भावः, तस्यापि दुर्लभो मतः ॥६९॥
महाव्रतं विना नैव, योगमार्गस्तु लभ्यते ।
नवकोटिस्वरूपेण, अन्यत्र न प्ररूपणम् ॥७०॥
अहिंसादियमानां च, न विशुद्धनिरूपणम् ।
जैनदृष्टिं विनाऽन्यत्र, कदापि दृश्यते खलु ॥७१॥
नवकोटिविशुद्धं च, महाव्रतस्य पालनम् ।
तदपि नैव कुत्रचिज्जैनदृष्टिं विना भवेत् ॥७२॥
स्थावरजीवजन्तूनां, पालनं नैव कुत्रचित् ।
अन्यत्र भक्षणं तेषां, बाहुल्येन निगद्यते ॥७३॥
जैनेतरीयसाधूनां, चानन्तकायभक्षणम् ।
अतीव प्रेमरूपेण, जायते सर्वदा किल ॥७४॥
साधुषु तादृशं तर्हि, गृहस्थानां तु का कथा ।
अतो यमस्य शून्यत्वं, सर्वथा तत्र विद्यते ॥७५॥

काष्टोपानहाचैव, त्रसजीवस्य पीडनम् ।
बाहुल्येन प्रजायेत, ततो यमस्य शून्यता ॥७६॥
मृषावादस्वरूपस्य, यदि ज्ञानं न विद्यते ।
तदा कथं च सत्यत्वं, पाल्यते तादृशैर्जनैः ॥७७॥
अग्निकायसमारम्भः, बहुविधेन दृश्यते ।
अप्कायस्य समारम्भः, दिवानिशं च तत्र वै ॥७८
वायुकायसमारम्भः, व्यजनेन विधाप्यते ।
वनस्पतेस्तु का वार्त्ता, सर्वथा सर्वदा किल ॥७९॥
अतस्तेषु न साधुत्वं, महाव्रतस्य शून्यतः ।
योगित्वस्य तु का वार्ता, यमाभावेन ज्ञायताम् ॥
यमस्य सर्वथाऽभावे, नियमस्यापि शून्यता ।
अग्रे च योगसामग्री, तत्पार्श्वे नैव तिष्ठति ॥८१॥
योगाभावे च योगित्वं, कथं परैर्निरूप्यते ।
पालनं शुद्धयोगानां, यत्र तत्रैव योगिता ॥८२॥
जैनदर्शनशास्त्रं च, सर्वथा योगरूपकम् ।
अहिंसा संयमानां च, निरूपणं पदे पदे ॥८३॥
आत्मविशुद्धमार्गेण, विनाऽन्यन्नैव दृश्यते ।
सर्वज्ञतामनन्तॄणामधःपातःपदे पदे ॥८४॥

क्षणिकशून्यता यत्र, सर्वथा परिदृश्यते ।
तत्रापि नैव योगत्वं, यमादीनामभावतः ॥८५॥
कथंचिदात्मनो नित्यानित्यत्वं यैश्च स्वीकृतम् ।
सदसद्रूपता यत्र, तत्रैव शुद्धयोगता ॥८६॥
द्रव्यपर्यायवत्त्वं च, तत्त्वं यत्र निरूपितम् ।
तत्रैव शुद्धयोगत्वमन्यत्र नैव दृश्यते ॥८७॥
सर्वदर्शनशास्त्राणामध्ययनं कृतं मया ।
गुरुदेवस्य सामीप्ये, काश्यां निवसता खलु ॥८८॥
ततोऽनु गुरुदेवानां, निकटे योगशास्त्रकम् ।
अन्येऽपि योगग्रन्थाश्च, पठिता बहुप्रेमतः ॥८९॥
गुरुकृपाकटाक्षेण, योगाध्ययनकं कृतम् ।
यावज्ज्ञानं गुरोश्चैव, आगतं मम पार्श्वके ॥९०॥
तावत्ततः समादाय, पश्चादनुभवः कृतः ।
ततोऽनुभवयोगेन, यत्प्राप्तं तन्निरूपितम् ॥९१॥
योगप्रदीपशास्त्रस्य, निर्माणं च यतः कृतम् ।
तत्सहायकग्रन्थानां, नामोल्लेखो विधीयते ॥९२॥
योगद्वात्रिंशिकायोगविंशतिका तथा खलु ।
योगशास्त्रं च योगदृष्टिसमुच्चयशास्त्रकम् ॥९३॥

अध्यात्मसारशास्त्रं च, शास्त्रवार्त्तादयस्तथा ।
तत्त्वार्थसूत्रवृत्तिश्च, ज्ञानार्णवश्च पुस्तकम् ॥९४॥
अध्यात्मोपनिषच्चैव, ज्ञानसाराष्टकं तथा ।
अष्टकं हारिभद्रीयं, देवधर्मपरीक्षणम् ॥९५॥
पातञ्जलीययोगश्च, भोजवृत्त्यादिकं तथा ।
भाष्यं च योगसूत्रीयं, हठयोगस्य दीपिका ॥९६॥
इत्याद्यनेकग्रन्थानां, सहायेन कृतः खलु ।
योगप्रदीपग्रन्थश्च, युक्तियुक्तया निरूपितः ॥९७॥
महाग्रन्थे च तादृक्षे, निर्माणे कौशलं नहि ।
अतश्च त्रुटयो बह्व्यः, सन्ति मम प्रमादतः ॥९८॥
अथवाऽज्ञानदोषेण, नाश्चर्यं तत्र विद्यते ।
कृपां कृत्वा च सन्तस्तु, सूचयन्ति स्वभावतः ॥९९
पुनरावृत्तिकर्त्तव्ये, लभन्ते चोपयोगताम् ।
अतः कृपां विधायैव, सज्जनाः सूचयन्तु वै ॥१०
महोपकारिसूरीणां, गुरूणां कृपया खलु ।
ग्रन्थस्यपूर्णताज्ञेया, प्रशस्त्यादिनिरूपणात् ॥१०१
मादृशां पशुप्रायाणां, तादृग्ज्ञानं कुतो भवेत् ।
गुरुदेवप्रसादेन, सर्वकार्यं प्रजायते ॥१०२॥

गुरो ! त्वदीयसेवाऽपि, मन्दभाग्येन मादृशैः ।
पूर्णरूपेण नो प्राप्ता, तत्रान्यन्नैव कारणम् ॥१०३॥
परोक्षत्वत्कृपायाश्च, फलं प्राप्तं तु पूर्णतः ।
योगप्रदीपग्रन्थश्च, यतो मया विधीयते ॥१०४॥
भवान्तरेऽपि चारित्रप्राप्तिं, विना न याच्यते ।
इति जिनेन्द्रदेवाग्रे, मदीया प्रार्थना खलु ॥१०५॥

—

# योगप्रदीपे विषयनिरूपणाख्यं परिशिष्टम्।



प्रथमे खलु योगांगे, मार्गानुसारितः किल।
सर्वदेशव्रतानां च, सम्यग्दर्शनवस्तुनः ॥१॥
अतिचारस्य वक्तव्यं, मोक्षस्य शुद्धरूपतः।
स्वरोदयस्य सज्ज्ञानं, ईश्वरस्य निरूपणम् ॥२॥
जगत्कर्तृत्वनैषेधः, मूर्त्तेर्ध्यानोपयोगिता।
इत्यादि वर्णनं तत्र, कृतं संक्षेपरूपतः ॥३॥
नियमे शौचसन्तोषस्वाध्यायतपस्तथा।
ईश्वरप्रणिधानं च, द्रव्यभावप्रभेदतः ॥४॥
वर्णितं तत्र विज्ञेयं, सार्वशास्त्रानुसारतः।
भेदप्रभेदरूपाणां, वर्णनं च कृतं तथा ॥५॥
तृतीये खलु योगाङ्गे, आसनस्य निरूपणम्।
पद्मासनादिभेदानां, स्वरूपं परिदर्शितम् ॥६॥
मुद्राणां बहुभेदानां, वर्णनं योगशास्त्रतः।
जैनशास्त्रानुसारेण, विशुद्धं परिदर्शितम् ॥७॥

चतुर्थे तत्र योगांगे, प्राणायामनिरूपणम् ।
रेचकपूरकानां च, कुम्भकानां तथैव च ॥८॥
सूक्ष्मतासमतानां च, लीनतैकत्वयोस्तथा ।
द्रव्यभावप्रभेदेन, बाह्याऽभ्यन्तररूपतः ॥६॥
तथा तेषां च भेदानां, आत्मनि केन रूपतः ।
सम्बन्धता प्रजायेत, तदपि परिदर्शितम् ॥१०॥
स्वरोदयप्रसङ्गेन, तत्र विशेषरूपतः ।
दर्शितो भव्यजीवानां, हठयोगनिषेधनम् ॥११॥
दोषता हठयोगे स्याद्, लाभस्तु नैव किञ्चन ।
केवलं भवभ्रान्तित्वं, तदपि तत्र दर्शितम् ॥१२॥
प्रत्याहाराख्ययोगाङ्गे, इन्द्रियमनसां तथा ।
विषयेभ्यो निवृत्तित्वं, दर्शितं स्पष्टरूपतः ॥१३॥
अन्यथा बहुदोषत्वं, दुर्गतिगमनं तथा ।
प्रश्नोत्तरस्वरूपेण, वर्णनं परिकीर्त्तितम् ॥१४॥
धारणायां क्वचिद्ध्येये, चित्तस्य स्थिरबन्धनम् ।
येन रूपेण कर्त्तव्यं, तदपि ज्ञापितं मया ॥१५॥
चित्तस्य ध्येयरूपस्य, स्वरूपं प्राक् प्रदर्शितम् ।
अत्र किल प्रसङ्गेन, वर्णितं स्पष्टरूपतः ॥१६॥

सप्तमे चैव योगाङ्गे, ध्यानस्यैव निरूपणम् ।
आर्त्तरौद्रस्य भेदानां, दुष्टध्यानत्वदर्शनम् ॥१७॥
धर्मशुक्लस्य भेदानां, मोक्षहेतुत्ववर्णनम् ।
ध्यानशुक्लस्यभेदानां, शिवसाधकतादृढा ॥१८॥
परेषां ध्यानभेदत्वे, सदोषत्वप्ररूपणम् ।
तत्सर्वं स्पष्टरूपेण, दर्शितं बोधहेतवे ॥१९॥
चतुर्भेदाख्यशुक्लस्य, सम्प्रज्ञातस्वरूपतः ।
पूर्वौ तौ द्वौ च भेदौ हि, प्रोक्तौ च योगसप्तमे ॥२०
उत्तरौ द्वौ च भेदौ तौ, असम्प्रज्ञातरूपतः ।
वर्णितौ परिज्ञातव्यौ, जैनशास्त्रानुसारतः ॥२१॥
विषयवर्णनं सूक्ष्मं, दर्शितं योगदीपके ।
विस्तृतवर्णने कार्ये, विस्तारोऽत्र प्रजायते ॥२२॥
संक्षेपरुचिजीवानां, योगज्ञानस्य हेतवे ।
संक्षेपतश्च सम्प्रोक्तं, सर्वं योगप्रदीपके ॥२३॥
अतस्तदनुसारेण, द्रष्टव्यं योगदीपकम् ।
अवान्तरविभागानां, ज्ञानं च परिजायते ॥२४॥
अन्यदर्शनयोगानां, वर्णनं तुलनात्मकम् ।
कथितं तत्र ज्ञातव्यं, योगज्ञानं चिकीर्षता ॥२५॥

इति

शास्त्रविशारदजैनाचार्यपूज्यपादगुरुदेवश्रीविजय-
धर्मसूरीश्वरशिष्येण न्यायविशारदन्याय-
तीर्थोपाध्यायमंगलविजयेन विरचिते
योगप्रदीपाऽऽख्य योगशास्त्रे
प्रस्तावनाविषयविभागवर्णनं
समाप्तम्

---



उपाश्रय व मन्दिरका मकान।

श्री ( गुजराती ) जैन श्वेताम्बर तपगच्छ संघ नं० ९६ केनिंग स्ट्रीट,

कलकत्ता।

॥ ॐ अर्हं ॥

योगप्रदीपग्रन्थसहायककालिकातीय गौर्जर-तपोगच्छीयसंघमहाशयानां तथा बोथरा गोत्रीय श्रेष्टिवर्योदयचंद्राख्यश्रावकाणामौदार्य प्रदर्शनम् ।

कालिकातातपोगच्छे, श्रावकाणां शिरोमणिः ।
संघाग्रिणी गुणैः श्रेष्ठः, ज्येष्टालालाभिधानकः ॥१॥
तस्य स्वर्गगतेऽप्येवं, तत्पुत्राः पितृ सादृशाः ।
धैर्यौदार्यगुणैर्युक्ताः, सर्वदा [illegible] ॥२॥
व्यवहारे सदा दक्षः, गुर्वाज्ञायां च तत्परः ।
प्राणजीवननामाख्यः, कनिष्टः सद्गुणैर्युतः ॥३॥
याद्दग्जल्पति ताद्दक्षं, कार्यं करोति तत्क्षणे ।
बेलव्यस्यावकाशो न, तस्य स्वान्ते विराजते ॥४॥
बेधूतमताऽ[illegible]षु सर्वदा खलु,
[illegible]पिपतिता सर्वैः, सम्मील्य क्षिप्यते भ्रमम् ॥५॥

हस्तिना हस्तिभारो हि, चोह्यते नान्यप्राणिभिः ।
इति विचार्य संघाग्रै दत्ता तेभ्यश्च स्वामिता ॥६॥
योगप्रदीपशास्त्रस्य, मुद्रापणोपदेशनम् ।
स्वीकृतं तत्कनिष्ठेन, प्राणजीवनबन्धुना ॥७॥
तत्क्षणे गुरुणा तत्र विचार्य मानसे निजे ।
प्रोक्तं तस्यैव नैकश्ये, श्रूयतां वचनं मम ॥८॥
भवतां संघ हट्टेषु, ज्ञानद्रव्यं च विद्यते ।
यदि संघस्य चेच्छा चेत्तत्र गत्वा प्रबुध्यताम् ॥९॥
संघसार्थं च सम्मील्य, ज्ञापितं बोधवाचिकम् ।
योगप्रदीपशास्त्रस्य, मुद्रापणं वरं मतम् ॥१०॥
हस्तागतो महान् लाभः, कथं संघैर्निषिध्यते ।
केशवादिमहाभागैः[1] स्वीकृतं वचनं तदा ॥११॥
प्रफुल्लितस्वान्तेनैव, आगत्य गुरु सम्मुखे ।
संघवक्तव्यता तत्र, ज्ञापिता शुद्धभावतः ॥१२॥
योगप्रदीपशास्त्रस्य, पञ्चशतं च संख्यकम् ।
पुस्तकं शुद्धभावेन, गृह्यते संघपुंगवैः ॥१३॥

१—श्रेष्ठिवर्य केशवजी भाइ, हेमचन्द्र भाइ छगनलाल भाइ प्रभृति

गुरुणा चैव तत्कार्यं, कृतं श्रुत्वा च तत्क्षणे ।
दत्वा च धर्मलाभं वै, तेभ्यस्तत्रोपदेशनम् ॥१४॥
विशुद्धधर्मकार्येषु, सर्वदा सन्तु तत्पराः ।
संगठनं सदा कार्यं, सर्वैः साकं च प्रेमतः ॥१५॥
ज्ञानादिद्रव्यवस्तूनां, कुर्युः सदोपयोजनम् ।
अतीव रक्षणे क्लेशप्रादुर्भावः प्रजायते ॥१६॥
तथैव देवद्रव्याणां, प्रभूणां मन्दिरे सदा ।
जीर्णोद्धारादिकार्येषु, ह्युपयोगो विधीयताम् ॥१७॥
सम्मील्य धर्मध्यानं च, कर्त्तव्यं धर्मलिप्सुना ।
सराकोद्धारकार्ये च, सहयोगः सदा तव ॥१८॥

श्रेष्टिवर्योदयचन्द्रमहाशयेषु किंचिद्वक्तव्यं

बोत्थरा कुलचन्द्रेण, उदयचन्द्रचारुणा ।
धैर्यौदार्यगुणाढ्येन, धर्मकार्यविधायिना ॥१९॥
त्रिशतं पुस्तकानां वै, मुन्द्रापणं च स्वीकृतम् ।
स्वकीयद्रव्ययोगेन, ज्ञानलाभश्च गृह्यते ॥२०॥
अपूर्वज्ञानलाभोऽयं, मद्गुस्तेषु समागतः ।
कथं विनाश्यते तादृक्, गुणाकांक्षिजनेन वै ॥२१॥

चंचलां च श्रियं दृष्ट्वा निश्चललाभकांक्षिणा ।
शुभावसरतां प्राप्य, सोत्साहेन वितन्यते ॥२२॥
यदा यदा च सत्कार्यावसरो यदि चाप्यते ।
तदा तदा यथायोगं, शुभे यत्नो विधीयते ॥२३॥
श्राद्धभोजनशालायाः, धर्मरक्षणहेतवे ।
उद्घाटने प्रयत्नोऽपि, विहितो द्रव्यभावतः ॥२४॥
तथैव पाठशालाऽपि, मरुदेशीयपाठने ।
अतीव दृढयोगेन, स्थापिता पुरुषार्थतः ॥२५॥
जैनभवनकार्यार्थं, पुरुषार्थं पुस्फोरितम् ।
सर्वकार्येषु सर्वत्र, प्रोत्साहो विपुलः कृतः ॥२६॥
सर्वदोदयचन्द्रत्वं, त्वयि धर्मेण शोभते ।
गुरूणामुपदेशस्तु, शिरोधार्यः सदा तव ॥२७॥

## श्रेष्ठिवर्य गिरधरलालौदार्यप्रदर्शनम्

राजधन्य निजग्रामा, मोहमय्यां समागमात् ।
विपुलपुण्ययोगेन, संपत्तिश्च समर्जिता ॥२८॥
श्रेष्ठिगिरधरेणैव, व्ययोऽपितादृशः कृतः ।
श्रीसंघादिककार्येषु, अन्येष्वपि तथैव च ॥२९॥

पञ्चाशत्पुस्तकं योगप्रदीपस्य च तेन वै ।
गृहीतं शुद्धभावेन, साधूनामुपदेशतः ॥३०॥
सराकस्य समुद्धारे, पावापुर्यां यदागतः ।
तदा तैनैव यदुक्तं, तदनुकरणं वचः ॥३१॥
यावन्तः श्राद्धवर्याश्च, अत्रागताश्च भावतः ।
तत्सर्वेषां च यद्द्रव्यं, जायते तत्ति मादृशम् ॥३२॥
तत्राऽपि नैव सन्देहः, केन चित्प्रवितन्यताम् ।
तथैव तेन दत्तं वै, धर्मविवृद्धिकांक्षिणा ॥३३॥
राजनगरवास्तव्य, डाह्यालालात्मजेन वै ।
रमणिकेन पंचाशद्, मुद्राणां च सहायकम् ॥३४॥
सर्वचन्द्रसुपुत्रस्य, हेमचन्द्रस्य यत्नतः ।
प्रकाशनात्मकं कार्यं, शुभभावेन जायते ॥३५॥

—लेखको व्याकरणतीर्थ सोमचन्द्रः



# योग प्रदीपः

## विषयविभागः



## योगप्रदीप ग्रन्थके छपाई आदिका खर्च

| | रु० | आ० | पा० |
|---|---|---|---|
| कागज | ३५१ | ७ | ६ |
| छपाई | ५२६ | ४ | ० |
| जिल्द बंधाई | १४० | ० | ० |
| प्रेसकापी व प्रूफ-संशोधन | १२६ | ० | ० |
| उपाश्रयका फोटो व ब्लाक बनवाई | १२ | १५ | ० |
| कुल जोड़—रु० | ११६४ | १० | |

# योग प्रदोपः

## विषयविभागः

योगप्रदीप :



न्याय विशारद् न्याय तीर्थोपाध्याय

श्री मङ्गलविजयजी महाराज

* नमो नमः श्रीप्रभुधर्म्मसूरये *

# आर्हत धर्म्म प्रदीपः ।

## ( योग प्रदीपः )

—:*:*:*:—

### प्रथम प्रकाशः

॥ मङ्गलाचरणम् ॥

सम्मेतशैलशिखरे—समता—रसेन,
योगावरोधनमितं प्रभुपार्श्वनाथैः ।
तीर्थंकरैरपरकैर्मुनिपुङ्गवैश्च,
लब्धं सनातनसुखं खलु तान्प्रवन्दे ॥१॥

वन्दे श्रीपार्श्वदेवेशं, सम्मेतशिखरे स्थितम् ।
वन्दितं वै त्रिलोकैश्च, जगदुद्धारकारकम् ॥२॥

पावापुर्यांञ्च निर्वाणं, प्राप्तं येन सुखावहम् ।
श्रीवीरस्वामिनं वन्दे, त्रिलोकीजनपूजितम् ॥३॥

गौतमाद्यैर्गणाधीशैः, मुनिपुङ्गवनायकैः ।
त्रिपदीं प्राप्य वै वीरात्, रचितं दृष्टिवादकम् ॥४॥

नत्वा मुनिवरेन्द्रांस्तान्, धर्म्मसूरिं गुरुं तथा ।
ग्रन्थं कुर्वे यथा मत्याऽऽर्हतधर्म्मदीपकम् ॥५॥

## प्राथमिक वक्तव्यम् ।

तापत्रयेणरहित ! प्रभुवीतराग !,
सध्ध्यानकालिकहृदि प्रविशेर्मदीये ।
पुंवेदकर्म्मसहितां विरतिं प्रदेहि,
यावन्न याति शुभमुक्तिपदं न तावत् ॥१॥

नार्थामहे तदपरं खलु चान्यवस्तु,
संसारभ्रान्तिमखिलामपनेतुमीहे ।
मिथ्यात्वपोषक[१]कषायप्रमादयोगान्,
त्यक्तुं प्रपंचसहितान्खलु मे समीहा ॥२॥

तज्जं दुक्खं च भुवने बहुभेदभिन्नम्,
वक्तुं[२] तथैव खलु कर्म्मकृतश्च बाढम् ।
प्रच्छन्न—दुश्चरितकस्य फलं हि चैतत्,
भुक्तं तथाऽपि न लभे खलु तन्निवृत्तिम् ॥३॥

सम्यक्त्वयुक्तसविकाशि प्रदेहि ज्ञानम्,
त्यागं पुनर्निखिलदोषप्रचारमुक्तम् ।

१ मिथ्यात्वा विरति २ वक्तुमनीशं

भावत्रयेण प्रकटी भवति स्वरूपं,
खेदस्ततो भवति वै न च पूज्यभावः ॥४॥
साम्यं ममत्वरहितं प्रकटं ततः स्यात्,
मैत्र्यादि भाव इति तत्समये सुरूपः ।
ध्यानाग्निना निखिलकर्म्ममलं विदाह्य,
शुद्धस्वरूप—परमं प्रविकाशनीयम् ॥५॥
अस्मिन्नपारभुवने नृभवो ह्यसाध्यः,
प्राप्तोमुहुर्विषयसर्पविषेण दृष्टः ।
सद्भावप्राप्तिरनिशं सुगुरुप्रसादात्,
जायेत सा तदपरा शिवमार्गशुद्धिः ॥६॥
मोक्षाख्यमार्गगमने प्रयतं विधेहि,
भद्राप्तये खलुतरः[1] सुप्रकाशनीयम् ।
कैवल्यभावप्रकटे प्रकट स्वरूपम्,
योगावरोधनिरितौ[2] शुभतूर्य्यध्यानम् ॥७॥
चतुर्थध्यानज्वलनेन दग्ध—
मघातिकर्म्मप्रकटस्वरूपम् ।

---

१ पुरुषार्थः, २ निवृत्तौ,

लोकाग्रगन्तिस्तत आशु स्याद्वै,
दृष्टान्ततूर्य्य[१] प्रविभावनीयम् ॥८॥
सम्पूर्णकर्म्म—रहिते किल मुक्तिभावः;
जातिजरामरणताऽत्र प्रवेशशून्या।
एकान्ततो हि प्रमदो[२] नहि दुःखलेशः;
नैवागतिर्पुनरपि प्रविभावनीया ॥९॥
मुक्तिं गते भुवन[३] आगमनं यदा वै,
वन्ध्यातदा किमपि भो प्रसवं न कुर्य्यात्।
कार्य्यं भवेत्खलु यदैव निमित्तशून्यं
जातस्तदा जगति कारणताविलोपः ॥१०॥
संयोजनं न यदि यत्र [४]प्रसूतिजेन,
नानन्तरं पतनता प्रविभावनीया।
कांक्षा[५] समाश्रव[६] वियुक्तमतो सदैव;
जायेत सिद्धस्वरूपं मलताविहीनम् ॥११॥
तादृश सुखं ह्यशनरिक्तकके कथं स्यात्?
दृष्टा जनेन सुखता शुभभुक्तिकाले।

१ चतुष्कंः २ सुखरूपः, ३ संसारे ४ दुःखेन, ५ अभिलाषा, ६ संक्लेशः

भुक्तिः किमर्थमितिवै तु समादधस्व;
स्वास्थ्यायभुक्तिरिति वै भुवनेप्रसिद्धा ॥१२॥
स्वास्थ्यंच येषु भगवत्सु सदैव जातं;
रीत्या कया च खलु तेषु प्रकल्पयेस्त्वम्।
रुग्णेषु ह्यौषधमिति सुजने प्रसिद्धम्
स्वास्थ्ये जनेऽपि भुवने नहि कोऽपि दद्यात् ॥१३॥
खेलादिका[1] विषयवासनया जनेऽस्ति;
सम्पूर्णराग रहिते वद सा कथं स्यात् ?।
पामादिरोगसहिते किल कण्डुभावः,
तादृग्गदादि[2] विकले नहि तद्विधानम् ॥१४॥
वेद्यं च हीदृशा सुखं परमात्मभिश्च;
कैवल्यबोधविकले श्रुतिगोचरत्वम्।
पुर्य्याः सुखानुभवता न वनाधिवासे,
तादृश्युदाहृतिरतः परिमर्शनीया ॥१५॥
शर्म्मानु-भूतिविकले यदि मोक्षभावः
पाषाणसदृशजडे स कथं नहि स्यात् ?
लोकेऽपि पुत्रजननीषु न वन्ध्यभावः

१ केलिक्रीडो, २ रोगादि।

ज्ञानादिगौणरहिते न च मुक्तिभावः ॥१६॥

पदार्थनिरूपणम्—

तादृग्जिनेन कथिता द्वयतत्त्ववत्ता,
जीवा जडाश्च सकले जगति प्रसिद्धाः ।
जीवस्वरूपमिति वै उपयोगवत्वं,
ज्ञानादिगौण[1]सरूपं प्रविभावनीयम् ॥१॥
जीवाद्विधा निगदिताः खलु शुद्धबद्धाः,
मुक्तस्य मोचन [2]भवाद्वयी तत्ववत्ता,
संरोधनिर्जर इति प्रविचारणीये,
हिंसासमाश्रवनिरोधकसंवरश्च ॥२॥
ध्यानादिना च परिशाटन-निर्जरा-स्यात्,
मुक्तस्यमोचन निमित्तवती हि सा स्यात् ।
बोधव्यमाश्रवसरूपमिति प्रबो[3]ध्यं,
हिंसादिसाधननिमित्तकर्म्म रूपम् ॥३॥
जीवे तडागसरूपे जलकर्म्मरूपं,
नैमित्तता खलु समानयनं ह्यनादेः ।

---

१ गुण, २ निमित्तरूपा, ३ विचारणीयम् ।

बन्धेन दुग्धसलिलस्य नयं विचार्य्य,
बन्धस्वरूपमिति वै प्रविधारणीयम् ॥४॥

पदार्थसमासस्वरूपं—

द्रव्य-भाव-प्रभेदेन, संवरो द्विप्रकारकः ।
कर्म्म-पुद्गल-प्रत्तानां, छेदोद्रव्य उदाहृतः ॥५॥
भवहेतुक्रियाणाञ्च, त्यागः स भावसंवरः ।
परमार्थेन विज्ञेयं, मोक्षप्राप्ति निबन्धनम् ॥६॥
सकामाऽकामभेदेन, निर्जराऽपि द्विधा मता ।
सकामा निर्जरा ज्ञेया, संयमिनां प्रधानतः ॥७॥
सोपयोगित्वभावेन, कर्म्मणां परिशाटनम् ।
सकामा निर्जरा सा-स्या-दकामा तु निगद्यते ॥८॥
चतुर्गतिकसंसारे, क्षुधादिसहनादितः ।
अनुपयोग-भावेन, "अकामा" परिजायते ॥९॥
द्रव्य-भावप्रभेदेन, आश्रवोऽपि द्विधामतः ।
सत्कर्म्मपुद्गलादानं, द्रव्याश्रवो निरूपितः ॥१०॥
परिणामो भवेद्यादृक्, हिंसादीनां प्रयोगतः ।
भावाश्रवः स विज्ञेयः, आश्रवाऽऽरोधमिच्छता ॥११॥
चतुस्तत्त्वसहायेन, भिन्ना जीवा उदाहृताः ।

शुद्धाशुद्धप्रभेदेन, जीवा द्वेधा निरूपिताः ॥१२॥
सर्वथा कर्म्मनिर्मुक्ताः, प्रोक्ताऽनन्तचतुष्टयाः ।
संपूर्ण बन्धरहिताः, सिद्धेशाः प्रतिपादिताः ॥१३॥
ईश्वरो द्विविधो ज्ञेयः, जीवत्परम मुक्तिकः ।
चतुर्णां घात्यदृष्टानां, सर्वथा क्षयभावतः ॥१४॥
तीर्थंकराभिधानाख्य कर्म्मोदयाः सदेहकाः ।
जीवन्मुक्ताश्च विज्ञेयाः, युक्तानन्तचतुष्टयाः ॥१५॥
घात्यघात्यादिनिर्मुक्ताः, सिद्धाः परममुक्तिकाः ।
आनन्त्यसुखवतित्वं, जीवन्मुक्तेषु नो मतम् ॥१६॥
निरञ्जनाश्च साकाराः, जीवन्मुक्ता उदाहृताः ।
निरञ्जना निराकाराः, सिद्धाश्च परमात्मनः ॥१७॥
अनन्त-शक्तिभिर्युक्ताः, अनन्त-ज्ञानशालिनः ।
अनन्त-दर्शनैर्युक्ताः, स्थैर्य्यचारित्रसंयुताः ॥१८॥
एतच्चतुष्टयं[1] तत्त्वं, विद्यत उभयेष्वपि ।
अनन्तसुखभेदेन, भिन्ना द्वये निरूपिताः ॥१९॥
चतुर्वर्णाश्च ये जीवाः, राग-द्वेषविवर्जिताः ।
सर्वे मुक्तिं गमिष्यन्ति, पक्षपातो न विद्यते ॥२०॥

१ अनन्त-ज्ञान-दर्शन-चारित्र-वीर्य्य ।

पुं-स्त्री-लिङ्गसमायुक्ताः, कृत्रिमाश्च नपुंसकाः ।
सर्वे ते मुक्तिगन्तारः, रागादिरहिता यदा ॥२१॥
चारित्रं मुक्तिहेतुश्च, सम्यक्त्व-ज्ञानशालि च ।
तादृशं विद्यते ह्येषां, गच्छेयुर्नो शिवं कथम् ?॥२२॥
यदि कारणसर्वस्वं, मुक्तेर्नाग्न्यञ्च मन्यते ।
तदा नग्नास्तु गच्छन्ति, मुक्तिं रागसमन्विताः ॥२३॥
रागादि रहितत्वं चे-न्मुक्तेः कारणमीष्यते ।
तदा नग्ना अनग्ना वा, कथं मुक्तिं न प्राप्नुयुः? ॥२४॥
तस्मान्नाशाम्बरे मुक्तिर्न च श्वेताम्बरे मता ।
रागादिरहिते मुक्ति-रिति सर्वं व्यवस्थितम् ॥२५॥
ज्ञानादिगुणहीनत्वं, मुक्तावपि यदीष्यते ।
तदा च तादृशी मुक्तिः पाषाणान्नातिरिच्यते ॥२६॥
अतो गुणविशेषाणां, विच्छेदो नहि सम्मतः ।
विशेषाणां गुणानां वै, आविर्भावो विशेषतः ॥२७॥

## अथ संक्षेपतः पदार्थविचारः—

मुक्तिः क्षणिकवादे न, तत्त्वाख्यानं विचार्यताम् ।
मुक्तिः क्षणिकरूपा चेत्, क्षणनाशेन नश्यति ॥२८॥
अतो ज्ञानाद्वियुक्ता सा, सहिता वै सुखादिभिः ।

मुक्तिः शुद्धस्वरूपा वै, जैनशासनसम्मता ॥२९॥
योगिभिः शर्मसंवेद्यं, परेषां श्रुतिगोचरम् ।
उपमाया अभावेन, व्यक्तं वक्तुं न शक्यते ॥३०॥
समं नृपेण रंकस्य, न क्वचिदुपमीयते ।
मोक्षशर्म्माधिकं सुखं, यत्र स्यात्तत्र मन्यते ॥३१॥
तादृशं शर्मसंसारे, नास्त्युपमीयते कथम् ?
विद्यमानश्च तच्छर्म्मं वक्तुं शक्यं न मानवैः ॥३२॥
सम्यग्ज्ञानक्रियासाध्यं, सुखं मुक्तेर्मनीषिभिः ।
तदर्थं क्रियतां यत्न-श्चान्यद्धूम्रशिखोपम् ॥३३॥

## पदार्थसामान्यलक्षणम्

ध्रौव्योत्पादव्ययेनऽपि, युक्तं तत्त्वं निगद्यते ।
एतल्लक्षण-निर्मुक्तं, तत्त्वं नास्ति जगत्रये ॥३४॥
पूर्वपर्य्यायनाशेन, रूपान्तरोद्भवस्तथा ।
अन्वयिद्रव्ययुक्तेन, उत्पादः स उदाहृतः ॥३५॥
अन्वयाऽप्रच्युतत्वेन, पूर्वरूपवियोजनम् ।
जैनशासनवेद्यैश्च, विनाशः परिभाषितः ॥३६॥
ध्रौव्यं नित्यत्वरूपं हि, लक्षणेनैव लक्ष्यते ।
त्रिभिरेभिस्समायुक्तः, पदार्थः परिकीर्तितः ॥३७॥

## बद्धजीवावस्थाविचारः

नित्या-नित्यत्वसंयुक्ताः, भिन्नाभिन्नाश्च देहतः ।
सामान्याश्च विशेषाश्च, बद्धा जीवा उदाहृताः ॥३९॥
स्वरूपाऽव्ययरूपत्वं, नित्यत्वं प्रणिगद्यते ।
अप्रच्युतमनुत्पन्नं, कौटस्थ्यं नित्यमेव न ॥४०॥
स्वजातित्वापरित्यागाद्रूपान्तरस्य चोद्भवः ।
अनित्यत्वं समाख्यातं, जैनदर्शनवेदिभिः ॥४१॥
भिन्नत्वे स्वशरीरेण, पीडा केषां न काचन ।
ताडनेन यथोष्ट्राणां, गर्दभानां दुःखं न हि ॥४२॥
एकान्ततो ह्यभिन्नत्वे, शरीरस्य विनाशतः ।
आत्मनोऽपि विनाशः स्यात्सर्वाऽनिष्टं प्रजायते ॥४३॥
धर्म्माधर्म्मादिकार्य्याणां, योगाङ्गानां तथैव च ।
परलोकाद्यभावेन, विफलत्वं प्रपद्यते ॥४४॥
भेदोऽभेदश्च सम्बन्धो, देहजीवात्मनोर्मतः ।
क्रियाणाञ्चैव साफल्य-मतोहि मोक्षसाधनम्[1] ॥४५॥
आत्मत्वाऽऽख्यंच सामान्यं, सर्वात्मनि तु विद्यते ।
नृत्वतिर्य्यक्त्व भेदेन, विशेषः परिभाषितः ॥४६॥

---

१ "मोक्षसुखम्" इत्यपि पाठः ।

विवेचनं विशेषेण, योगेन कीर्तयिष्यते ।
योगस्वरूपशुद्धं त-द्वक्तव्यं ज्ञानलिप्सया ॥४७॥

इति शास्त्र—विशारद जैनाचार्य--पूज्यपाद-
विजयधर्म्मसूरिशिष्येण--न्यायविशारद-
न्यायतीर्थ उ० मङ्गलविजयेन विरचिते
आर्हतधर्म्मप्रदीपे सामान्यरूपेण
जीवस्वरूपवर्णननामा
प्रथम प्रकाशः ॥



## योगस्वरूपम्

सामान्यं लक्ष्मयोगस्य, कथ्यतेऽत्र प्रकाशके ।
योगाङ्गानाश्च निर्देशः, क्रियते यमभेदतः ॥१॥
पवित्रयोगशब्दोऽयं, येषां कर्णेऽपि नागतः ।
तेऽपि मनुष्यरूपेण, मन्तव्या हरिणाः सदा ॥२॥
अष्टानामपि योगानां, नामतत्त्वं निरूप्यते ।
यमाश्च नियमाश्चैव, आसनप्राणयामकौ ॥३॥
ध्यानसमाधयः प्रोक्ताः, प्रत्याहारश्च धारणा ।
एतानि योगनामानि, प्रोक्तानि हेमसूरिभिः ॥४॥
धर्म्मव्यापाररूपत्वं, योगस्य लक्षणं विदुः ।
चित्तवृत्तिनिरोधस्तु, नोच्यते दोषदर्शनात् ॥५॥
समितिगुप्तिरूपोहि, धर्म्मव्यापार उच्यते ।
सर्वाऽपि धार्म्मिकी वृत्तिः, धर्म्मव्यापार एव हि ॥६॥
पुण्यसंज्ञानभेदेन, धर्मोऽपि द्विविधो मतः ।
संसारे सुखसम्पत्तिः, पुण्यधर्म्मेण जायते ॥७॥
सम्यगज्ञानक्रियारूपः, द्वितीयो धर्म्म उच्यते ।
सम्यगदर्शनज्ञानेन, सह चारित्ररूपकः ॥८॥
यतोऽभ्युदयनिःश्रेय-स्वरूपो धर्म्म उच्यते ।

वैशेषिकैः समाख्यात, विरोधो नाऽत्र संभव ॥९॥
अहिंसा सत्यमस्तेयं, ब्रह्मचर्य्यापरिग्रहौ ।
एते पञ्च यमाज्ञेया, कथ्यन्ते नियमास्तत ॥१०॥

## अहिंसानिरूपणं

यमानां पञ्चरूपाणां, स्वरूपं प्राक् निरूप्यते ।
ततः क्रमेण चान्येषाम्, विवेचनं वितन्यते ॥११॥
प्रमत्तयोगयोगेन, प्राणिनां प्राणनाशनम् ।
हिंसा भाष्या हि तत्त्वज्ञैः, दुर्गति-गर्त-पातिका ॥१२॥
पूर्वोक्त-लक्षणे जीवे, सा हिंसा परिघट्यते ।
नित्यानित्यत्वमेकान्तं, यत्र सा घटते न हि ॥१३॥
पीडाकर्तृत्वयोगेन, देहस्य व्यपरोपणात् ।
हन्मीत्येनं स्वभावेन[1], हिंसैवमुपद्यते ॥१४॥
एतद्विषययुक्त्यादिं, हरिभद्राष्टके बहुम् ।
विचार्य्या परिहर्तव्या, कल्याणसुखकांक्षिणा ॥१५॥
अभावश्चैव हिंसायाः, अहिंसा परिकथ्यते ।
सर्वदेशप्रभेदेन, द्विविधा परिभाषिता ॥१६॥
सोपयोगपरिणामा-न्नवकोटिविशुद्धिका ।

१ परिणामात् ।

अहिंसा यमिनां ज्ञेया, गृहस्थानां निगद्यते ॥१७॥
हिंसाकरणसंकल्पः, त्रसेषु नैव धार्य्यते ।
निर्दोषित्रसजीवानां, हिंसात्यागोऽनपेक्षया ॥१८॥
वशानां विंशतिः ज्ञेया, संयमिनाञ्च सर्वथा ।
सपादन्तु गृहस्थानां,विज्ञेया धर्म्मकांक्षिभिः ॥१९॥
द्रव्यभावप्रभेदाभ्यां, चतुर्भंगी प्ररूप्यते ।
एका—सा द्रव्यतो हिंसा,भावतो नैव कथ्यते ॥२०॥
ज्ञातव्या भावतश्चैका, द्रव्यतो न निगद्यते ।
द्रव्यतो भावतश्चैव, उभाभ्यामपि नो तथा ॥२१॥
कायचापल्ययोगेन, यमिनां सोपयोगिनाम् ।
या जाता गमने हिंसा, द्रव्येण सा निगद्यते ॥२२॥
हिंसायाः परिणामस्य चाभावे काययोगतः ।
हिंसा या स्यात्तु जीवानां,द्रव्येणसा निरूपिता ॥२३॥
अनुपयोगपूर्वेण, ह्यव्रतीनांच गच्छताम् ।
जीवानां मृत्यभावेऽपि, हिंसात्वं न निवर्तते ॥२४॥
जीवाः पुण्यवशेनैव; तेषां पादेषु नागताः ।
अतो मृतिं न संप्राप्ताः म्रियन्ते चान्यथा ध्रुवम् ॥२५॥
अतोऽत्र भावतो हिंसा, द्रव्यतो नैव गद्यते ।

द्रव्यभावेन हिंसानां, स्वरूपं परिचिन्त्यते ॥२६॥
अनुपयोगपूर्वेण, प्रमत्तयोगभावतः ।
अव्रतीनां प्रयाणेषु, जीवानां मरणे तथा ॥२७॥
या हिंसा किल जायेत, द्रव्यभावस्वरूपिका ।
कथ्यते वीतरागार्यैः, संसाराऽनन्तदर्शिका ॥२८॥
सोपयोगस्वभावेन,अप्रमतत्वयोगतः ।
गच्छतां मुनिराजानां, जाता जीवमृतिर्न वै ॥२६॥
शुद्धाऽहिंसा तु विज्ञेया, द्रव्यभावस्वरूपिका ।
दीपेव मार्गद्रष्ट्री सा, मोक्षं नयति लीलया ॥३०॥
दयारूपंच ज्ञातव्यं, स्वपरयोर्विभेदतः ।
चिदानंदस्वरूपेषु जीवेषु परमार्थतः ॥३१॥
मिथ्यात्वकारणैश्चान्यैः, कर्म्मागमस्वरूपकैः ।
अनादिकालतो जीवाः, भ्राम्यन्ते दुःखसागरे ॥३२॥
रोधो जीवेन तेषांच, चिन्तनीयो मुहुर्मुहुः ।
यथा यष्टि—प्रहारेण, जीवस्य दुःखता भवेत् ॥३३॥
कर्म्मागमनद्वारेण, संसारभ्रमणं दुःखम् ।
यष्टिजं तु क्षणं दुःखं, अनन्तकर्म्मजं दुःखम् ।।३४॥
यष्टि दुःखस्य वैनाशः, स्वल्पकाले प्रजायते ।

कर्म्मदुःखस्य वैनाशः, दुर्लभः प्रणिगद्यते ॥३५॥
कर्मागमनिरोधेन, स्वदया परिपालिता ।
एतद्दयाप्रभावेण, मुक्तिं गच्छन्ति मानवाः ॥३६॥
दीनेष्वार्त्तेषु भीतेषु, रोगिषु पीडितेषु च ।
प्रतिकारपरत्वं यत्, हृदयस्य प्रकम्पनम् ॥३७॥
येन केन प्रकारेण, पीडां हर्तुं चिकीर्ष्यते ।
परदया तु बोधव्या, अहिंसा धर्म्ममिच्छता ॥३८॥
दया द्वयस्वरूपत्वं, मादृशैर्न प्ररूप्यते ।
वक्तुं शक्तेरभावाच्च, कया रीत्या प्ररूप्यते ॥३९॥
सूक्ष्मा हिंसा तु सा ज्ञेया, येषां सहजशात्रुता ।
योगिनां क्षीणमोहानां, दर्शनेन विमुच्यते ॥४०॥

## सत्यस्वरूपनिरूपणं

सतां सम्पूर्णजीवानां, हितं पथ्यं यदुच्यते ।
प्राणिनामानुकूल्यं यत् तत्सत्यमिति गीयते ॥४१॥
पथ्यटन्तो मृगा दृष्टा, पृष्टः पापर्द्धिकैर्जनैः ।
दृष्टा मृगास्त्वया किं भो ! यथातथ्यं निगद्यताम् ॥४२॥
प्रोच्यन्ते यदि दृष्टास्ते, हिंस्यन्ते तैर्दुरात्मभिः ।
तत्सत्यं नैव विज्ञेयं, हिंस्यन्ते येन जन्तवः ॥४३॥

दृष्टस्य जल्पने हिंसा, लुप्यते प्रथमं ततः।
तेनैवं रक्षता सत्य-महिंसा कवलीकृता ॥४४॥
सत्यं जीवानुकूल्यंतद्, व्रतमुक्तं हि ज्ञानिना।
निरुक्तार्थं समालोच्य, वक्तव्यं धर्म्मरक्षता ॥४५॥
तस्मात्तथैव वक्तव्यं, मृगा दृष्टा मया नहि।
द्वितीयं प्रथमं चैव—न्निरुक्तार्थेन रक्ष्यते ॥४६॥
नवकोटि—विशुद्धं तत्, संयमिभिः प्रगृह्यते।
गृहस्थ-ग्रहणा-योग्यं, तस्मात्स्थूलं निगद्यते ॥४७॥
कन्या-गवादि-भूमीनां, न्यासापहरणं तथा।
कूटसाक्ष्यन्त्वलीकंच,जल्पन्ति नहि धार्म्मिकाः ॥४८॥
कन्यया द्विपदानांच, चतुष्पदानामादितः।
कर्तव्यः संग्रहो ह्येवं, व्रतार्थं भवभीरुभिः ॥४९॥
मृषावादे महादोषः, सर्वशास्त्रेषु विश्रुतः।
परत्रदुर्गतेर्हेतुः, ह्यतो नैवं प्रजल्पयेत् ॥५०॥
चण्डालिका कदा काऽपि, दृष्टा भूदेव-भानुना।
जातशंकेन पृष्टा सा, सत्यंभो प्रणिगद्यताम् ॥५१॥
काकमांसं चितापक्वं, ग्रहीतंच त्वया करे।
रजस्वला च प्रत्यक्षम्, शिरः शकृत्करंडिका ॥५२॥

जलभृद्घटहस्ता त्वं, महाऽपवित्रदेहनी।
सिंचसि त्वं, कथं भूमि-मुत्तरन्तु प्रदेहि मे ॥५३॥
असत्य-परदारेषु, लम्पटा ये जना मताः।
तेषां पदांच संस्पर्शा—दपुण्या बालुका गताः ॥५४॥
यदि न क्रियते विप्र ! पयसा सेचनं मया।
देह उड्डीय लग्नास्ताः, कुर्वन्ति चापवित्रताम् ॥५५॥
तासां संयोगसद्भावे, मालिन्यंच मनो भवेत्।
यथा कुसंगसंसर्गात्,तथा स्वात्मनि भाव्यताम्॥५६॥
मनोमालिन्यभावेन, जातात्मनि मलीनता।
अतो मालिन्यरक्षार्थं, क्रियते जलसेचनम् ॥५७॥
क्षेपणं शकृदादेश्च, चाण्डालकैर्वितन्यते।
योषितामृतुकालश्च, धर्म्मः स्वाभाविको मम ॥५८॥
असत्यवादनं किन्तु, धर्म्मो मया न मन्यते।
अतः ! कण्ठगतैः ! प्राणै-रसत्यं नैव जल्पयते ॥५९॥
कारणञ्च मृषा प्रोक्तं, भ्रमीनां नैक-योनिषु।
भव भ्रमण रक्षायै, कदा यत्नो न मुच्यताम् ॥६०॥
दृष्टान्तन्तत्समागृह्य, ह्यसत्यं परिहीयताम्।
निदानं सर्वपापानां, सर्व दोषाकरस्तथा ॥६१॥

एकत्राऽसत्यजं पापमन्यत्र सर्व-पापकम् ।
तौलेनाधो मृषायाति, अन्यदूर्ध्वं च तष्ठिति ॥६२॥
अतो मृषा न वक्तव्य, सर्वं धर्म्मं सुरक्षता ।
सर्वं भ्रष्टमसत्येन, धर्म्मं कर्म्मं प्रपञ्चकम् ॥६३॥

## अस्तेय स्वरूप निरूपणं

अदत्तादानमादेयं, किञ्चित्तृणादिकं नहि ।
त्रियोग करणेनैव, तृतीयं तद्व्रतं मतम् ॥६४॥
एतद्व्रतं मुनीनाञ्च, गृहस्थैर्नैव पालयते ।
अणुव्रतं गृहस्थानां, यथा शक्त्या च पालनम् ॥६५॥
येन राज्ञां न दण्ड्यःस्याल्लोकेषु नैव निन्दनम् ।
अस्तेयं तादृशं स्थूलं, व्यवहारे निगद्यते ॥६६॥
एतादृशं महत्स्तेयं, नादेयं सद्विचारकैः ।
परद्रव्यस्य चौर्य्येण, आत्ता तैः परप्राणता ॥६७॥
मारणे तु क्षणं दुःखं, यावत्पौत्र परम्परा ।
अदत्तादान कृत्येन, आविर्भावस्त्वशर्म्मणः ॥६८॥
यादृशं दीयते दानं, तादृशं सुखमश्नुते ।
दुःख दाने प्रहीणत्वं, फलं परत्र भोक्ष्यते ॥६९॥
चौरं सज्जन रूपेणमन्यन्ते नहिकेचन ।

अविश्वासखनिःसस्यात्सदाचौर्य्यञ्चहीयताम् ॥७०॥
ज्ञातव्यंद्विविधिं चौर्य्यं, बाह्याभ्यन्तर भेदतः ।
बाह्यं चौर्य्यं समाख्यातमाभ्यन्तरं विचार्य्यताम् ॥७१॥
स्व सत्वं यत्र नास्त्येव, परसत्वंतु विद्यते ।
ग्रहणं यदनापृच्छय, तददत्तमुदाहृतम् ॥७२॥
स्वकीयाः ये शरीरस्थाः, रक्तादिषु समुद्भवाः ।
तज्जीवानां हि तत्रैव, नहि सत्वं परस्य वै ॥७३॥
ताननापृच्छ्ययद्दत्तम्, शरीरञ्च स्वकीयकम् ।
देहमर्पयतां तत्स्थाः, जीवाःपरैश्च भक्षिताः ॥७४॥
देयादेयेऽनभिज्ञोयः, सोऽनालोच्य प्रयच्छति ।
अदत्तमपितज्ज्ञेयम्, आभ्यन्तरं विचार्य्यताम् ॥७५॥

## ब्रह्मचर्य स्वरूप निरूपणं

वेद-मोहोदयेनैव, विषयेच्छा प्रजायते ।
मैथुनन्तत्तु बोधव्यं, त्यागात्तूर्य्यं व्रतं मतम् ॥७६॥
मैथुनञ्च द्वयोर्योगे, द्वयोः पुरुषयोरपि ।
कार्य्यकरणेचैकस्मिन्, मिथुनत्वं प्रसज्यते ॥७७॥
स्त्री पुंसानांच संयोगः, यदि मैथुनमुच्यते ।
स्वस्य भ्रातुश्च संयोगो, मैथुनं किं न कथ्यते ॥७८॥

भक्ति रागस्य संयोगः, भगिन्यादिषु जायते ।
तस्मान्न मैथुनं तत्र, व्यवहारे निगद्यते ॥७९॥
सेवने भजनं भक्तिः, भगिनीषु च सेवनम् ।
मैथुन लक्षणं तत्र, गतो दोषोऽत्र चिन्त्यताम् ॥८०॥
वेद मोहोदयेऽप्येव, संयोगोऽपि विजातिकः ।
मैथुन लक्षणं ज्ञेयम्, जगत्कल्याणमिच्छुभिः ॥८१॥
दीव्यौदारिक कामानां, कृतानुमतिकारितैः ।
मनोवाक् काययोगेन, चाष्टादश विभेदकाः ॥८२॥
तादृशं मिथुनत्वंतत्, त्यक्तव्यं मोक्षकांक्षिभिः ।
सर्वतो ब्रह्मचर्य्यंच, संयमिभिः प्रपाल्यते ॥८३॥
परस्त्री त्याग रूपंयत्, देशतो गृहमेधिनाम् ।
सधवा विधवाश्चैव, स्वस्त्रीभिन्ना परस्त्रियः ॥८४॥
कन्या साधारिणी चैव, परस्त्री समुदाहृता ।
तस्यास्त्यागोगृहस्थानां, देशत्यागित्व भावतः ॥८५॥
ऐकध्यमैक्यभावेन, द्विविधं द्विविधेन वै ।
द्विविधं त्रिविधेनाऽपि, यथाशक्त्या च गृह्यते ॥८६॥
व्रतानां किल सर्वेषामपवादः प्ररूपितः ।
ब्रह्म व्रतेऽपवादोन, कथितो ज्ञान भानुभिः ॥८७॥

सर्वेषां सार्वभौमानां, ब्रह्मचर्यं समाधिदम् ।
शुद्धं हृदिस्थितं येषां, नमस्तेभ्यस्सहस्रशः ॥८८॥
इन्द्राः संसदितिष्ठन्ति, वन्दित्वा ब्रह्मचारिणः ।
पूज्याः सर्वेऽपि बोधव्याः,महाप्रभाव शालिनः॥८९॥
यदसाध्यंहि कार्य्यंतत, कुर्वन्तिते महात्मनः ।
सीता सुदर्शनादीनां, दृष्टान्तः परिभाषितः ॥९०॥
सिंह राक्षस नागाश्च, भयोपद्रवकारिणः ।
सर्वेते नम्र संभूताः, बह्मचर्य्य प्रभावतः ॥९१॥
परत्र देवलोकादौ, गतास्ते ब्रह्मचारिणः ।
मनुष्यत्वं ततः प्राप्य, गन्तारः परमं पदम् ॥९२॥

## परिग्रह स्वरूपं

ममेति ममता भावः, प्रोक्तः परिग्रहो जिनैः ।
मूर्च्छा लोभादयश्चैव, पर्य्यायाः परिकीर्तिता ॥९३॥
सर्वेषामपि पापानां, लोभोहि मूलकारणम् ।
विडंबितं जगद्ये न, ग्रहाणामधिकोग्रहः ॥९४॥
समुद्रस्यान्तिमं[1] वारि, दैवशक्त्यावगाहते ।
नतु लोभ समुद्राम्भः, कदाचिदपि गाहते ॥९५॥

[1] स्वयंभरमणसमुद्रः ।

उत्तराध्ययनेचेच्छा, आकाशसदृशीमता ।
न प्राप्तश्चाऽपितस्यान्तः, इच्छाया जगति तथा ॥९६॥
तत्त्यागे ममताऽभावः, जायते निष्परिग्रहः ।
बाह्याभ्यन्तर भेदेन, द्विविधः परिज्ञायते ॥९७॥
धन धान्यादि संत्यागे, कामिनी नां तथैव च ।
ज्ञेयंबाह्यं हि नैग्रन्थ्यमाभ्यन्तरं निरूप्यते ॥९८॥
कषायाणां च सर्वेषामनन्त दुःख दायिनाम् ।
सर्वथा त्याग कर्त्तव्ये, आभ्यन्तर व्रतंमतम् ॥९९॥
चिते परिग्रहोयस्य, बहिर्निग्रन्थतावृथा ।
लोकवञ्चक रूपत्वं, किमर्थं परितन्यते ॥१००॥
त्यक्त्वा ये तृणवद्बाह्यं, परिग्रहं कषायजम् ।
साधुत्वं प्रतिपद्यन्ते, श्लाघ्यास्ते द्युसदामपि॥१०१॥
सर्वतो देशतश्चैव, द्विविधश्चापरिग्रहः ।
सर्वतो यमिनां ज्ञेयः, गृहमेधिषु देशतः ॥१०२॥
सर्वतः सर्व मूर्च्छायास्त्यागं कर्तुं न शक्यते ।
त्यागश्च देशतस्तस्य, कर्तव्यो भव भीतिभिः ॥१०३॥
ईच्छायाः परिमाणन्तु, शुद्धभावेन क्रियते ।
निष्परिग्रहवत्वं तद्देशतः परिभाषितम् ॥१०४॥

तृष्णा व्याकुल चित्तैश्च, दुष्टवासनया सह ।
कृतश्च यैर्न संतोषः,ते प्राप्ताः दुःखसागरम् ॥१०५॥
सुभूमचक्रवर्त्याद्याः, दुर्योधनादयस्तथा ।
लोभावेशेन संप्राप्ताः, दुखानाञ्च परम्पराः ॥१०६॥
केनचिच्च दरिद्रेण, चारणार्थं महीषीणाम् ।
वनखंडे सरः पाल्यां, विश्रान्तंधरणीतले ॥१०७॥
दृष्टः कश्चन पाषाणः, परीक्षा विकलेनवै ।
चिन्तारत्नञ्च पाषाण-रूपेण ग्रहणी कृतम् ॥१०८॥
क्षुधातुर तया तेन, तृषा व्याकुल भावतः ।
चिन्तितं स्वीय स्वान्तेतत्,लोकबोधाय कथ्यते ॥१०९॥
सरोजलं पयस्स्याच्चेद्, वटपत्राणि पूरिकाः ।
प्रतिदिनञ्च भोज्यंस्यात्परिश्रमाद्विमुच्यते ॥११०॥
चक्षुरुद्घाट्य दृष्टं वै, सर्वं दुग्धादि वस्तुकम् ।
अतीव तेन जग्धं तत्,रिक्तं जातं न किञ्चन ॥१११॥
कुटुम्ब परिवारैश्च, यदा संभूय भुज्यते ।
तदा तान्यपि दृष्टानि,भुक्तं तेन समंचतैः ॥११२॥
रिक्ताऽपि ततो नैव, तदाऽधिकं विचार्य्यते ।
सप्त तलोऽपि प्रासादः,सुवर्ण निर्मितो भवेत् ॥११३॥

प्रासादं दृष्टवांस्तत्र, क्रीडां कृत्वातु तैस्सह ।
नैकविधेन पाशेन, खेलयति स नित्यशः ॥११४॥
पुत्र पौत्रादिकं दृष्ट्वा, ह्यधिकंस प्रमोदभाक् ।
प्रभावस्तत्र कस्येति, हृदये न विचारणा ॥११५॥
तदाऽत्र कोऽपि देवश्च, परीक्षार्थं समागतः ।
काकरूपं परिगृह्य, स्थितस्तत्र गवाक्षके ॥११६॥
कौं कौमित्येव शब्देन, गत्वाच व्याकुलो कृता ।
तस्य प्रोड्डायनार्थाय, लोष्टादिकं गवेषयते ॥११७॥
देव कृतेषु हर्म्येषु, सुवर्णं निर्म्मितेषु च ।
कथं पाषाण खण्डंतत्,प्राप्यते क्षेप्तुमिच्छता॥११८॥
चिन्तामणिश्च ग्रन्थिस्थः, स्मृतस्तेन दुरात्मना ।
गृहीत्वा चिक्षिपे तंच,लात्वा देवोऽपिगच्छति॥११९॥
दुग्धादिना प्रहीणन्तत्,पश्यति च तडागकम् ।
चित्त भ्रान्तिः किमुस्वप्नं,हृदये तेन चिन्तितम्॥१२०॥
इन्द्र जालादिकं किंवा, सर्वं नष्टं च हेलया ।
किंच तेनैव न ज्ञातम्,चिन्ता रत्नं गतं हहा ॥१२१॥
हा पुत्र ! हे पितस्त्वस्मि, अलिपते नैव प्राप्यते ।
तथा मनुष्य-जन्मादि,गतं सत्प्राप्यते कथम् ॥१२२॥

अतो मूर्च्छां परित्यज्य, निर्ममताऽनुभूयताम् ।
प्राप्यते स्वर्ग सौख्यानि,मोक्ष सुखं ततः परम्॥१२३॥
सर्व त्यागेषु शान्तिर्यद्,तदेच्छा परिमाणकम् ।
सर्वैरेतद्धि कर्तव्यं, लोकद्वयसुखेच्छुभिः ॥१२४॥
संतोषादैहिकं शर्म्म, परलोके तथैव च ।
लोकद्वये सुखं भुक्त्वा,प्राप्नोति परमं पदम् ॥१२५॥

अहिंसायां सर्वव्रतावतारस्वरूपं

महाणुव्रत रूपाणि, व्रतानि कथितानि वै ।
महाव्रतानि साधूनां, गृहस्थानामणुव्रतम् ॥१२६॥
व्रतानि तानि सर्वाणि, अहिंसाऽन्तर्गतानि वै ।
तान्यपि सुखबोधाय, निगद्यन्ते विशेषतः ॥१२७॥
मृषा वादेन सर्वेषाम्, दुखं मनसि जायते ।
अयं महात्मरूपोऽपि,मृषा वादे न लज्जते ॥१२८॥
अहिंसायाः प्ररिक्षायै, सन्तोमृषां वदन्ति न ।
हिंसा भावश्च सर्वत्र,स्तेयाऽऽदानेषु दृश्यते ॥१२९॥
वधबन्धादिकं सर्वं, चौर्य्यं वस्तु निबन्धनम् ।
अतस्तत्परिहर्तव्यम्,हिंसात्यागं विधित्सुना॥१३०॥
सर्वे दार्शनिकाश्चैव, हिंसां वदन्ति मैथुने ।

रक्तजाः सूक्ष्म जीवाश्च, समुद्भूताहि योनिगाः॥१३१॥
यथाशक्त्या परित्यागो, जीवानामनुकम्पया ।
परिग्रहोऽपि हिंसास्यात्लोभात् किंकिंन जायते॥१३२॥
मातरं पितरं बन्धून्, घ्नन्तिते लोभिनो जनाः ।
माता पुत्रादिकं हन्ति, पुत्रश्च मातरं तथा ॥१३३॥
माता स्वकं पतिं हन्ति, पिता हन्ति स्वकां स्त्रियम्
सर्वत्र कारणेनैवं हिंस्य-हिंसक भावना ॥१३४॥
अतः परिग्रह-त्यागः, कर्त्तव्यः सुख-लिप्सया ।
अनेनैव विचारेण, अहिंसां प्राप्नुयुः सदा ॥१३५॥
अतोऽहिंसाव्रतेष्वेव, सर्वाण्यन्तर्गतान्यपि ।
स्वल्पधीनांचबोधाय, कथितानि पृथक्पृथक् ॥१३६॥

इति शास्त्र—विशारद जैनाचार्य--पूज्यपाद-
विजयधर्म्मसूरिशिष्येण-न्यायविशारद-
न्यायतीर्थ उ० मङ्गलविजयेन विरचिते
आर्हतधर्म्मप्रदीपे योगाङ्गे यमवर्णन
नामा द्वितीय प्रकाशः ॥

# अथ तृतीय प्रकाशः

## प्रथम गुणव्रतस्वरूपं

निरूपणं द्वितीये च कृतं महाव्रताणुव्रतादीनाम् ।
तृतीयेऽस्मिन्वर्ण्यते गुण शिक्षाव्रतस्वरूपंच ॥१॥
दिग्व्रतादीनि सर्वाणि, कथ्यन्ते गुरुयोगतः ।
पूर्वोत्तरयमाशाश्च, पश्चिमा दिक्तथैव च ॥२॥
ऐशान्यादि विदिक्चैव, विमला तमसी तथा ।
विदिशांच दिशामासां, परिमाणं निगद्यते ॥३॥
ममता परिमाणेच्छुः, परिमाणं दिशां कुरु ।
जगदाक्रम्य माणानां, जीवानामनुकम्पया ॥४॥
निवर्तनाय लोभानां, दिङ्नियमं विधेहि भोः ।
कृतो दिङ्नियमो येन, तेन तत्रैव गम्यते ॥५॥
ततो बहिःस्थजीवानां, रक्षणं सर्वदा कृतम् ।
विद्भिःखलु कर्तव्यं, परिमाण मतो दिशाम् ॥६॥

## द्वितीयगुणव्रतस्वरूपं

अहिंसार्थं च कर्तव्यो, भोगोपभोग नैयमः ।
सकृद्भोगे यदायाति, भोगोऽन्नादितदात्मकः ॥७॥

पुनःपुनश्च भोगेहि, आयान्ति यानि वस्तूनि ।
वस्त्राभरणगेहानि, उपभोगोनिगद्यते ॥८॥
यस्मिन्भोगे महारम्भः, अभक्ष्याणि सदैवच ।
त्याज्यानितानि सर्वाणि, ह्यहिंसां परिरक्षता ॥६॥
मधुमांस सुरादिंच, अभक्ष्यानन्तकायकं ।
तक्राद्बहिश्चनिष्क्रान्तं, नवनीतमपित्यजेत् ॥१०॥
निशाशनंच तत्सर्वं, पञ्चोदुम्बरजंफलम् ।
मुद्गादि द्विदलं सर्वं, आमदध्यादि संयुतम् ॥११॥
जायते तस्य संगेन, जीवोत्पत्तिः क्षणे क्षणे ।
धर्म्मार्थिना न भोक्तव्यं, व्रतपालनमिच्छुना ॥१२॥
साधारणे शरीरेऽस्मिन्सत्वानन्त्यंसमावसेत् ।
उत्पद्यन्ते म्रियन्ते च, समये समये तथा ॥१३॥
अल्पारम्भेण कार्य्यंचेन्महारम्भः कथं भवेत् ।
लाभालाभौ समालोच्य,कर्तव्यं सर्वं सज्जनैः ॥१४॥
अस्मै नश्वरपिंडाय, कथमेष विधीयते ।
अल्पारम्भेण चेत्तृप्तिर्जायते सत्वशालिनः ॥१५॥
प्राणान्तेऽपि न कर्तव्यमनन्त जीव पीडनम् ।
जग्धादनन्तकायानां,जीवानन्त्यंच भक्षितम् ॥१६॥

मतान्तरेऽपि सुत्यक्तम्, अनन्तकाय भक्षणम् ।
सर्वज्ञ शासनं प्राप्य, कथमद्यादनन्तकम् ॥१७॥
द्वाविंशतिरभक्ष्याणि, तथाचानन्तकायकम् ।
सर्वथा परित्याज्यानि, विषयुक्त विषान्नवत् ॥१८॥
¹प्रपीबन्ति रसान्सर्वान्, गत्वा सर्वत्र मक्षिकाः ।
माण्डेवान्तिं प्रकुर्वन्ति,तन्मध्विति प्रगीयते ॥१९॥
निष्ठ्य तमल्पक्षिप्त्तंच, भोजनेषुच केनचित् ।
उच्छिष्ठंतत्समाज्ञाय, गालीदानं विधीयते ॥२०॥
मक्षिकावान्ति संजातं, जीवोत्पत्तेश्च कारणम् ।
कोऽपि कस्याऽपिनोच्छिष्ठं,खलुभुक्ते कदैवहि ॥२१॥
पवित्रोऽहं सदाचारी, विचारो मानसे भवेत् ।
उच्छिष्ठं त्वं कथं मूढ़!,भुंक्ष्व मधु विचार्य्यताम् ॥२२॥
मधुस्नानेन देवाहि, भ्रष्टाः मूढ़जनैः कृताः ।
स्वयं भ्रष्टाः परांश्चैव, भ्रष्टयन्ति दुरात्मिनः ॥२३॥

## मांस भक्षण निषेध स्वरूपं

विना जीवस्य संहारात्, मांसंनोत्पद्यते क्वचित् ।
स्वस्य दुःखं स्वपीडायां, परस्य परपीडनम् ॥२४॥

---

१ पि ।

यथाशाकस्य संस्कारे, कर्त्तव्ये किल छूरिणा।
कदाचिद्धस्तयोर्लग्ने, दुःखमतीव जायते ॥२५॥
यथा खड्ग प्रहारेण, जीवानां मारणेसति।
यद् दुःखं जायते तेषां, तद्वक्तुं नैव शक्यते ॥२६॥
यव चूर्णं मुखे भृत्वा, पापिभवाभिनन्दिना।
मुष्टिना मार्य्यते यत्र, नतद् देवालयं भवेत् ॥२७॥
जगतोऽम्बा जगन्माता, सर्वेषां जननीमता।
कथमद्यात्सुतान्सावै,न्यायमार्गो विलोक्यताम् ॥२८॥
यदा खादति स्वीयांश्च, तदा सा जननी कथम्।
जन्य जनक सम्बन्धः, पित्रोः सर्वत्र सम्मतः ॥२९॥
वध्य घातकता नैव, प्रलये कोऽपि मन्यते।
ततः सम्बन्धरूपत्वं, ज्ञातव्यं शुभमिच्छता ॥३०॥
देव्यग्रे याचते पुत्रं, परपुत्रप्रदानतः।
रक्षणेच्छा स्वपुत्राणां, परपुत्रविघातनम् ॥३१॥
देवी स्थानेषु गत्वाच, हन्तव्यो नहि केनचित्।
कश्चिल्लघुर्महान्प्राणी,कल्याणमिच्छुना सदा ॥३२॥
नैवेद्यं परिबोधव्यं, बलिर्नो प्राणिनाशनम्।
प्राणिनां हननेतत्र, शूनां स्थानं न किं भवेत् ॥३३॥

यथा देवी समीपे च, अखण्ड पुष्प ढौकनम् ।
तथैवाजादि जीवानामखण्डत्वं विधीयते ॥३४॥
त्वद्दर्शनेन भो देवि ! यथा सुखं ममात्मनि ।
तथैवंचैषु जीवेषु, सुखं शास्वत्प्रजायताम् ॥३५॥
कदाचिदपि तत्कण्ठे, शस्त्राघातो न दीयते ।
त्वदीय् दर्शनेनाऽयं, यथायुरभिजीवताम् ॥३६॥
एवं रीत्याच ये तत्र, देवीस्थाने नयन्तितम् ।
नीत्वा पशुंच जल्पन्ति, ते नराः स्वर्गगामिनः ॥३७॥
अहिंसा परमो धर्म्मः, सर्वं शास्त्रेषु विश्रुतः ।
यत्र जीव दया नास्ति, तत्सर्वं परिवर्जयेत् ॥३८॥

## मदिरानिषेधवर्णनम्

दोषाणां कारणं मद्यं, गुणानांच विनाशकम् ।
सर्वोन्माद निमित्तंतद, दुःखानांच निदानकम् ॥३९॥
मद्यं सच्चित्तहन्तृत्वं, मद्यं बुद्धि विनाशकम् ।
मद्यं धर्म्म विघातित्वं, मद्यं सुखाप-नोदकम् ॥४०॥
मदिरा पान मात्रेण, शरीरमुन्मदायते ।
मातरं मन्यते पुत्रीं पुत्रीं, मातेति जल्पति ॥४१॥
मदिरा-पान ताऽऽधीना गच्छन्तः स्खलनात्पथि ।

पतन्ति राज मार्गेऽपि, नृत्यन्ति रोदयन्ति च ॥४२॥
गोपनीय स्ववस्तूनि, प्रकाशयन्ति हेलया।
असंबद्धं प्रजल्पन्ति असभ्यमाचरन्तथा ॥४३॥
सज्जनान्दुर्जनांश्चैव, वेत्तिन स्वपरान्तथा।
यद्वा तद्वा प्रजल्पन्ति, विचार शून्यता हृदः ॥४४॥
व्यात्तमुखः पथे भूत्वा, नग्नः स्वपिति चत्वरे।
मूत्रयन्ति मुखे श्वानः,कुर्वन्ति वा शकृदपि ॥४५॥
शरीरे रजसा व्याप्ते, कदाऽशुचौ पतत्यपि।
अशुचि रूप देहस्याद्‌तो, मद्यं विवर्जयेत् ॥४६॥
शाम्बादि यादवाः केचिदरण्यं प्राप्नुवन्कदा।
तरुच्छन्न निकुञ्जेषु, दृष्टास्तैर्मद्यवापिका ॥४७॥
मद्यमतीव पित्वाच, जाता उन्माद पोषकाः।
असंबद्धं प्रजल्पन्ति, नृत्यन्ति गीत गायिनः॥४८॥
द्वैपायन समीपे ते, गत्वा गालीं ददत्यपि।
ताडयन्ति च लोष्टेन, वचोभिस्तर्जयन्ति ते ॥४९॥
एतेषां यादवानांच, उन्माद कारणादितः।
क्रोधावेशेन जातंच, वपुस्तस्य भयंकरम् ॥५०॥
रौद्र ध्यान वशेनैव, परिणाम विपर्य्यतः।

तपः प्रज्वाल्य नैदानं, कृत्वा भवनवासिषु ॥५१॥
अग्निकुमार देवेषु, जातश्चाज्ञान योगतः ।
स्मृत्वा पूर्व भव वैराद्, द्वारिकाज्वालनोद्यतः ॥५२॥
सद्यः काष्टादि संचित्य, वायुं विकृत्य तत्क्षणात् ।
जीवादि[1] भूतमावासं, ज्वालयति च वह्निना ॥५३॥
हा ! मातः हा ! पितश्चैव, वदन्ति बहवो जनाः ।
इमं त्रायस्व हे मातः ! प्रत्यज्य मां क्व गच्छसि ॥५४॥
असारे किल संसारे, नकोऽपि शरणं मम ।
विना देवश्च सर्वज्ञं, विना च जैन शासनम् ॥५५॥
जीवानां शरणं नौका, पयोधौ मज्जतां यथा ।
तथैवैतद्वस्थायामस्माकं शरणं विभुः ॥५६॥
इत्येवमुच्यमानास्ते, भस्मसाच्चाऽभवन्तदा ।
नष्टाश्च यादवाः सर्वे, सर्वेषामेव पश्यताम् ॥५७॥
मद्य-पान फलं चैतद्भुक्तं संभूय यादवैः ।
तद्भुक्तुं नैव शक्येत, देवा सुर नरैरपि ॥५८॥
जाताश्च व्यसना-धीनाः, अधुना राजपुत्रकाः ।
राज्यादि सर्व सामग्रीं, नाशयन्त्येक हेलया ॥५९॥

१—मनुष्यादि ।

मद्यादि व्यसनाधीनाः, यदि तेऽपि भवन्ति न।
तदा भारत नष्टत्वं, नार्हति भवितुं कदा ॥६०॥
दुःखदायि च नोमद्यमिहलोके परत्र च।
सज्जनैः परित्यज्यन्ते, मद्यादि व्यसनान्यतः ॥६१॥

## परस्त्रीनिषेधवर्णनं

तथैव परदाराणां, व्यसनं दुःख दायकम्।
परदारेषु लाम्पट्यात्, रावणोऽधोगतिं गतः ॥६२॥
परदार प्रसक्तानां, हृदि धर्म्मो न विद्यते।
निर्णीय स्थानमेकान्तं, समयञ्च सुनिश्चितः ॥६३॥
पूज्यः कोऽपि तदानीञ्च, धर्म्मोपदेष्टु मागतः।
तदा स कस्य कार्यस्य, व्याजं निष्कास्य गच्छति॥६४॥
न तदा धर्म्म जिज्ञासां, श्रोतुं भवति संमुखः।
मौनं विधाय तत्रैव, गमनोत्सुक भाग्भवेत् ॥६५॥
परस्त्री व्यसनाधीनाः, धर्म्मापमान-कारिणः।
कथं ते सुख लब्धारः, दृष्टा केनाऽपि कुत्रचित् ॥६६॥
विचार्य्यतां च संमील्य, धर्म्मः कीदृक् च रक्षितः।
धर्म्मापमान कर्त्तारः, धर्म्म शीला कथं नु ते ॥६७॥
स्वकीय वीर्य्य सम्पत्तिं, परस्त्रियै ददाति यः।

प्रसूतिस्तत्र जाताऽपि, स्वगृहे नैव किंचन ॥६८॥
यस्य गृहे सुतो जातः, धनवान्तेन तद्गृहम् ।
स्वगृहं तेन शुन्यं स्यात्, लोकनीयञ्च सर्वदा ॥६९॥
परकीयः स विज्ञेयः, एहि पुत्र ! न जल्पति ।
जल्पने गाली प्रादानं, करोति बहुशस्तदा ॥७०॥
यथेक्षु रस निष्कासे, तुषत्वमवशिष्यते ।
तथैव-वीर्य्य निस्कासे, किमवशिष्यते वद ॥७१॥
वीर्य्य पाते गते दुष्टा-यां गमनं करोतिकः ।
धन धान्य बृहद्धानिं, पश्यतामधिकाऽधिकाम् ॥७२॥
तद्रक्षणे च स्वर्गादि, गतिं स लभते जनः ।
पारम्पर्य्येण निर्वाण, सुखं प्राप्नोति निश्चितम् ॥७३॥
तेजोऽधिकं शरीरे च, बलं बुद्धिं प्रवर्द्धते ।
जायते धर्म्मे धीरत्वमिहलोके च श्लाघ्यता ॥७४॥
मृत्वा वैमानिके देवे, स महात्मा प्रगच्छति ।
ततश्चुत्वा मनुष्यत्वं, प्राप्य भवति संयमी ॥७५॥
प्रपाल्य शुद्ध चारित्रं, त्रिकरण त्रियोगतः ।
क्षपक श्रेणिमारुह्य, गच्छति परमं पदम् ॥७६॥

## वेश्यानिषेध वर्णनम्

वेश्याया व्यसनं नैव, कुर्वन्ति सज्जना जनाः ।

कुर्वन्ति ये नरास्तेऽपि, ज्ञातव्याश्चाधमाऽधमाः ॥७७॥
वेश्या धनादिकं सर्वमिच्छति न गुणादिकम् ।
निर्गुणं रूपहीनं सा, मन्यते कामदेवताम् ॥७८॥
अनेक वीट पुरुषैः, उच्छिष्टञ्च शरीरकम् ।
सा कथं भुज्यते वेश्या, उच्छिष्टभोज्यवज्जनैः॥७६॥
उच्छिष्ठं परिहर्तृभिः, वेश्या त्याज्या च सर्वदा ।
विनाशवानं नवै केचिदुच्छिष्टं, भुञ्जते जनाः ॥८०॥
राज यक्ष्मादि रोगाणां, कारणं साऽपि कथ्यते ।
अनेकैर्रोगिभिर्भुक्ता, गमनेन भवन्ति ते ॥८१॥
कन्या पुत्री समाज्ञेया, कन्या च भगिनी समा ।
तस्यां कथं व्रजेत्प्राज्ञः, परस्त्री त्यागवान् जनः ॥८२॥
विधवा पतिहीना स्यात्, ज्ञातव्या परमार्थतः ।
उच्छिष्टान्न समं त्याज्या, प्राणान्तेऽपि नवै व्रजेत्॥८३॥
यथा स्वकीय मात्रादौ, यः कश्चित्कर्हि गच्छति ।
तं दृष्ट्वा तु मनस्येवं, पर्य्यालोचति नित्यशः॥८४॥
अयं दुष्टो महापापी, नोज्झति मम मातरम् ।
तस्य कष्ट प्रदानाय, कार्य्यं किं किं करोति न ॥८५॥
मदीय मातृ पुत्र्यादौ, यो दुष्टः परिगच्छति ।

शिरश्च तस्य छेत्स्यामि, समयो लभते यदा ॥८६॥
छिनत्ति समयं प्राप्य, चोपस्थ हस्त नासिकाः ।
दुःखमनीव भुक्त्वा स, प्रयाति दुर्गतिन्ततः ॥८७॥
सधवा विधवा कन्या, वेश्या सर्वं परस्त्रियः ।
तासु कदापि नोगच्छेत्, सुखेच्छा हृदये यदि ॥८८॥
धन्याः नराश्च ते ज्ञेयाः, परस्त्रीषु परां मुखाः ।
तस्यां दृष्टिं न क्षिप्ता ये,श्लाघनीयाः कथं न ते ॥८९॥
अभक्ष्यानन्त कायादिं, द्विदलं रात्रि भोजनम् ।
मधुमद्यादिकं सर्वं, मांस संधानकादिकम् ॥९०॥
बह्वारम्भ-समुत्पन्नं, बहु पाप निबन्धनम् ।
एतत्सर्वं परित्याज्यम्, मनसाऽपि न प्रार्थयेत् ॥९१॥
औषधार्थंच जग्धंचेल्लध्वभक्ष्यादिकं जनैः ।
स्वामरत्वन्न कुर्वीत, किमर्थं परिषेव्यते ॥९२॥
अल्पारम्भं च सर्वं यत्, भोक्तव्यं न कदाचन ।
तत्रापि संयमः कार्य्यः, इन्द्रियाणां नृपुंगवैः ॥९३॥
येषां नामाऽपि नोज्ञातं, स्वेनापरजनेन वा ।
मधुरस्स पदार्थोऽपि, भोक्तव्यो नहि कर्हिचित् ॥९४॥
प्रवृत्तिर्यदि तत्रस्याद्भवेत्तस्याः फलं विषम् ।

भुक्ते तस्मिन्फलेनूनं, मृत्युः सपदि जायते ॥६५॥
अतोऽत्र तन्न भोक्तव्यमधिकं मधुरञ्चवै ।
धर्म्मार्थिभिः प्रयत्नेन, चान्येनाऽपि सुखेच्छया ॥६६॥
वस्त्रादीनां समाभोगं, तत्साधनं तथैव च ।
आसक्तया नैव सेवेत, स्वभार्य्यामपि सर्वदा ॥६७॥
कर्तव्यो नियमस्तेषु, संतोषः परमं सुखम् ।
द्वितीयादिषु सर्वासु, पर्वभूते तिथावपि ॥६८॥
कल्याणकदिने चैव, स्वपैतृकदिनेषु च ।
ब्रह्मचर्य्यव्रतं कुर्य्यात्, सर्वथा हितकांक्षया ॥६९॥

## कर्मादाननिषेधवर्णनं

त्याज्याः सदा महारंभाः, कर्म्मादानादिका अपि ।
पापादान निमित्तत्वात्कर्म्मादानं निगद्यते ॥१००॥
पंच दश स्वरूपाणि, शास्त्रे निगदितानि च ।
स्वल्प जीवन कार्य्याय, किमर्थं प्रविधीयते ॥१०१॥
यत्र लाभो न वै कश्चिद्, हानिस्तेषु च सर्वदा ।
अतःत्याज्यानि सर्वाणि, कर्म्मादानानि भावतः ॥१०२॥
इङ्गाल वन गन्त्र्यादि, भाटी च स्फोटकं तथा ।

एतानि पञ्चकर्म्माणि,त्यक्तव्यानि सुखेच्छया॥१०३॥
दन्त लाक्षा रसादीनां, केशादेः क्रयविक्रयौ ।
क्रियेते धन लाभाय, आत्म लाभो न चिन्त्यते ॥१०४॥
उदरार्थं ह तत्सर्वमुदरमत्र तिष्ठति ।
तद्द्वाराऽशुभकर्म्माणि,चित्वायाति भवान्तरे॥१०५॥
घोरातिघोर वैपाकः, परत्र तेन भुज्यते ।
साहाय्य परिदानाय, न तेन सह गच्छति ॥१०६॥
धनानामुपभोगं ते, मिलित्वा कुर्वते सदा ।
न तवोपकृतिं कांचिन्मन्यन्ते वै कदाचन ॥१०७॥
यंत्रपीडन कर्म्माणिः, निर्लाछनं तथैव च ।
वनादौ दव दानादि, तडाग जल शोषणम् ॥१०८॥
असती पोषणादीनि, कर्म्माण्येतानि पंच वै ।
सामान्यान्यव बोध्यानि, विचारोऽत्र विधीयते ॥१०९॥
कुम्भकारान्न भ्राजादि, द्वारेष्टिका यवादीनाम् ।
अन्येषामपि तादृशां, कर्मणां करणादितः ॥११०॥
वृक्षादयश्च ज्वाल्यन्ते, आशुशुक्षणि योगतः ।
अग्नियोगश्च यत्रैव, तदङ्गार क्रियोच्यते ॥१११॥
वनस्थितस्य वृक्षस्य, छित्वा पत्र-फलानि च ।

भुक्ते तस्मिन्फलेनूनं, मृत्युः सपदि जायते ॥६५॥
अतोह्येतन्न भोक्तव्यमधिकं मधुरञ्चवै ।
धर्म्मार्थिभिः प्रयत्नेन, चान्येनाऽपि सुखेच्छया ॥६६॥
वस्त्रादीनां समाभोगं, तत्साधनं तथैव च ।
आसक्तया नैव सेवेत, स्वभार्य्यामपि सर्वदा ॥६७॥
कर्तव्यो नियमस्तेषु, संतोषः परमं सुखम् ।
द्वितीयादिषु सर्वासु, पर्वभूते तिथावपि ॥६८॥
कल्याणकदिने चैव, स्वपैतृकदिनेषु च ।
ब्रह्मचर्य्यव्रतं कुर्य्यात्, सर्वथा हितकांक्षया ॥६९॥

## कर्मादाननिषेधवर्णनं

त्याज्याः सदा महारंभाः, कर्म्मादानादिका अपि ।
पापादान निमित्तत्वात्कर्म्मादानं निगद्यते ॥१००॥
पंच दश स्वरूपाणि, शास्त्रे निगदितानि च ।
स्वल्प जीवन कार्य्याय, किमर्थं प्रविधीयते ॥१०१॥
यत्र लाभो न वै कश्चिद्, हानिस्तेषु च सर्वदा ।
अतःत्याज्यानि सर्वाणि, कर्म्मादानानि भावतः ॥१०२॥
इङ्गाल वन गन्त्र्यादि, भाटी च स्फोटकं तथा ।

एतानि पञ्चकर्म्माणि, त्यक्तव्यानि सुखेच्छया॥१०३॥
दन्त लाक्षा रसादीनां, केशादेः क्रयविक्रयौ ।
क्रियेते धन लाभाय, आत्म लाभो न चिन्त्यते ॥१०४॥
उदरार्थं ह तत्सर्वमुदरमत्र तिष्ठति ।
तद्द्वाराऽशुभकर्म्माणि, चित्वायाति भवान्तरे॥१०५॥
घोरातिघोर वैपाकः, परत्र तेन भुज्यते ।
साहाय्य परिदानाय, न तेन सह गच्छति ॥१०६॥
धनानामुपभोगं ते, मिलित्वा कुर्वते सदा ।
न तवोपकृतिं कांचिन्मन्यन्ते यै कदाचन ॥१०७॥
यंत्रपीडन कर्म्माणिः, निर्लांछनं तथैव च ।
वनादौ दव दानादि, तडाग जल शोषणम् ॥१०८॥
असती पोषणादीनि, कर्म्माण्येतानि पंच वै ।
सामान्यान्यव बोध्यानि, विचारोऽत्र विधीयते ॥१०९॥
कुम्भकारान्न भ्राजादि, द्वारेष्टिका यवादीनाम् ।
अन्येषामपि तादृशां, कर्मणां करणादितः ॥११०॥
वृक्षादयश्च ज्वाल्यन्ते, आशुशुक्षणि योगतः ।
अग्नियोगश्च यत्रैव, तदङ्गार क्रियोच्यते ॥१११॥
वनस्थितस्य वृक्षस्य, छित्वा पत्र-फलानि च ।

विक्रयाय कृतं कर्म्म, वनकर्म्म तदुच्यते ॥११२॥
अङ्गोपाङ्गानि गन्त्र्याश्च, स्तंभादि तोरणं तथा ।
व्यापारः क्रियते तेषां, रथकर्म्म तदुच्यते ॥११३॥
हस्त्यश्व शकटादीनां, रासभानां मयस्य च ।
बलिवर्द् प्रमुख्याणां, क्रय विक्रययोस्तथा ॥११४॥
भाटकत्वं समुद्दिश्य, व्यापारः क्रियते यदा ।
ज्ञातव्यं भाटकं कर्म्म, कथितं जैन-शासने ॥११५॥
तडागस्य च निर्माणं, वापी कूपादि वस्तुनाम् ।
कृष्यर्थं भूमिखानादि, स्फोटकं कर्म्म कथ्यते ॥११६॥
एतानि पंचकर्म्माणि, महारम्भ मयानि च ।
धर्म्मार्थिना हि हेयानि, न कर्त्तव्यानि कर्हिचित् ॥११७॥
दन्तादीनां च व्यापारः, हस्त्यादीनां विनाशकः ।
दन्तादिर्जायते नैव, हस्तीनां हननं विना ॥११८॥
तथैव मौक्तिकादीनां, यत्रोत्पत्तिः प्रजायते ।
क्रयार्थं गमनं तत्र, दन्तवाणिज्यमुच्यते ॥११९॥
लाक्षादि रञ्जकाणाञ्च, हरितालादि वस्तुनाम् ।
बहुशोऽवद्यमूलानां, व्यापारो वाणिजो मतः ॥१२०॥
तैलादि घृत गौडानां, मद्याद्यासव वस्तुनाम् ।

कृत्रिम घृतकादीनां,व्यापारः क्रियते कथम् ॥१२१॥
अतिलोभार्थिना चैव, व्यापारः क्रियते यदि ।
स ज्ञे यो रस व्यापारः, रस वाणिज्यमुच्यते ॥१२२॥
पश्वादीनां शुकादीनां, मनुष्याणां तथैव च।
केशाच्छेदन व्यापारः, केश वाणिज्यमुच्यते ॥१२३॥
शंखकाद्यहिफेनानां, विष प्रधान वस्तुनाम् ।
व्यापारः क्रियतेयस्तत्,विष वाणिज्यमुच्यते॥१२४॥
तिलेक्षु सर्सपाणाञ्च, अतस्येरण्ड वस्तुनाम् ।
रसार्थं पीलनं तेषाम्, जलानां जलवेश्मनि ॥१२५॥
रस तैलादि निष्कास्य, क्रियेते क्रय विक्रयौ ।
तादृग्व्यापार कर्त्तव्यं, यन्त्र पीडनमुच्यते ॥१२६॥
बलीवर्दादि जीवानां, लिङ्गत्वगादि छेदनम् ।
तादृशं कर्म्म संसारे, निर्लाञ्छनं निगद्यते ॥१२७॥
क्षेत्रे धान्यादि वृध्यर्थं, द्वदानं विधीयते ।
द्वदान क्रिया सास्यात्पुत्राणां जीवनाय या॥१२८॥
अन्नादीनां च वापाय, तडागानाञ्च शोषणम् ।
क्रियते कार्य्यते यत्तु, तत्सरः शोषणं मतम् ॥१२९॥
पोषणं दास दासीनां, शुकानां चैव पक्षिणाम् ।

कुक्कुट वर्तकादीनां, हिंसक-प्राणिनां तथा ॥१३०॥
ग्रहणं धन वृध्यर्थं, क्रियते धन लिप्सुभिः।
यशोऽर्थं क्रियते तद्धि, "असती-पोषणं" मतम्॥१३१॥
पञ्चेन्द्रियस्य जीवस्य, संहारो दृश्यते किल।
एकद्वीन्द्रियकादीनां, जीवानान्तु कथैव का ॥१३२॥
उदर पूर्तिरन्येन, व्यापारेण प्रजायते।
तदा प्राणान्त कालेऽपि, व्यापारः किमु क्रियते॥१३३॥
केनाऽपि यदि रूपेण, जीविका नैव जायते।
तदा महापवादेऽपि, समयः प्रविलोक्यताम् ॥१३४॥
कोट्यादि धन सम्पत्तौ, सत्यामपि विधीयते।
तदा मनसि ज्ञातव्यं, तृष्णाधिकैर्हृदिस्थितैः॥१३५॥
येषां तुष्टिर्भवेन्नैव, ते महारम्भिणोमताः।
मज्जादीनां प्रयोगस्तु, यंत्रे वस्त्रे विधीयते ॥१३६॥
वस्त्रादिषु च लेपाय, मज्जादिकं प्रदीयते।
एतादृक्पाप कर्तारो, धर्म्मात्मानः कथंनुते ॥१३७॥
पञ्चेन्द्रियस्य जीवस्य, बधान्मज्जादि जायते।
तत्क्रीत्वा यंत्रकादिषु, विलेपनं विधीयते ॥१३८॥
तादृशः कर्म्मणः कर्ता, पापात्मा किं तरिष्यति।

यदि धर्म्मात्मता तस्य, वधिकस्य कथंनु सा ॥१३९॥
तस्य प्रशंसकाश्चैव, तेऽपि पापानुमोदकाः ।
जीवाः किं किं न क्रियन्ते, चाल्पस्वार्थस्यसिद्धये ॥१४०॥
चरबीति च भाषायां, सैव मज्जा च संस्कृते ।
तयाविलिप्त वस्त्रादि, चाक चिक्याय गृह्यते ॥१४१॥
अशुद्धं तच्च वस्त्रादि, कथं देहेच धार्य्यते ।
धारणे तैश्च हिंसातः, न पृथग्भूयते कदा ॥१४२॥
अनुमन्ता विशसिता, निहन्ता क्रय विक्रयी ।
संस्कर्ता चोपकर्ताच, खादकश्चेति घातकाः ॥१४३॥
विचारो यदि चेत्स्वान्ते, स्वल्पमात्रोऽपि विद्यते ।
तदा यंत्रक कर्म्माणि, कार्य्यन्ते न कदाचन ॥१४४॥
अनुमोदनता तेषां, महापापाय जायते ।
तदाहारश्च दोषाय, तस्मात्साऽपि प्रत्यज्यते ॥१४५॥

## रात्रि भोजन निषेध वर्णनं

निशा भुक्तिश्च हातव्या, सर्वदा सर्व-मानवैः ।
सर्व दर्शन-वित्तैश्च, निषिद्धा शास्त्रचक्षुभिः ॥१४६॥
यदि चतुर्विधाहारं, परित्यक्तुं न शक्यते ।
तथाप्यन्न खाद्ये तु, क्रियेते नहि कर्हिचित ॥१४७॥

दोषाणां लोकनं सम्यक, प्रत्यक्षेण प्रतन्यते ।
अनेक जीव संहार, कारणं रात्रि भोजनम् ॥१४८॥
हीनाङ्गयाश्चाशनेनैव, बुद्धिर्नश्यति दूरतः ।
जलोदराय यूका तु, मक्षिका वान्तिकारणम् ॥१४६॥
कोलिकः कुष्ट रोगाणां, कारणं प्रणिगद्यते ।
कण्टकाद्यशनेनैव, विध्यते तालु निश्चितम् ॥१५०॥
गलेषु केशलग्नेन, स्वरभंगः प्रजायते ।
साक्षात्तेषांच दोषाणां, कारणं रात्रि भोजनम् १५१॥
परम्परा च दोषाणां, परिणामोऽति दुस्त्यजः ।
बुद्ध्यादीनां विनाशेन, सर्वस्वं परिणश्यति ॥१५२॥
नैवाहुतिर्न च स्नानं, नश्राद्धं देवतार्चनम् ।
दानं वा विहितं रात्रौ, भोजनंतु विशेषतः ॥१५३॥
पंच विंशति भाराणां, दुग्धानां पायसं कृतम् ।
तत्र रुधिर बिन्दुश्च, प्रक्षिप्तो यदि केनचित् ॥१५४॥
तदा तत्पायसं सर्वं, सर्वैश्च परित्यज्यते ।
असृग्रूपंच तन्मत्वा, केनचिन्नैव खाद्यते ॥१५५॥
तमस्विन्यशनस्यैव, पाचने प्रविलोक्यताम् ।
अनेक सूक्ष्म जीवानां, पतने किमु प्रोच्यते ॥१५६॥

पततां तेषु जीवानां, पतितं रुधिरादिकम् ।
कथं तद्भुज्यते श्राद्धैरन्यैश्च सुखलिप्सुभिः ॥१५७॥
पायसं रुधिरं जातमित्येवं हृदि मन्यते ।
तदाऽन्नादिक सद्वस्तु,मांसं किं नहि प्रोच्यते ॥१५८॥
रुधिर बिन्दु पातेन, सर्वं रुधिरमुच्यते ।
अनेक जीव संपाते, मांसं किं मूढ़! नोच्यते ॥१५९॥
वारि पानं तथा रात्रौ, क्रियते नैव धार्म्मिकैः ।
पततिवारि जीवेच, शोणितं च कथं न तत् ॥१६०॥
अस्तं गते दिवानाथे, आपो रुधिरमुच्यते ।
अन्नं मांस समं प्रोक्तं, मारकण्डेन महर्षिणा ॥१६१॥
स्वाचारो वै य आर्य्याणामार्य्यावर्तें निरूपितः ।
म्लेच्छानां विपरीतस्स, यवनानां सुलक्ष्यते ॥१६२॥
आर्य्यैः निशासु सर्वत्र, किंचिदपि न भुज्यते ।
कर्तव्यं किं तथाऽऽस्माकमिति रोजाव्रतंकृतम् ॥१६३॥
यच्चार्य्येभ्यो विरुद्धं हि, आचारितमनार्य्यकैः ।
तद्दृष्टान्तेन बोधव्यं, नार्य्याणां रात्रिभोजनम् ॥१६४॥
दृष्ट्वा प्रत्यक्ष दोषस्य, दृष्ट्वा च व्यवहारकम् ।
शास्त्रेऽपिदर्शितादोषा, अतोरात्रौनभोजनम् ॥१६५॥
उलूक काक मांर्जाराः, गृद्धादि पक्षिणस्तथा ।

नकुल-किरि-सर्पाश्च, जायन्ते रात्रि भोजिनः॥१६६॥
रात्रि भोजन दोषज्ञाः, प्रातः सायाह्नकालयोः।
द्वि घटिकांपरित्यज्य, धार्म्मिका भुञ्जते दिवा॥१६७॥
निशासु भोजनं जैनैः, भजनीयं न कर्हिचित्।
जिनाज्ञा हृदये येषां, ते शुद्धाःधार्म्मिकामता॥१६८॥
अनिशा भोजिनः सर्वे, वयं जैना प्रभाषिणः।
दुग्धादिकंच मिष्टान्नं, भुंजते ते विशंकया॥१६९॥
बाह्येन श्रावका एते, कथं रात्रौ च भोजिनः।
मिष्टान्नदुग्धभोगेषु, दम्भस्तेषांविलोक्यताम्॥१७०॥
यदि मिष्ठान्न भोक्तारः, कथं भोजन वर्जिनः।
निशाहारश्च हेयश्चेद्, दुग्धादि किमु भुंजते॥१७१॥
नाम्नैव श्रावका येतु, रात्रि भोजन वर्जिनः।
दुग्धादिसर्वभोक्तारः, किंतर्हित्यागिनोमताः॥१७२॥

## कुतर्क निषेध वर्णनम्

केचिद् वदन्ति रात्रौ च, भोजने नियमः कथम्।
अभक्ष्यानन्त कायानां, नियमश्चकिमर्थकः॥१७३॥
सत्यादि[1] नियमश्चैव, कार्य्यते साधुना सदा।

१—सत्यादि व्रतस्य।

अभक्ष्यानन्तकायानां, भक्षणं क्रियतां नवा ॥१७४॥
व्रतं रात्र्यशनस्यैव, कृत्वा मृषां च सेवते।
व्यवहारे च मूर्खाणां, गलच्छेदो विधीयते ॥१७५॥
बाह्य धार्मिक भावत्वमान्तरिकी प्रतारणा।
एतादृग्बकवृत्तीनां, लाभो न नियमे भवेत् ॥१७६॥
इत्यादि युक्तयस्तेषां, बालप्रतारणादिकाः।
मन्द बुद्धि मनुष्याणां, विशंति हृदये सदा ॥१७७॥
त्रिकाल ज्ञानि प्रोक्तानां, शास्त्राणामनुसारतः।
येषांमनसि श्रद्धास्यात्तेमिथ्यावादिनः कथम् ॥१७८॥
यदंशे त्यागवत्वं स्यात्कृतं च शुद्ध भावतः।
तस्मिन्ननंशे च हेयत्वं, दर्शितं सर्वदर्शिभिः ॥१७९॥
अभक्ष्यानन्तकायानां, त्यागभावश्च सर्वथा।
अव्रतानां मृषादीनां, साधुभिरुपदिष्यते ॥१८०॥
विचारोऽत्रापि कर्तव्यः, मनुजा भिन्नवृत्तयः।
त्यागाऽत्यागत्वभावश्च, आत्मिककर्मजोमतः।१८१।
यस्मिन्वस्तुनि येषांच, त्यागेच्छा परिजायते।

१—त्यागिता

पठिताऽपठितानांवै, त्यागस्तस्यैव कार्य्यते ॥१८२॥
त्यागेच्छा हृदये येषामभक्ष्यादिषु जायते ।
मृषादि त्याग एतेषां, कार्य्यते न बलादपि ॥१८३॥
मृषा त्यागे च काठिन्यं, खड्गधारा सम्मतम् ।
काठिन्यव्रतकर्तारः, सर्वे जना भवन्ति न ॥१८४॥
मृषा त्यागि नरैश्चैव, अभक्ष्यादि च त्यज्यते ।
इत्यपि नियमः शास्त्रे, किन्तु सर्वैर्न पाल्यते ॥१८५॥
उन्मत्तवच्च वक्तव्यं, प्रलापो बहुशस्सदा ।
युक्ति-युक्त न भाषित्वं,व्रतं किञ्चिन्नपाल्यते॥१८६॥
मृषा त्यागोऽपि कर्तव्यः, यद्यपि सम्यगेवहि ।
सत्यवादेष्वशक्तानां, बलेन नैव कार्य्यते ॥१८७॥
मृषा त्यागी च यः कश्चित्, परदारेषु खेलति ।
अमृषावादिनस्सर्वे, किं तदा परदारगाः ॥१८८॥
तथाऽभक्ष्यादिकत्यागी, कश्चित्प्रतारयेज्जनान् ।
तदा प्रतारकास्सर्वे,कथ्यन्त इतिवैकथम् ॥१८९॥
यदि कश्चिन्मृषा त्यागी, मद्यादिंच प्रपीबति ।
मदिरोन्माऽन्मावेन, हन्ति जीवान्बहूनपि॥१९०॥
विचारः क्रियते तत्र, सर्वे च सत्यवादिनः ।

मद्यपाश्च दुराचाराः, नोच्यन्ते कथमित्यपि ॥१६१॥
यथेष्टं जल्पतां भुक्ताम्, यथेष्टं पीयतां च भोः।
मृषात्यागस्य भो विद्वन् !, करणेकिं प्रयोजनम् ॥१६२॥
एवं विचारे कर्तव्ये, व्यवस्था नैव विद्यते।
यतो यस्मिंश्चहेयेच्छा, तत्त्यागस्खलु कार्य्यते ॥१६३॥
न्याय मार्गे समाने च, सर्वदा समता जुषि।
एकपाक्षिकमाश्रित्य, कथं वादो विधीयते ॥१६४॥
उपदेशोहि साधूनां, त्यागे सर्वस्य वस्तुनः।
यथाशक्त्या च कर्तव्यः, धर्म्मोहिगृहिभि स्तथा॥१६५।
सर्वथा त्याग भावश्च, साधुभिरूपदिश्यते।
तत्पालनेऽसमर्थैं यैः, देशतः किं न गृह्यते ॥१६६॥
अतोहि विषये यस्मिन्, येषाञ्च त्यागभावना।
तत्त्यागः कार्य्यतां नित्यमिति सर्वं व्यवस्थितम्॥१६७॥
व्रतानाञ्चैव सप्तानां, पालने च समर्थकैः।
उपर्युक्तं हि तत्सर्वं, धारणीयञ्च नित्यशः ॥१६८॥
पालनीयाः सदा सर्वे, नियमाश्च चतुर्दश।
सचित्त द्रव्यवैकृति, तंबोल वाहने तथा ॥१६९॥
कुसुमानि च वस्त्राणि, स्नानं दिग्धारणञ्चवै।

उपानच्छयनञ्चैव, ब्रह्मचर्य्यं विलेपने ॥२००॥
नियमा भक्तमित्याहुः, पालनीया व्रतार्थिना।
तेषां संवरसद्भावो, ह्यधिकत्वेन जायते ॥२०१॥
यथावै जल हारिण्या, भाजनं परिमृज्यते।
स्वच्छे पात्रे च कं स्वच्छं, पाने स्वादु प्रदृश्यते ॥२०२॥
तथैव व्रतधर्तॄणां, नियमा मल शोधकाः।
नियमेषु गृहीतेषु, उपयोगे च तीव्रता ॥२०३॥
उपयोगस्य तीव्रत्वे, भावशुद्धिः प्रजायते।
संवरो भावशुद्धेश्च, आश्रव प्रतिरोधकः ॥२०४॥
अतोऽपि नियमाः कार्य्याः, गंठस्याद्या तथैवच।
व्रतत्वे यादृशः कालः, जायते शुभभावतः ॥२०५॥
तदायुषश्चबन्धश्चेद्वैमानिकं विना नहि।
तादृगायुश्च संबध्य, मृत्वा तस्मिंश्च गम्यते ॥२०६॥
धन्या शुद्धव्रताचाराः, आडम्बरे न रंजकाः।
श्लाघ्या नरेन्द्र देवेन्द्रैः, धार्म्मिकास्ते जनामताः॥२०७॥

## वात्सल्यवर्णनं

तेषां सेवाऽपि पुण्याय, भक्तिर्लाभाय जायते।
सीदतांव्यवहारेऽपि, वात्सल्यं कुरु भावतः ॥२०८॥

येन केन प्रकारेण, धर्म्मे विघ्नं न जायते ।
तादृग् कार्य्यंच कर्त्तव्यं, तद्वात्सल्यं निगद्यते॥२०६॥
बहु यत्नश्च कर्त्तव्यः, स्वधर्म्मिवर्द्धने यतः ।
तद्वृद्धौ वृद्धिर्धर्म्माणां,तद्वृद्धौ सुप्रभावना ॥२१०॥
प्रभावना प्रणालिःप्राक्,जैन शास्त्रेषु विश्रुता।
तादृश्यद्योपलब्धा न, धर्म्मान्तरे तु सागता ॥२११॥
जगत्पूज्य सुसेव्येन, रत्नप्रभेण सूरिणा ।
ओशिया नगरीजातास्तेसर्वे श्रावकीकृताः ॥२१२॥
ओशवालेन प्रख्याता, शुद्धि कृता महात्मना ।
प्रभावना तु सा शुद्धा,कर्त्तव्या साधुभिस्तथा॥२१३॥
श्रीमाल नगरी जाता, उदय प्रभसूरिणा ।
ब्राह्मणाद्याश्च सर्वेते, श्रावकाः शुद्धितःकृताः॥२१४॥
पूर्य्याभ्यन्तर वास्तव्याः,श्रीमालाः कोटिरूप्यकाः ।
श्रीमाल नाम प्रख्याता, बाह्यास्ते 'पोरवालकाः'॥२१५॥
पालिजास्ते "पलीवालाः" "सोरठिया" सौराष्ट्रतः ।
'लाड्वा श्रीमाल'[१]प्रख्यातास्तादृशीसाप्रभावना॥२१६॥
दधिवाहन-पुत्रेण, राज्ञाच करकण्डुना ।

१—श्रीमालतोलाटेगमनात्ते लाड्आ श्रीमालिनाम्नाख्याता।

व ाटधानकवास्तव्या श्चाण्डाला ब्राह्मणीकृताः॥२१७।
जातितो भेद भावो न, आचार्य्येण स्थिरीकृतः।
अस्माभिश्च कथं तत्र, भेदभावो विधीयते ॥२१८॥
था सत्कूप तडागादौ, विद्यते न जलागमः।
व्ययस्तु प्रचुरस्तत्र, कियत्तिष्ठति तज्जलम् ॥२१६॥
तथैव जैन धर्म्मादौ केषामागमनं नहि।
व्ययकारणप्राबल्यं, कियान्धर्म्म स तिष्ठतिः॥२२०॥
धर्म्मान्तरीय लोकाश्च, गृह्णन्ति श्रावकान्मुहुः।
समर्प्य धन पुत्रादि[1], श्राद्धैः किं क्रियते तदा॥२२१॥
यदि केचिद्विधर्म्मीयाः, जैना भवितुमागताः।
तद्भेदोऽव्यवहारे च कथं जैनाः भवन्तिते ॥२२२॥
प्रतिबन्धं स्वजातीनां[2] कुर्वन्ति द्वेष भावतः।
सहायताञ्च नो जैना, दद्यु स्तेषाञ्च किं भवेत् ॥२२३॥
अतस्सर्वैश्च संमील्य, चिन्तनीयञ्च सर्वदा।
त्रिशंकुन्यायता तेषामागता किमुवा नहि॥२२४॥
अतः स्वान्त-विशालन्तु, कृत्वा सर्व विचार्य्यताम्।
शुद्धिभूतैर्भवद्भिश्च, परेषां किं निषिध्यते ॥२२५॥

१—पुत्रादीन्। २—स्वजातीयाजनाः।

ओशवाल कुले जाता, आचारेण विहीनकाः ।
कुलेन किमु कर्तव्यं, यत्राचारस्य शून्यता ॥२२६॥
अधः कुले प्रसूतोऽपि, यत्राचार-पवित्रता ।
प्रमाणं तत्कुलंज्ञेयमन्यन्नहि प्रमाणकम् ॥२२७॥
भिन्न देशे प्रजाता ये, भिन्नाहारेण पोषिताः ।
जैन शासनतां प्राप्ताः सर्वेते बान्धवामताः ॥२२८॥
जैन शासन संप्राप्ताः, येकेऽपि च मनुष्यकाः ।
तैस्समं व्यवहारेच, भेद्भावो न शोभते ॥२२९॥
येन केन प्रकारेण, सम्यग्धर्म्मश्च प्राप्यते ।
सर्वोत्तमं तु वात्सल्यमन्यत्सर्वं प्रपंचकम् ॥२३०॥
धर्म्मशीलाश्च ये ज्ञेयाः, अन्येषां धर्म्मप्रापकाः ।
दृष्ट्वा साधर्म्मिकान्बधून्मन्यन्तेप्राणतोऽधिकान् २३१
इमे शासन पक्षीयाः, इमे युवक संघजाः ।
इमे खरतराज्ञेया, वै तपोगच्छका इमे ॥२३२॥
इमे दिगम्बरा ज्ञेया, इमे श्वेताम्बरा अपि ।
ते सर्वे चैकदेशीयाः, क्लेशवर्द्धक संज्ञकाः ॥२३३॥
भाषमाणा वयं जैनाः वीतरागानुयायिनः ।
शासन वर्धका ये च, ते सर्वे सार्वदैशिकाः ॥२३४॥

ते महापुरुषा ज्ञेया, महाप्रभावकाश्चते ।
साधर्म्मिकाय सर्वस्वं, दातारो दुर्लभाभुवि ॥२३५॥
साधर्म्मिकस्य संबन्धश्चाधिकस्तु सहोदरात् ।
सः सम्बन्ध इहैव स्यात्साधर्म्मिको भवान्तरे ॥२३६॥
कामदेवादयो धन्याः, धन्याश्चासंप्रतिनृपाः ।
साधर्म्मिकं सुहृद्भावं, प्राणान्ते न त्यजन्तिते ॥२३७॥
वर्णितञ्च प्रसङ्गेन, ससमेव्रतवर्णने ।
दर्शितो खलुमार्गोऽयं, नृपादिव्रतधारिणाम् ॥२३८॥

तृतीयगुणव्रतं ( अनर्थदण्डनिषेधवर्णनं )

शरीर ज्ञाति वर्गाय, यत्किञ्चिन्नोपयुज्यते ।
अनर्थ दण्डरूपंतत्, सर्वं सर्वैश्च गीयते ॥२३९॥
प्रयोजनं विनाऽनर्थदण्डेन किमुदण्ड्यते ।
अनर्थ कर्म्मबन्धश्च, क्रियते कथमात्मनि ॥२४०॥
हास्य खेलन सारूप्य, चेष्टाकौतुक कारिणी ।
शारीरिक कुचेष्टाच, सर्वानर्थकदण्डिका ॥२४१॥
कृष्यर्थं कर्षकेभ्यश्च, प्रदत्तं कृषिसाधनम् ।
शकटादिकवाहाय, दत्तं तेभ्यः प्रमादतः ॥२४२॥
व्यापारे पशुजातीनां, धान्यानाञ्च कुवस्तूनाम् ।

आनयनायतेषाञ्च, दत्ताबुद्धिरनर्थदा ॥२४३॥
पापोपदेशदातृत्व, फालिकुद्दालके तथा ।
पेषणी चुल्लिकेचैव, रथोदुखल मूशलम् ॥२४४॥
संस्कृत्य प्रविमुक्तानि, याचकदापनाय च ।
ज्ञेयमनर्थमेतच्च, जातं कर्म्म समर्पणे ॥२४५॥
तडागादिक संस्थाने, गालन रहिते जले ।
स्नानाद्यं घोलनंचैव, पादानां धावनं तथा ॥२४६॥
अग्निदात्र्यादिहिंस्त्रञ्च, दाक्षिण्याच्चप्रयच्छतः ।
अनर्थ दण्डनं तस्य, लगति नाऽत्रसंशयः ॥२४७॥
अष्टम्यादौ तिथौचैवं, खण्डनं पेषणं तथा ।
धार्म्मिकाचरणंनैतत्कार्य्यं नैव व्रतार्थिना ॥२४८॥
असंबद्ध प्रलापित्वं, प्रमादाचरणं तथा ।
निरर्थक जलादीनां, क्षेपणेऽनर्थ दण्डनम् ॥२४९॥
उपयोगेनतत्सर्वं, दृष्ट्वा भूमौं वितन्यते ।
तत्रनाऽनर्थदण्डत्वं, चिन्तनीयंच सर्वदा ॥२५०॥
द्यूत व्यसन सेवित्वं, नाटक प्रेक्षणादिकम् ।
आक्रोश कारिवाणित्वं, यद्वतद्वा प्रजल्पनम् ॥२५१॥
मात्सर्य्यं धारणेनैवं, शापानांच प्रदानकम् ।

पापपोषक युद्धं च, वैरिणांपशुपक्षिणाम् ॥२५२॥
तेषां युद्धं च पश्यन्तामिर्ष्यादिना च प्रेरणम्।
शटिताऽऽन्नस्य दानंवै, व्यापारकरणे मतेः ॥१५३॥
अपर धननाशादि, चिन्तनंद्वेष भावतः।
इत्यादिकं च कर्तव्यमनर्थं दण्डपोषकम् ॥२५४॥
यत्र लाभोन विद्येत, दोषश्च प्रचुरोमतः।
त्यागिनाऽनर्थो दण्डस्य,नैव कार्य्यंहि कर्म्मंतत्॥२५५॥

इति श्री शास्त्रविशारद जैनाचार्य्य जगन्मान्य
शासन प्रभावक जंगम युग प्रधान श्रीविजय
धर्म्मसूरि शिष्येण न्यायतीर्थ न्याय
विशारदोपाध्यायमङ्गल विजयेन
विरचिते योगे प्रदीपे गुणव्रत
त्रयो निरूपण नामाऽयंतृतीय
प्रकाशः ॥

# चतुर्थ प्रकाशः

## प्रथम शिक्षाव्रतम्

गुणव्रत त्रयाणांच, तृतीयेहि निरूपणम् ।
चतुः शिक्षाव्रतानाञ्च, करोमि प्रतिपादनम् ॥१॥
समता सर्वभूतेषु, समता शत्रु मित्रयोः ।
शमः स्त्रैणेषुशस्येषु, स्वर्णेऽश्मनिमणौमृदि ॥२॥
सर्वथा देशतश्चैवं, शमनं रागद्वेषयोः ।
तस्याऽयः प्राप्तिर्यत्तु, समायः परिकीर्तितः ॥३॥
सामायिकं भवेन्नाम, प्रत्यये स्वार्थिकेठकि ।
अथवा त्यागता मोह, क्षयोपशमयोगतः ॥४॥
क्षायोपशमिकं तत्र, सामायिकंप्ररूपितम् ।
संयमिनाञ्च विज्ञेयं, षष्टादिगुण भूमिके ॥५॥
अष्टानांच कषायाणां, क्षयोपशम योगतः ।
सामायिकंच विज्ञेयं, देशतो गृहमेधिनाम् ॥६॥
द्वादशानां कषायाणां, क्षयोपशमभावतः ।
चारित्र परिणामोयः, सर्व सामायिकं मतम् ॥७॥
एतत्सराग चारित्रं, कथितं सर्वदर्शिभिः ।

विशुद्ध पालनेनाऽपि, चारित्रं च विशुद्धयेत् ॥८॥
कषायाणांच सर्वेषां, यत्रोपशमता भवेत् ।
औपशमिकचारित्रमेकादशगुणालये ॥९॥
मलानामुपशाम्येन, औपशमिकता भवेत् ।
तच्च सामायिकं शुद्धं, किंचन कालयोगतः ॥१०॥
सर्व चारित्र मोहस्य, सम्पूर्ण क्षय भावतः ।
सर्वथा शुद्ध चारित्रं, यथा ख्यातंच निर्म्मलम् ॥११॥
प्राप्तावस्थांच शैलेसीं, योगरोधादनन्तरम् ।
सर्व संवर रूपत्वं, सर्व सामायिकं मतम् ॥१२॥
एतत्सामायिकं ज्ञेयं, चतुर्दश गुणालये ।
"इर्यापथिकता"युक्तं, सामायिकं सयोगिनि ॥१३॥
क्षायोपशमिकानान्तु, स्वरूपं प्रतिपादितम् ।
सर्वतो देश भेदेन, ततः सर्वं व्यवस्थितम् ॥१४॥
सामायिकेच कर्तव्ये, सावद्यत्याग रूपके ।
यावद्द्विघटिकाकालं, स्थितःसर्वविशुद्धिमान् ॥१५॥
कर्म्माणि यानि नश्यन्ति, तद्वक्तुं नैव शक्यते ।
मृतेच देवलोकादौ, गच्छतिनाऽत्र संशयः ॥१६॥
कश्चित्सामायिकं कर्त्तुं, स्थितः पौषध शालके ।

सावद्यत्यागभावस्य, स्वरूपं नावबोधते ॥१७॥
व्यवहारिक वस्त्राणि, त्यक्त्वाऽन्यानिच धारयन् ।
"करेमिभंत" इत्यस्य, पठति पाठमित्यपि ॥१८॥
कश्चिद्गणयतेमालां कश्चित्पठति पुस्तकम् ।
कश्चिद् वार्ताविनोदंच,करोति चौघ संज्ञया ॥१९॥
कंचित्पुत्राद्यश्चैव, तत्रागत्य वदन्तितं ।
भोपितः कुंचिकां देहि,मम किंचत्प्रयोजनम् ॥२०॥
वदत्यज्ञश्च भो पुत्र,अहं सामायिके स्थितः ।
कुंचिका मम वस्त्रेऽस्ति,शीघ्रमादायगच्छतु ॥२१॥
ततश्चासौ समादाय, त्वरितमेव गच्छति ।
गत्वा सारम्भ कार्य्याणि,करोति स्वेच्छया ततः ॥२२॥
काचिद्पर जीर्णा[1]तु, स्थानकवासिनी तथा ।
सामायिके मुखं बद्ध्वा,स्थिता च गृहकोणके ॥२३॥
पक्त्वा घाटादिकं सर्वं[1], जातावधूश्च निश्चिता ।
गृहमार्जन कार्य्यं च, करोति व्यवहारतः ॥२४॥
तदाहि कुक्कुरश्चैकः, पाकशालासुचागतः ।

---

१—स्थानके ।

१—वृद्धा ।

तया स्थविरया दृष्टः, घाटादि खादनोत्सुकः ॥२५॥
तत्काले मरुभाषायां, वधूटी बोधनाय च ।
दूहेति संज्ञकं गीतं, पठितं संश्रुतं तया ॥२६॥
"सुन वहुवडमोरी, सासुरी एक बात ।
गंडकजी बढ़िया, घरमें कीनो ठाठ ॥
कुत्तो जी आया, खायो हांडो रो घाट ।
हामायिक मारे, थारे नहि को ठाय" ॥२७॥
इति प्रजल्प्य वध्वैतु, ज्ञापितं मनसि स्थितम् ।
पूर्णे सामायिके जाते, किं भक्ष्यामो वयंकिल ॥२८॥
एतादृक् कार्य्यं कर्तव्ये, को लाभो भो विचिन्त्यताम् ।
संमूर्च्छिमप्रवृत्याभं, जायतेऽशुभयोगतः ॥२९॥
अतो ज्ञानोपयोगेन, कर्तव्यं सर्वदा जनैः ।
आत्मनोगुणसद्भावः, सावद्यत्यागतो भवेत् ॥३०॥
त्रितय योग शुद्धेन, प्रमादपरित्यागतः ।
आत्म-संज्ञान-सद्रूप-चरणंचिन्तनं मुहुः ॥३१॥
येनकेन प्रकारेण, मलानां परिशोधनम् ।
गुणदोषासिनाशौ च, सामायिक फलं महत् ॥३२॥
सामायिकस्य कर्त्तव्ये, क्रिया शुद्धिः प्रजायते ।

यतः शुभस्य वृद्धिस्यात्, शुभभाव समागमात् ॥३३॥

धौतवस्त्रश्च प्रच्छाद्य[1], निर्विघ्ने स्थानके शुभे ।
आसनं मुखपत्तिश्च, हस्तेलघु रजोहरम् ॥३४॥
प्रतिलेख्यानि सर्वाणि, ततः क्रियां समाचरेत् ।
वस्त्रबन्धनमास्ये न, कार्य्यंते चरणेच्छुभिः ॥३५॥
मुखबन्धं समायेतु, क्रियते फललिप्सया ।
प्रत्युत जीव वैनाशे, पातकं किल जायते ॥३६॥
उपर्य्युपरि निष्ठयूतं, पतति च मुहुर्मुहुः ।
उत्पत्ति सुक्ष्म जीवानामुक्ता प्रज्ञापनादिके ॥३७॥
समये समयेऽसंख्य, जीवानां परिनाशनम् ।
अहिंसा परिपालाय, मुखबन्धं न तन्यताम् ॥३८॥
मुखबन्धो यतस्स्यात्तु, मुखपत्तिर्वचोमृषा ।
मुखे पतनशीला सा, मुखपत्तिर्निगद्यते ॥३९॥
आचारङ्गस्य सूत्रस्य, रुद्रे चाध्ययने तथा ।
श्वासोच्छ्वासस्य निष्कासे, जल्पनेक्ष्वेडकेतथा ॥४०॥
मुखं हस्तस्थ वस्त्रेण, पिधाय जल्पनं कुरु ।
कासादिकां क्रियां सर्वां, कुर्य्याद्धस्तैःपिधाय च ॥४१॥

1—परिधाय ।

उपयोगेन धर्म्मोऽपि, क्रियातः कर्म्म कथ्यते ।
परिणामेन बन्धःस्यात्, परमार्थेन बोध्यताम् ॥४२॥
मुखबंधे कुलिङ्गत्वं, कुलिङ्गाद्धर्म्मभ्रष्टता ।
कुलिङ्गं नैव कर्तव्यं, मुखबन्धनतां त्यजेत् ॥४३॥
पूर्वं क्षमासनं देयं, तत "इर्या" निगद्यताम् ।
तस्सुत्तरि मनथ्थादिं,जल्पित्वा ध्यानमाश्रयेत् ॥४४॥
नमस्काराश्च चत्वारः, ध्यातव्या ध्यानतः खलु ।
ततो लोगस्स पाठश्च, स्पष्ट रूपेण कथ्यते ॥४५॥
ततः क्षमासनं पश्चाद्मुखपत्तिप्रलेखनम् ।
प्रतिलिख्य च लाभाय,आदेशौद्वौ विमार्ग्यताम् ॥४६॥
नमस्कारैक वक्तव्यं, "करेमिभंते" याचनम् ।
स्वयं वा गुरु सामीप्पे, सकृत्पाठस्य जल्पनम् ॥४७॥
आदेशाश्चैव चत्वारः, नमस्कारत्रयी ततः ।
अध्यात्म चिन्तनं पश्चात्स्थेयं सामायिकेसदा ॥४८॥
गमनागमशुद्ध्यर्थमिर्य्यापथिकमुच्यते ।
विना शुद्धिं समायस्य, फलं शुद्धं न प्राप्यते ॥४९॥
पूर्वं "करेमि भन्ते" च, कृत "इर्य्या" न युज्यते ।
"इर्या" गति विशुद्धाय, न कृतं गमनादिकम् ॥५०॥

विनागमनकर्तव्ये, यदीर्य्या प्रतिक्रम्यते ।
तदा खल्वनवस्थास्यादतः स्वान्ते विचार्य्यताम् ॥५१॥
यदि शुद्धिं नवै कृत्वा, करेमिभंत उच्यते ।
तदा शुद्धदशायाम्वै, ह्यशुद्धिश्चागता कुतः ॥५२॥
प्रागशुद्धौ समायंतु, क्रियते तन्न युक्तिमत् ।
पश्चादीर्य्या च कर्तव्या, युक्तं नैतद्वचः खलु ॥५३॥
अतः शान्तस्वभावेन,मध्यस्थेन विचार्य्यताम् ।
लाभालाभौ समालोच्य,कर्तव्यं शुभमिच्छता ॥५४॥
रागद्वेषत्वविध्वंसः, शुद्धं सामायिकं मतम् ।
तदातु सफलं जन्म, प्राप्यते यच्च तादृशम् ॥५५॥

## द्वितीयशिक्षाव्रतम्

देशावकाशिकाख्यश्च, व्रतं तदधिकंमतम् ।
अन्येषांहि व्रतानाञ्च, संक्षेपोऽत्र वितन्यते ॥५६॥
सर्व-व्रतेषु यस्त्यागः, कृतोऽपि स्थूल रूपतः ।
अत्राऽपि तस्यसंक्षेपः, क्रियतेलाभमिच्छता ॥५७॥
घटिका षोडशंयावत्स्थेयं, सामायिके च वै ।
सायं प्रायः प्रतिक्रान्तिः,मता देशावकाशिके ॥५८॥
एकाशनोपवासादि, प्रभृतिशक्तितस्तपः ।

कर्तव्यं शुभभावेन, सर्वं शास्त्रानुसारतः ॥५९॥
गृहीत्वोपाश्रये स्थेयं प्रत्याख्यानाद्यभिग्रहम् ।
सामायिकफलापेक्षा, फलाधिकंविबोध्यताम्॥६०॥
बहुसंबरसद्भावः, सामायिकाच्च जायते ।
विनयादि गुणोद्भावाद्, निर्जरा प्रचुरा मता ॥६१॥
अतः सर्वं परित्यक्त्वा, तिथिपर्वादिकेषु च ।
देशावकाशिकाख्यं च, कर्तव्यं सर्वदा खलु ॥६२॥

तृतीय शिक्षाव्रतम्

पूर्वं व्रतेषु हेयानां, नियमः स्थूलतः कृतः ।
अत्रविशेषतस्तेषां, त्यागभावो विधीयते ॥६३॥
पुष्टिमात्मगुणानां च, धत्तेतत्पौषधंव्रतम् ।
निरुक्त्या कथ्यमानेऽपि, चिन्तनीयं मुहुर्मुहुः ॥६४॥
भावितः शुभभावेन, आत्माचैकादशेव्रते ।
ज्ञान दर्शन चारित्र-गुणानां पुष्टिता मता ॥६५॥
अष्टानां च कषायाणां, मलानां शोधनादतः ।
आत्मनि शमभावःस्याद्,गुणवृद्धिस्ततोभवेत्॥६६॥
संवरःपौषधे त्रिंशद्,गुणःसामायिकान्मतः ।
महाफलस्य लाभाय, कर्त्तव्यं तादृशं व्रतम् ॥६७॥

यदिमृत्युर्भवेत्तत्र, वैमानिकां गतिं विना ।
अन्यागतिर्न जायेत, शास्त्रमेतद्विबोध्यताम् ॥६८॥
उत्कृष्टादि जघन्यान्तं, तपोऽप्यत्र विधीयते ।
उत्कृष्ट उपवासस्स्यादेकासनं जघन्यकम् ॥६९॥
केवलिभिः समाख्यातं, पौषधन्तुचतुर्विधम् ।
आहार देह संस्कार, व्यापाराब्रह्मत्यागतः ॥७०॥
अशनं पानखाद्ये च, स्वाद्यमिति चतुर्विधम् ।
आहाराणांच सर्वेषां, त्यागादाहारपौषधम् ॥७१॥
एकाशनादिकर्त्तव्ये, एकभक्तस्यहेयतः ।
देशतः पौषधं ज्ञेयमशनमवलम्बतः ॥७२॥
वीतराग सपर्य्या च, कार्य्या पौषधकारिणा ।
पूजां विना च सद्भाव, वृद्धिर्नो गृहमेधिनाम् ॥७३॥
अतोऽपि वीतरागस्य, पूजा कार्य्या च सर्वथा ।
यथा देवाधिदेवानां, नामतो दर्शनेऽधिका ॥७४॥
तत्राऽपि स्पर्शने वृद्धिः, जायते शुभभावतः ।
वृद्ध्यर्थं हि भावानां, देवपूजा विधीयताम् ॥७५॥
देवाधिदेव पूजायाः, क्षणे स्नानंच युज्यते ।
तावच्च स्नानसंस्कारः, त्याज्योयावद्व्रतस्थितिः॥७६॥

सर्वथा देह संस्कार, त्यागतः सर्वपौषधम् ।
देशतस्त्यागभावेन, देशतोऽस्नानपौषधम् ॥७७॥
सर्वथा व्यापृतित्यागे, सर्वव्यापारपौषधम् ।
देशतो व्यापृति त्यागे,देशव्यापार पौषधम् ॥७८॥
ब्रह्मचर्य्यं दिवा रात्रौ, त्यागेन स्व-परस्त्रियः ।
ब्रह्मपौषधं सर्वं तत्, परस्त्रीत्यागिदेशत[1] ॥७९॥
चतुर्णां पौषधानांच, पालनं सर्वथा मतम् ।
पौषधव्रतमित्येवं, रूढिप्रधानतो मतम् ॥८०॥
पौषधमुपवासोऽपि, आहारत्यागरूपत ।
यथाशक्त्या च कर्तव्यं, सर्वदेश प्रभेदत ॥८१॥
देशपौषधवक्तव्ये, बाधा काचिन्न लक्ष्यते
अन्यथा वीरनिर्वाणे, युज्यन्ते न प्रदीपकाः ॥८२॥
निर्वाणञ्च तदा रात्रौ, श्रावकैः पौषधस्थितैः ।
प्रयुज्यन्ते कथं दीपाः,श्राद्धैः सावद्यहेयकैः[2] ॥८३॥
अतोऽत्र दीर्घया दृष्टया, विचार्य्यतां सुभावतः ।
चतुर्विधंकृतं नैव, आहारत्यागरूपकम् ॥८४॥

१—केवलपरस्त्री त्यागिनो गृहस्थस्य देशतोब्रह्मचर्यम् ।

१—सावद्यत्यागिभिः ।

द्वादशानां व्रतानां वै, पौषधमुत्तमं व्रतम् ।
पर्वतिथौ विशेषेण, कर्तव्यमप्रमादिभिः ॥८५॥
सूर्य्ययशःप्रमुख्यानां, नृपाणां पूर्वकालिके ।
कुमारपालराजानां, कालो मीलति पौषधे ॥८६॥
सर्वं कार्य्यं परित्यज्य, ऐहिकं च प्रयत्नतः ।
महाशयाः प्रकुर्वन्ति, पौषधं पारलौकिकम् ॥८७॥
अद्यतनगृहस्थानां, वार्तायां समयो बहु ।
जायतेऽतीव हर्षेण, धर्म्मकार्य्ये न विद्यते ॥८८॥
देह पोषण कार्य्येण, भ्रमयन्ति दिवा निशि ।
धर्म्मकार्य्ये घटीं नैव, मूढधीनां च मीलति ॥८९॥
विना धर्म्माद्धनं कुत्र, सुखं धर्म्मादृते नहि ।
अतो धर्म्मस्य कार्य्येषु, प्रयत्नशीलवान्भव ॥९०॥
बाह्यप्रदर्शनं नैव, आत्मौन्नत्यै च पौषधम् ।
कर्म्ममलविलीनार्थं, क्रियतां पर्व पौषधम् ॥९१॥
केचिन्निद्रां प्रकुर्वन्ति, सामायिके च पौषधे ।
केचित्कथां प्रकुर्वन्ति, वार्तालापं च केचन ॥९२॥
क्रियाऽजीर्णं परनिन्दा, ज्ञानाजीर्णमहंकृतिः ।
तपोऽजीर्णं प्रकोपादि,भुक्त्यजीर्णं विरेचनम् ॥९३॥

अन्यत्राप्यन्यनिन्दा च, कर्त्तव्या न कदाचन ।
पौषधधारिभिस्तर्हि, किमर्थं सा विधीयते ॥६४॥
परनिन्दा महापापं, नीचगोत्रप्रदायिनी ।
परनिन्दाप्रभावेन, जायते खल्वधोगतिः ॥६५॥
अतोनिन्दा न कर्त्तव्या, यस्यकस्यापि जन्तुनः ।
स्वाध्यायध्यानताकार्य्या, पौषधेगुणकांक्षिणा ॥६६॥
अतोऽत्र पोषधेचैव, प्रमादो नहि कश्चन ।
कर्त्तव्यः शुभ-भावेन, धर्म्मं ध्यानं विधीयताम् ॥६७॥
आनन्दकामदेवेन, पोषधं शुभभावतः ।
कृतं तथैव कर्त्तव्यं, श्रावकैः सुसमाधितः ॥६८॥
अनुक्ताः करणं तत्र, गंठस्याद्या अभिग्रहाः ।
आगतास्तत्प्रभेदाश्च, देशावकाशिके व्रते ॥६९॥

## चतुर्थशिक्षाव्रतम्

अतिथिसंविभागस्य, करणं द्वादशव्रतम् ।
मुनीनां प्रतिलाभेन, पौषधस्य विचारणे ॥ १००॥
विज्ञप्तिरन्नपानार्था, क्रियताम्वै ह्युपाश्रये ।
सद्भक्त्या गृहमानीय, समीपे वस्तुढौकनम् ॥१०१॥
मुनिर्गृह्णाति यद्वस्तु, चारित्रपरिपुष्टये ।

गृहस्थैवैच तत्सर्व, भोक्तव्यं गुणकांक्षिभिः ॥१०२॥
ग्रामे च साधवः सन्ति, पौषधंतत्समीपके ।
धर्म्म पुष्ट्यैच कर्तव्यमुत्तरलाभ कांक्षिणा ॥१०३॥
प्रदानमासनादीनां, शुद्धाहारनिमन्त्रणम् ।
प्रतिलाभनतः पश्चाद्गन्तव्यंच कियत्पदम् ॥१०४॥
अन्नादीनां मुनीनांवै, प्रयोजनं न विद्यते ।
तदाग्रहो न कर्तव्यः, आहाराय गृहस्थकैः ॥१०५॥
ग्रामे मुनेरसद्भावे, दिशांतु प्रविलोकनम् ।
ते ग्रामनगरे धन्ये, मुनिपादैः पवित्रिते ॥१०६॥
मुनीनां चरणन्यासैः, हयुदेशप्रदानतः ।
व्याख्याभ्यन्तर द्वैतंच पवित्रं तद्धि मन्यताम् ॥१०७॥
नगरं मामकीनंच, पावयिष्यन्ति ते कदा ।
तदा पवित्रमात्मानं, मन्यामहे सुभावतः ॥१०८॥
भावनेति च कर्त्तव्या, मुनीनां शुभभावतः ।
व्रतधारिगृहस्थेन, चान्येनाऽपि तथैवच ॥१०९॥
अभावे तु मुनीनांवै, गृहिणां व्रतधारिणाम् ।
ज्ञापनीयश्च सद्भावः, गृहमानीय योग्यतः ॥११०॥
अभावेव्रतधर्तॄणां, सम्यक्त्वगुणशालिनाम् ।

भावभक्तिर्विधातव्या, प्रमोद्भावनावता ॥१११॥
येन केन प्रकारेण, सीदतां गृहमेधिनाम् ।
धर्म्मेऽपि प्रेरणा कार्या, द्वादशव्रतधारिणा॥११२॥
श्रावका द्विविधा ज्ञेयाः, व्रत्यव्रति-विभेदतः ।
व्रताचरणता येषां, ते श्राद्धाव्रतिनो मताः ॥११३॥
व्रतलेशोऽपि येषां न, चतुर्थगुणस्थायिनाम् ।
श्रद्धाधनेन संयुक्ताः, अव्रताः श्रावका मता ॥११४॥
श्रद्धाऽपि हृदये नास्ति, किन्तु सम्यक्त्व काङ्क्षिणः ।
मार्गानुसारिसंयुक्ताः,श्लाघ्यास्तेऽपिकथञ्चन॥११५॥
येषां सम्यक्त्वरत्नंवै, हृदये विद्यते दृढम् ।
ते धन्याः पुरुषाः ज्ञेया, लघुकर्मत्वपोषकाः ॥११६॥
निगद्यते तरिः श्रद्धा, संसारोदधितारणे ।
अनन्ते भ्रमतां काले, जीवानां सा च दुर्लभा ॥११७॥
वीतरागं विना नाऽन्यं, देवं स्वप्नेऽपि मन्यते ।
मन्यन्ते वै गुरुं नान्यं, शुद्धप्ररूपकं विना ॥११८॥
सर्वज्ञप्रोक्तसद्धर्म्मं, रत्नत्रयस्वरूपकम् ।
धर्म्मतत्वं विना तस्मात्प्राणान्तेऽपिन मन्यते ॥११९॥
स्वरूपं तस्य किंचिच्च, कथ्यते शास्त्र योगतः ।

स्वबुध्या कल्पिते धर्मे, दोष.पत्तिश्च जायते॥१२०॥
यतः शास्त्रं पुरस्कृत्य, वक्तव्यं ज्ञानिभिः सदा।
ततस्तदुच्यते किञ्चित्. श्रूयतां शुद्धभावतः॥१२१॥

इति शास्त्र विशारद जैनाचार्य्य जगत्पूज्याऽऽ
चार्य्य शिखामणिपूज्यपाद गुरुदेव विजय
धर्म्मसूरिशिष्येण न्याय विशारद न्याय
तीर्थोपाध्याय मंगलविजयेन विर
चिते योगप्रदीपे शिक्षाव्रत
वर्णन नामा चतुर्थप्रकाशः

## ॥ पञ्चमप्रकाशः ॥

चतुःशिक्षा व्रतानाञ्च, संक्षेपेण निरूपणम् ।
कृतं पूर्व प्रकाशेऽपि, विना श्रद्धां न युज्यते ॥१॥

### सम्यक्त्वस्वरूप वर्णनं

स्वान्ते श्रद्धाधनं यस्य, जन्म तस्यैव सार्थकम् ।
हृदि श्रद्धाधनं नास्ति, व्रतं तस्यच निष्फलम् ॥२॥
सहस्रविन्दुलेखेऽपि, एकांकञ्च कृतं न वै ।
यथा तेषाञ्च विन्दूनां, गणना नोपयुज्यते ॥३॥
तथा व्रतेऽपि कर्तव्ये, सम्यक्त्वं यदि नो धृतम् ।
विन्दुसदृग् व्रतानाञ्च, गणना नैव विद्यते ॥४॥
अतः सम्यक्त्वरत्नस्य, स्वरूपं किंचिदुच्यते ।
भव्यानां प्रतिवोधाय, स्वात्मनोऽपिहिताय च ॥५॥
अनादि काल संसारे, भ्रमतां कर्म्म योगतः ।
यथाप्रवृतियत्नश्च, लभ्यतेऽनेकशः खलु ॥६॥
अध्यवसायवैशेष, करणं प्रतिपादितम् ।
त्रिविधं तद्धि वोधव्यं, सम्यक्त्व साधनंमतम् ॥७॥
यथा प्रवृति यत्नाख्यं, चापूर्व करणं तथा ।
अनिवृतिप्रयत्नंच, तात्पर्य्यार्थो निगद्यते ॥८॥

उपयोगं विना कार्य्ये, व्यापारे साधनं भवेत् ।
तादृशाऽध्यवसायश्च, यथाप्रवृतिनामकः ॥६॥
अकामनिर्जराद्वारा, पुद्गलावर्तकं द्वयं ।
अवशिष्टश्च संसारः, तदाऽविवेकभावतः ॥१०॥
धर्म्मश्रवणजिज्ञासा, तदानिं जायते तथा ।
श्रवणसंमुखीकालः, स ज्ञेयो जैनशासने ॥११॥
संसारे भ्रम्यमाणानां, पुद्गलावर्त साधकम् ।
संसृतिरवशिष्ठास्याद्, विशुद्धिश्चाधिका भवेत् ॥१२॥
मार्गानुसारिणांचैव, प्राप्तेच्छा परिजायते ।
स मार्ग सन्मुखीकालः, धर्म्मपथेच यातिवै ॥१३॥
अकाम निर्जराभिश्च, विनाशो वै-च कर्म्मणाम् ।
पुद्गलावर्त एकस्यात्संसारस्यावशिष्टता ॥१४॥
बाह्याडम्बरधर्म्माणां, तदातु परिहेयता ।
सर्वज्ञदर्शिते मार्गे, प्राप्तुमिच्छा प्रजायते ॥१५॥
मिथ्यात्ववासना मन्दा, आत्मशुद्धि गवेषणम् ।
तत्कालोऽसौ विबोधव्यः धर्म्मयौवननामतः ॥१६॥
यथाप्रवृतियत्नाख्यं, जीवेनासमनेकशः ।
अनेकवार प्राप्तेऽपि, कार्य्यसिद्धिस्तु दुर्लभा ॥१७॥

अकाम निर्जरां तांच, ततो विशेषरूपतः ।
कुर्वतां कर्म्म सप्तानां, स्थितिह्रासः प्रजायते ॥१८॥
यथा मिथ्यात्वमोहानां, कर्म्मणां बृहती स्थितिः ।
सप्तति कोटि कोटीनां, सागरोपमताजुषाम् ॥१९॥
तावत्क्षपयते यावत्, पल्योपमत्वसंख्यतः ।
भागोना कोटि कोटि,सागरोपमाऽवशिष्यते ॥२०॥
सर्वेषां कर्म्मणाञ्चैव, विज्ञेया स्थितिरीदृशी ।
तात्पर्य्यार्थो निगद्येत, श्रूयतां शास्त्रयोगतः॥२१॥
या व्यक्तिः पूर्वकालेतु, चाबध्नान्मोहनीयकम् ।
सप्ततेः कोटिकोटीनां,स्थितिकास्तच्चूनाऽधुना॥२२॥
पूर्वोक्तं स्थितकञ्चैव, बध्नान्ति कर्म सप्तकम् ।
स्थित्यधिकं न बध्नाति, आत्मशुद्धिविशेषतः ॥२३॥
यदि ततो निवर्तेत, उत्कृष्ट स्थितिकं पुनः ।
बध्नातीति च विज्ञेयं, अध्यवसायकुत्सितः ॥२४॥
आयुष्कर्म्मान्तरेणैव, ज्ञातव्या पूर्वपद्धतिः ।
चात्रैवमुच्यते कैश्चिद्, निर्जराऽत्र न जायते ॥२५॥
उपयोगस्तु नास्त्येव, कथं सा निर्जरा मता ।
क्रियते तत्समाधानं, धान्यागारस्य ज्ञानतः ॥२६॥

स्वल्पं प्रक्षिप्यते धान्यं, अस्वल्पमपसार्यते ।
तत्कार्य्यं करणेनैव, धान्यं स्वल्पंतु तिष्ठति ॥२७॥
धान्यापकर्षणं कार्य्यं, चोपयोगं विना कृतम् ।
तथा विनोपयोगेन साऽकामनिर्जरा मता ॥२८॥
छेदनभेदनादीनां, क्षुधा-तृष्णादि वस्तूनाम् ।
ताडनादिक कष्टानां, सहनेऽकामनिर्जरा ॥ २६ ॥
पराधीनत्वसोढव्ये, पञ्चाऽग्न्यादितपस्यतः ।
एवं रीत्यैवचाज्ञान, कष्टानां सहने तथा ॥३०॥
संजातनिर्जरा याश्च, ताः किलाऽकाम निर्जराः ।
निर्जराभिश्च प्रोक्ताभि,कर्म्मणां च क्षयो मतः ॥३१॥
यथाप्रवृत्तियत्नेन, महाकार्यं कृतं तथा ।
यथानदीष्ठ पाषाणः, घटितो नहि केनचित् ॥३२॥
तथापि सुकुमारत्वं, प्रवाहे घर्षणेन च ।
अकामनिर्जरातो वै, कर्म्मणां जायते क्षयः ॥३३॥
तत्करणंच सर्वेण, जीवेनाप्तमनेकशः ।
ग्रंथिभेदःकृतोनैव, तदाप्ते किं प्रयोजनम् ॥३४॥
यदि ग्रन्थिर्नवै भिन्ना, श्रद्धाप्राप्तिश्च नो कृता ।
तदा मनुष्यजातीनां, मीलने किंफलं भवेत् ॥३५॥

सा जातिश्च शुभाज्ञेया, सम्यक्त्वं जायते यतः ।
अजागलस्तनानीव, अन्या सर्वा च निष्फला ॥३६॥
अतः सम्यक्त्वलाभाय, यत्नं दृढतया कुरु ।
प्रोच्यते शुभभावेन, तत्स्वरूपं यथाक्रमम् ॥३७॥
यथाकरणयत्नञ्च, यथाऽभव्यशरीरिणः ।
बहुवारं च सम्प्राप्ताः, ग्रन्थिभेदेऽसमर्थकाः ॥३८॥
ह्रासीकृता ह्यनेकैस्तु, पूर्वोक्तकर्म्मणां स्थितिः ।
अग्रे तेनैव गच्छन्ति, परिणामविशोधितः ॥३९॥
ततः प्रतिनिवर्तन्त, बध्नाति कर्म्मतादृशाम् ।
अधिकस्थितिकत्वं तत्, विशेषइति दृश्यताम्॥४०॥
पूर्वोक्तधर्म्मतारुण्य, कालक्रमो महात्मनाम् ।
अभव्यानाञ्च जीवानां,क्रमो न विद्यते क्वचित्॥४१॥
एकपुद्गलावर्तादि, प्रोक्तं सर्वंतु बोध्यताम् ।
भव्यजीवान्समाश्रित्य,अभव्यानाञ्च नैव तत् ॥४२॥
मूलं नास्ति कुतः शाखा,दृष्टान्तोऽत्रापि भाव्यताम्।
अभव्ये नास्ति सम्यक्त्वं, कुतश्च तादृशःक्रमः॥४३॥
यथाप्रवृतिनामाख्यं[1], एकं तादृशयत्नकम् ।

---

१—अनेकशः ।

तस्य कालक्रमो नास्ति, ततः सर्वं व्यवस्थितम्॥४४॥
अतः करणप्राप्तेऽपि, प्रमादरहितो भव ।
विना च ग्रन्थिभेदेन, प्रापणं तच्च निष्फलम् ॥४५॥
यथाप्रवृतियत्नस्य, स्वरूपं प्राक् प्रपंचितम् ।
अथापूर्वप्रयत्नस्य, स्वरूपं प्रणिगद्यते ॥४६॥
पल्योपमस्य सारूप्यं, सम्यक्त्वे चोपयोगि तत् ।
प्रासंगिकं च कथ्येत, भव्यानां सुखहेतवे ॥४७॥
कूपदृष्टान्तद्वारेण, काल्पनिकेन सर्वथा ।
पल्योपमस्य सारूप्यं, प्रसंगाच्च निरूप्यते ॥४८॥
उत्सेधाङ्गुलमानेन, अधस्तादेकयोजनम् ।
पृथुलेनाऽपि तन्मानं, कल्प्यते एककूपकम् ॥४६॥
दशाहजातबालस्य, देवकुर्वादिजन्मिनः ।
केशानां सूक्ष्मखंडेन, भर्तव्यं तच्च कूपकम् ॥५०॥
सम्पूर्णभृतकूपाद्धि, प्रतिवर्षं शतं किल ।
एकैकखण्डनिष्कासे, रिक्तः कूपो यदा भवेत ॥५१॥
तत्कालः सोऽपि विज्ञेयः, पल्योपमाभिधानकम् ।
तस्मिन् सखंडकेशानां, भरणं केन न कृतम् ॥५२॥
किन्तु भव्यावबोधाय, दृष्टान्तं कल्पितं किल ।

षण्णां पल्योपमानाञ्च,मध्येऽद्धाया: प्रयोजनम्॥५३॥

पल्योपमद्विपञ्चानां[१], दशकोट्या गुणीयताम् ।
कालार्थकांक्षिणा ज्ञेय:,स काल: सागरोपम: ॥५४॥

सागरदशकोटीनां, दशकोट्या च गुण्यते ।
सैवापसर्पिणी चोक्ता, उत्सर्पिण्यपि तादृशी ॥५५॥

उत्सर्पिण्यवसर्पिण्यो:, मेलने कालचक्रकम् ।
अनन्त कालचक्रेण, पुद्गलावर्तकं मतम् ॥५६॥

अनन्तपुद्गलावर्ता:, जीवेन संसृतौ कृता: ।
बिनाऽन्तं तस्य सम्यक्त्वं,प्राप्नोति न कदाचन॥५७॥

अनन्तासंख्य शब्दार्थौ, व्युत्पत्या सदृशौ मतौ ।
अन्तो न विद्यते येषां,काल: सोऽनन्तको मत:॥५८॥

संख्या न विद्यते यस्य, स:कालोऽसंख्यको मत: ।
व्युत्पत्या किन्तुचार्थानां,स्वीकारेनोफलंभवेत्॥५९॥

रूढ्यर्थोऽत्र प्रवक्तव्य:, जैन शास्त्रानुसारत: ।
अनन्तस्याप्यनन्ताख्य, संख्यातानामसंख्यका:॥६०॥

संख्यातानाञ्च संख्याता:,भेदा: शास्त्रे निरूपिता: ।
अल्पबुद्धि मनुष्याणां, हृदये नैव विश्यते ॥६१॥

१ द्विपंचानां कोटिनां

कर्म्मग्रन्थादिशास्त्रश्च, तूर्य्यं सुपरिचिन्त्यताम् ।
अन्यथाकालसंख्याने, हृद्ग्राह्या पद्धतिर्नहि ॥६२॥
किञ्च पल्योपमानां हि, क्षेत्राद्धोद्धारभेदकाः ।
सूक्ष्मबादरभेदेन, षड्भेदाः परिकीर्तिताः ॥६३॥
सागरोपमभेदानां, भेदा ज्ञेया षडेव हि ।
अत्र प्रयोजनं यस्य, तत्स्वरूपं निरूपितम् ॥६४॥
प्रकृतमनुसार्य्यैतत्, व्याख्यानञ्च प्रकुर्वता ।
अपूर्वयत्न सारूप्यं, लिख्यते शुभभावतः ॥६५॥
पूर्वप्रोक्तविशुद्धेश्च, शुद्धिरत्रैव चाधिका ।
वीर्य्योल्लासादिसामग्री, ग्रन्थिभेदप्रसाधिका॥६६॥
यदा तादृश सामग्र्याः, प्राप्तिः शीघ्रं प्रजायते ।
तदातु ग्रन्थिभेदस्य,स्थितिःकियच्चिरा भवेत्॥६७॥
यादृशाऽध्यवसायस्य, पूर्वे प्राप्तिः कदापिन ।
तदपूर्वकरणं वै, विज्ञेयं सुखमिच्छता ॥६८॥
अपूर्वकार्य्यकाराद्धै, अपूर्वमिति कथ्यते ।
स्थितिघातो रसाख्यस्य, गुणश्रेणिगुणक्रमौ॥६९॥
कथितानि सुद्भावेन, कार्य्याणीति सुबन्धनम् ।
तत्स्वरूपं क्रमेणैव, कथ्यते गुरुयोगतः ॥७०॥

मोहनीयं तथा वेद्यं, ज्ञानदर्शनरोधकौ[1]।
आयुष्कं नामगोत्रे च,अन्तरायोऽष्टकर्म्मणाम्॥७१॥
विनायुष्कं च सर्वेषाम्, कर्म्मणां कथिता स्थितिः।
अपवर्तनयत्नेन, तस्याघातो विधीयते ॥७२॥
कर्म्मस्थितेश्च संह्रासे, निमित्तं यच्च कथ्यते।
तदपवर्तना नाम, करणं प्रणिगद्यते ॥७३॥
बहुस्थितिक यत्कर्म्म, पूर्वं बद्धं प्रयोगतः।
भुज्यते स्वल्पकाले वै, यत्नेनैवापवर्तने[2] ॥७४॥
तादृशं यत्र क्रियेत, स्थितिघातः स कथ्यते।
रसाघात[3]स्वरूपं तत्, यथाप्राप्तं निरूप्यते ॥७५॥
वनस्पतौ यथा वै तु, रसो सर्वत्र दृश्यते।
रससत्तानुमीयेत, तथा वै कर्म्मपुद्गले ॥७६॥
जगति पुद्गलाः सन्ति, ये ते सर्वे रसान्विताः।
कर्म्मणो वर्गणायाम्वै, यथानिम्बादिपुद्गले ॥७७॥
यथा कटुकता निम्बे, इक्ष्वादौ मधुरो मतः।
पुण्यस्य मधुरस्तादृक्, पापस्य कटुको मतः ॥७८॥

*१ ज्ञानदर्शनावरणे २ अपवर्तनाकरणेन ३ रसस्य आघातः रसाघातः।*

यथा निम्बरसानां च, क्वाथश्च वै प्रतन्यते ।
एकभागस्य पाकेन, द्विगुणः कटुरुच्यते ॥७६॥
द्विभागस्य प्रपाकेन, त्रिगुणो जायते कटुः ।
त्रिगुणानां प्रपाकेन, रसश्चतुर्गुणो मतः ॥८०॥
तथेक्षुरसक्वाथेन, एकद्वित्रिचतुर्गुणाः ।
रसांशाः परिशिष्यन्ते, कथ्यते तद्विशेषतः ॥८१॥
तथैव पुण्यपापेषु, पुद्गलेषु प्रबोधनम् ।
मधुरः पुण्यपुद्गले, कटुता पापपुद्गले ॥८२॥

दृष्टान्तं

जातकषायभावेन, पूर्वं गालिप्रदानकम् ।
स्वल्पो बन्धस्तदाजातः, कषायमन्दभावतः ॥८३॥
ततो निमित्तसद्भावात्, अपरेणाधिकः कृतः ।
तदा तन्मारणेच्छाऽपि, जायते क्रोधतीव्रतः ॥८४॥
मारणार्थं यदायातः, तदा तेनाऽपि मार्य्यते ।
बध्यघातकभावेन, परस्परं निहन्यते ॥८५॥
कषायतारतम्येन, रसेषु तारतम्यता ।
ते रसाश्च प्रवर्द्धन्ते, एकद्वित्रिचतुर्गुणाः ॥८६॥
पूर्वोक्ताश्च रसाः सर्वे,यावत्ताश्च चतुर्गुणाः ।

तानपवर्तयत्नेन, अल्पीकरोति शुद्धितः ॥८७॥
अशुभस्य च ह्रासःस्यात्, शुभस्य वर्द्धनं मतम् ।
रसाघातः स विज्ञेयः, रसाघातं चिकीर्षता ॥८८॥
अशुभरसद्वारेण, दुर्विपाकश्च जायते ।
शुभेन शुभवैपाकः, प्राप्नोति नाऽत्रसंशयः॥८६॥
अपवर्तनयत्नेन, व्रजेद् दुःखविपाकताम् ।
सुखविपाकसद्भावः, समीपे वै प्रगच्छति ॥६०॥
पूर्वं स्थितिरसाऽऽघातौ, परिणामाविशुद्धितः ।
स्वल्पौस्वल्पौ च सञ्जातौ,अधुनातु विशेषतः॥६१॥
पूर्वापेक्षाविशुद्धिःसा, अधिकाप्यत्र जायते ।
ततःस्थितिरसाघातौ, क्रियेते चाधिकौतदा ॥६२॥
गुणश्रेणिश्चसंक्रामौ, विविच्येते क्रमेण तौ ।
भावतःस्वान्तशुध्यर्थं, कर्म्मशास्त्रानुसारतः ॥६३॥
कर्म्मह्रासविधानाय, पूर्वे दैर्घिककालिके ।
कर्म्मणां राशयस्तोकाः, क्रियन्ते स्तोकभावतः ॥६४॥
कर्म्मणामत्र ह्रासार्थं, स्वल्पकालेऽपि राशयः ।
बहव्यः नाशाय क्रियन्ते, अपूर्वं तच्च मन्यते॥६५॥
अन्तर्मुहूर्तकालश्च, अपूर्वकरणे मतः ।

आद्यसमयसद्भावात्, द्वितीयेऽसंख्यगुण्यकाः॥९६॥
ततोधिकास्तृतीयेऽपि, असंख्यातगुणा मता।
एवमन्तिमकालीन, पर्य्यन्तावधिसम्मतम् ॥९७॥
शुभेनाध्यवसायेन, बध्यमानाच्छकर्म्मणाम्[1]।
मध्येऽशुभस्य प्रक्षेपः, प्रतिक्षणमसंख्यकम् ॥९८॥
शुभप्रचुरयोगेन, जायन्तेचाशुभाः शुभा।
दशघटिकखंडेषु, लवणाल्पं प्रकीर्य्यते ॥९९॥
शर्कराबहुयोगेन, लवणं शर्करायते।
ततोऽप्यधिकगुण्यश्च,द्वितीयेऽप्यधिको मतः॥१००॥
तृतीयेऽपिततो संख्या, तगुणः क्षेपतो मतः।
एवमन्तिमकालीन, प्रर्य्यन्तक्षेपणं तथा ॥१०१॥
कार्य्यमिदमपूर्वञ्च, अपूर्वकरणे मतम्।
अपूर्वञ्च ततो ज्ञेयं, नामाऽपि श्रवणे सुखम्॥१०२॥
प्रथमं यादृशी व्यक्तिः, स्वल्पशुद्धिप्रयोगतः।
दीर्घस्थितिककर्म्माण्यऽबध्नादध्यवसायतः ॥१०३॥
अधुना शुद्धिसद्भावाद्,बध्नाति स्वल्पकालिकाम्।
निगद्यते च भावार्थः, सुखबोधाय मादृशाम्॥१०४॥

1—बध्यमान शुभकर्मणाम्

यादृशस्थितिकं कर्म्म, बध्नाति प्रथमे क्षणे ।
द्वितीये समये तस्मात्, स्तोकस्थितिकता मता॥१०५॥
तृतीये समये तस्मा द्बध्यते स्तोककालिकम् ।
चरमक्षणपर्य्यन्तम्, ज्ञातव्यं चैव भावतः ॥१०६॥
अपूर्वाणि च कार्य्याणि, अपूर्वकरणे च वै ।
क्रियन्ते शुभयोगेन, आत्मशुद्धि विशेषतः ॥१०७॥
अपूर्ववीर्य्यसामग्री, करणेऽत्र प्रजायते ।
कदापि तादृशोनाभूद्, यादृशोऽपूर्व यत्नके ॥१०८॥
अनेन करणेनैव, मिथ्यात्वकर्म्मणां तथा ।
आद्यानाञ्च कषायाणां, ग्रन्थिता प्रविभिद्यते॥१०९॥
अपूर्वकरणे तस्याः, भेदनं खलु जायते ।
तादृक् कार्य्यस्य कर्त्तव्ये,प्रोत्साहः प्रबलो मतः॥११०॥
अपूर्वयत्नप्राबल्याद्, चापूर्वकार्य्यता भवेत् ।
ग्रन्थिं तेन ततोभित्वा, भावाग्रिमे च गच्छति ॥१११॥
अधिकाऽपि ततः शुद्धिः, अनिवृत्तिप्रयत्नके ।
विना सम्यक्त्वप्राप्तिश्च, आगतं न निवर्तते ॥११२॥
वीर्य्योल्लासादि सामग्री, वृद्धिं गता यदाऽपि वै ।
तदा दर्शनमोहस्य, साफल्यं विजये भवेत् ॥११३॥

दर्शनमोहकं जेतुं, योऽध्यवसायसाधकः ।
तदनिवृतियत्नस्य, लक्षणं प्रतिपादितम् ॥११४॥
अनिवृतिप्रयत्नेन, नाम्ना चाध्यवसायतः ।
दीर्घस्थितिक मिथ्यात्व, मोहनीयस्य कर्म्मणः॥११५॥
पश्चादन्तमुर्हूर्तञ्च, बृहत्स्थितिक कर्म्मभ्यः ।
अन्तमुर्हूर्त संवेद्य, कर्म्मणाञ्च पृथक् पृथक्[1] ॥११६॥
तत उदयवृत्यन्त, मुर्हूर्तस्थितिकैः सह ।
संमील्य यच्च वेद्येत, यतोऽन्तष्करणस्यवै[2] ॥११७॥
अन्तमुर्हूर्त वेद्यादृष्टाऽभावात्प्रथमेक्षणे ।
नो प्रदेशोदयोऽप्येवं, उभयोदयनाशतः ॥११८॥
औपशमिकभावःस्यादनादिकमित्थात्विनः ।
क्षायोपशमिकश्चैव, सिद्धान्तिकमते मतम्॥११९॥
अन्तर्मौहूर्तिकं वेद्यं, बृहत्स्थितिककर्म्मभ्यः ।
तत्पृथक करणंतेभ्यः, अन्तरकरणं मतम् ॥१२०॥
यथाऽन्धश्चाक्षि लाभेन, स्वान्ते च बहु तुष्यति ।
आत्मासम्यक्त्वलाभेन, अत्यानन्दंचप्राप्नुयात्॥१२१॥

*१—पृथक्कृत्य २—अन्तरकरणस्य ३—कर्माभावाद्*

*४—मिथ्यात्विनः ।*

सर्वज्ञोक्तस्य धर्म्माद्धि, ऋते स्वप्ने न मन्यते ।
तत्त्वं तत्त्वस्वरूपं च, जानाति धर्म्मरागतः ॥१२२॥
देवे देवत्वबुद्धिर्या, गुरौ च गुरुता मतिः ।
धर्म्मेधर्म्मत्व या बुद्धिः, सा सम्यक्त्वं निगद्यते॥१२३॥
अनेकान्तिकता सर्व—, पदार्थे परिमन्यते ।
ध्रौव्योत्पादव्ययेनाऽपि, युक्तं तत्वं निगद्यते॥१२४॥
वन्ध्यापुत्रसमं चान्यत्, सर्वं तद्रहितं यदा ।
वस्तुस्वभावधर्म्मोऽपि, यथार्थं हृदि धार्य्यते॥१२५॥
प्राणान्तकष्ट जातेऽपि, आस्तिकत्वं न मुच्यते ।
धर्म्म श्रवण सद्रागः, महान्स्वान्ते प्रजायते ॥१२६॥
संप्राप्तयौवना या तु, कामिनी सा विवाहिता ।
आद्यसमागमे तस्याः, रागो यादृक् प्रजायते ॥१२७॥
ततोऽनन्तगुणो रागः, धर्म्मश्रुतौ स्वभावतः ।
क्षुधितस्य च मिष्टान्न, लाभादप्यधिको मतः॥१२८॥
हेये हेयत्व बुद्धिश्च, उपादेये ह्यहेयता[1] ।
ज्ञेये ज्ञेयत्व ज्ञानञ्च, सम्यक्त्वात्परिजायते ॥१२९॥
मिथ्यात्वोपशमाज्जाता, औपशमिकता मता ।

१—उपादानता

निगद्यते स्वरूपं वै, क्षायोपशमिकस्य हि ॥१३०॥
औपशमिकजीवश्च, स्थितमिथ्यात्व[1] कर्मकः ।
मिथ्यात्वमलशोधाय, बहु यत्नं करोति वै ॥१३१॥
तत्कालं मलशुध्या च, शुध्यन्ति कतिचित्तथा ।
कतिचिदर्धशुद्धानि, अशुद्धानि पराण्यपि ॥१३२॥
सम्यक्त्वमोहरूपाणि, शुद्धानि कथितानि च ।
अर्द्धशुद्धानि मिश्राणि, अशुद्धं प्रथमंतथा ॥१३३॥
मलीन[2]वस्त्रप्रच्छाद्ये, दीपाग्र न प्रकाशता ।
प्रतिभान्ति तमांस्येव, मिथ्यात्वोदय प्राप्तये[3]॥१३४॥
मलीन वस्त्र निष्कासे, प्रदीपस्तु प्रकाशते ।
तथामिथ्यात्वनिष्कासात्,श्रद्धादीपःप्रदीप्यते॥१३५॥
वृद्धिंगते च सद्भावे, शुद्धपुञ्जस्य वेदनात् ।
क्षायोपशमिकी श्रद्धा, प्रकटंयाति तत्क्षणात्॥१३६॥
मिश्रोदयात्तु मिश्रश्च, मिथ्यादृष्टिस्त्वशुद्धके ।
यादृशं क्रियते कार्य्यं, तादृशं फलमश्नुते ॥१३७॥

*१ अवशिष्ट मिथ्यात्वकर्मणां मध्यं स्थित मिथ्यात्व मलशोधाय ।*

*२ मलिनवस्त्राच्छादिते दीपकाग्रे प्रकाशोऽवरुध्यते ।*

*३ मिथ्यात्योदयेतथा ।*

उदयागतमिथ्यात्वं, चानुभवेन नश्यति ।
अनुदयस्य रोधेन, उपशमो विधीयते ॥१३८॥
उपशमेतु भवेद्यादृक्, तादृक्क्षायोपशामिके ।
क्रमेतुभिन्नतानास्ति,नाम्नोश्चभिन्नता कथम्॥१३९॥
सर्वथोपशमोज्ञेयः, मिथ्यात्वस्य च पूर्वके ।
परे[1] मिथ्यादयश्चैव, शुद्धपुञ्जोदयस्तथा ॥१४०॥
द्वयोर्मध्ये च कस्याऽपि, नोदयः प्रथमे मतः ।
प्रथमं च ततः शुद्धं, द्वितीयं नहि तादृशम्॥१४१॥
अन्तर्मुहूर्तिकं ज्ञेयमौपशमिकता च वै ।
क्षायोपशमिकस्याऽपि, कालमानंविधीयते॥१४२॥
सागरोपम षट् षष्टिः, द्विनरभवताधिका ।
क्षायोपशमकालश्च, अपरश्च निगद्यते ॥१४३॥
पौद्गलिकं द्वितीयश्च, प्रथमं नैव तादृशम् ।
एतद्भेदेन भेदोऽपि, ज्ञातव्यो दर्शनार्थिना ॥१४४॥
क्षायिकस्य स्वरूपं तत्, कथ्यते गुरुयोगतः ।
प्रथमानां कषायाणां, दर्शनादि त्रयस्य च ॥१४५॥
एषां सप्तकमोहानां, सर्वथा परिनाशतः ।

---

१ परास्मिन् ।

जातंक्षायिकसम्यक्त्वं, मोक्षमार्गप्रदर्शकम्॥१४६॥
पूर्वोक्त-त्रय-पुञ्जानां, मध्येचाशुद्धमिश्रयोः।
क्षयानन्तर शुद्धं तत्, क्षयार्थमुद्यमीयते॥१४७॥
सर्वेषु क्षय जातेषु, ग्रासोन्तिमः प्रशिष्यते।
वेदकं समये तस्मिन्,सम्यक्त्वंप्रबलंमतम्॥१४८॥
क्षायिकपूर्वकाले च, वेदकमनुभूयते।
पश्चाच्च क्षायिकं ज्ञेयं,भिन्नतैतादृशी द्वयोः॥१४९॥
छद्मस्थस्य च नो शुद्धं, चापायशुद्ध द्रव्यतः।
शुद्धं केवलिनांज्ञेयं, प्रोक्तंशास्त्रानुसारतः॥१५०॥
कारकं रोचकं चैव, दीपकं दर्शनं तथा।
त्रिविधं कथितं ज्ञेयं, स्वरूपं तन्निगद्यते॥१५१॥
श्रद्धापूर्णप्रभावेन, महाव्रतस्य पालनम्।
अप्रमत्तत्वभावेन, क्रियाणां करणं तथा॥१५२॥
एतादृशी क्रियाशुद्धिः, यत्र कुत्र न लक्ष्यते।
तच्च कारक सम्यक्त्वं सप्तमे गुण भूमिके॥१५३॥
अप्रमत्तत्वभावेन, क्रियां कर्तुं न शक्यते।
तत्क्रिया कारके चैव, प्रमोदतः विधीयते॥१५४॥
तादृग् व्यक्तिश्च विज्ञेया, रोचकदर्शनान्विता।

भवेच्छासनरागत्वं, प्रतिरोम दिवानिशम् ॥१५५॥
दीपकदर्शनस्यैव, स्वरूपं प्रतिपाद्यते ।
पूर्वोक्ताचरणानाञ्च, लेशो यत्र न विद्यते ॥१५६॥
तद्भतिनैव सद्भावः, स्वप्नेऽपि परिजायते ।
बोधयत्यपरांश्चैव, स्वस्मिंतस्तु नैव किञ्चन ॥१५७॥
लोकमनः प्रतुष्टयर्थं, धर्म्म क्रिया वितन्यते ।
प्रदृश्यते च शुष्कंवै, हृदयं मुद्गशैलवत् ॥१५८॥
यादृग् व्यक्तिश्च विज्ञेया, दीपक दर्शनान्विता ।
अभव्येतच्च बोधव्यं, अपरस्मिन्न कथ्यते ॥१५९॥
प्रोत्तमं क्षायिकं प्राकच, तत्पश्चाद्वेदकं मतम् ।
क्षायोपशमिकं पश्चा, दौपशमिकता ततः ॥१६०॥
अन्येऽपि सर्व भेदाश्च, त्रिविधेषु समागताः ।
यथाप्युक्ताः स्वबोधाय, परेषां ज्ञापकाय वै ॥१६१॥
निश्चय व्यवहाराभ्यां, द्विविधमपि कथ्यते ।
द्रव्यभावप्रभेदेन, भिन्नं तच्चप्रदृश्यते ॥१६२॥
आत्मीयं क्षायिकं ज्ञेयं, अपरमुपचारतः ।
निश्चयकारिको श्रद्धा, आत्मीया परिगण्यते ॥१६३॥
दर्शनमोहनाशेन, निर्म्मलगुणरूपकम् ।

नैश्चयिकश्च सम्यक्त्वं, कथितं ज्ञान भानुभिः॥१६४॥
ज्ञानादिकन्तु नोदत्ते, निर्वाणं दर्शनं विना।
ततश्च दर्शनं श्रेष्ठं, ज्ञायतां धर्म्म मर्म्मतत्॥१६५॥
प्राप्यते देश चारित्रं, सम्यक्त्वं प्राप्य कैश्चन।
सर्वविरतिप्राप्त्यनन्तरमन्तमुहूर्तके ॥१६६॥
केवल ज्ञानतां प्राप्य, मोक्षं गच्छन्ति केचन।
केचित्क्रमेण गच्छन्ति, जीवविशेषकारणम् ॥१६७॥
देशतो विरतिं प्राप्य, संख्यातसागरोपमम्।
स्थितीनां क्षयतस्सर्व, विरतिं याति निर्म्मलाम्॥१६८
तावत्स्थितिकतानाशे, नोपशमश्रेणितांव्रजेद्।
यावत्स्थिति क्षयाच्चैव, क्षपकश्रेणिता भवेत्॥१६९॥
यत्र घातिक्षयं कृत्वा, केवलज्ञानभाग्भवेत।
शैलेशीश्च ततःप्राप्य, निर्वाणं परिगच्छति ॥१७०॥
औत्सर्गिकक्रमोज्ञेयः, सर्वमेतच्च प्रायिकम्।
आपवादिक मार्गेषु, नैवं विधः क्रमोऽपिच ॥१७१॥
श्रद्धानानि हि चत्वारि, लिङ्गानि त्रिविधानिच।
विनयो दशधाप्रोक्तः, त्रिशुद्धिःपञ्चदूषणम्॥१७२॥
अष्टौ प्रभावकाः ख्याताः, कथितं पञ्च भूषणम्।

पञ्च लक्षणताज्ञेया, षड् यत्नाश्च प्रपञ्चिताः॥१७३॥
षड्भावना षडागाराः, कथितं पञ्चभूषणम् ।
पञ्च लक्षणता ज्ञेया,षड् यत्नाश्च प्रपञ्चिताः ॥१७४॥
जीवाऽजीवानि तत्वानि, प्रोक्तानि जैन दर्शने ।
परमार्थेन तेषाञ्च, भावार्थस्य विचारणा ॥१७५॥
श्रद्धानमाद्यमेतच्च, द्वितीयं प्रणिगद्यते ।
तदर्थानाञ्चज्ञातारः, मुनयः शुद्धभाषिणः ॥१७६॥
संवेगरंगतारंगे, स्नातकाः परमार्थतः ।
शुद्धमार्गोपदेष्टारः, ते सेव्याः शमभावतः ॥१७७॥
सम्यक्त्व वान्तिकर्तारः, यथाच्छंदक निह्निवाः ।
कुशीलाश्चेव पार्श्वस्थाः, वेषविडम्बकास्तथा ॥१७८॥
अज्ञानिनस्तु हेयास्स्यु, तच्छ्रद्धानं तृतीयकम् ।
मिथ्यादृष्टेश्च संगस्तु, त्यजनीयश्च सर्वदा॥१७९॥
यथा गाङ्गीयतोयानि, गतानि लवणोदके ।
तत्संयोगेन क्षारत्वं, प्राप्तं वै नाऽत्रसंशयः ॥१८०॥
तथा मिथ्यात्विनो योगात्,तत्वमतत्वरूपतः ।
परिणमति दुर्योगात्, कुशीलानांच योगतः ॥१८१॥
श्रद्धधानं चतूर्थं तत्, त्रलिङ्गमथ कथ्यते ।

जिनागमस्य जिज्ञासा, श्रोतृ श्रुतौच सर्वदा ॥१८२॥
मधुरस्तु रसोयत्र, द्राक्षाखण्डादितोऽधिकः ।
लिङ्गं तत्प्रथमंज्ञेयं, द्वितीयंतु निगद्यते ॥१८३॥
तरुण्यास्तरुणेनैव, संयोगेन यथारसः ।
सुरगीतश्रुतौरागः, धर्म्मे श्रुतौ ततोऽधिकः ॥१८४॥
बुभुक्षितद्विजोऽरण्यमुत्तीर्य्य घृतपूरकम् ।
यथेच्छति तथा धर्म्मं, श्रवणेच्छा प्रजायते ॥१८५॥
देवगुर्वोश्च कर्त्तव्यं, वैयावृत्यं सुभावतः ।
तृतीयलिङ्गताज्ञेया, विनयत्वं प्रकाश्यते ॥१८६॥
सयोगिकेवलिस्था ये, अर्हन्तस्ते उदाहृताः ।
सम्पूर्णकर्म्मदग्धाये, सिद्धास्ते प्रतिपादिताः ॥१८७॥
चैत्यशब्देन सुग्राह्या, जिनस्य प्रतिमा सदा ।
क्षमादि दशधा धर्म्मः, तस्याकराश्च साधवः॥१८८॥
दायका नायकाश्चैव, पञ्चाचारस्य पालकाः ।
आचार्य्यास्ते च ज्ञातव्याः, पाठकः प्रणिगद्यते॥१८९॥
पाठयिता च सूत्राँश्च, शिष्यांश्चैव दिवानिशम् ।
उपाध्यायस्तु बोधव्यः, सूत्रानुसारतःखलु १९०॥
तत्प्रवचनसंघानां, दर्शनानां तथैव च ।

एषां दशविधानां च, भक्तिभावो वितन्यताम्॥१६१॥
हृदये बहुमानेन, वाह्या भक्तिश्च वन्दनैः।
गुणस्तुतिविधानेन, अपगुणस्य छादनात् ॥१६२॥
आभ्यान्तराश्च विज्ञेया, आशातना प्रहेयतः।
बिनयो दशधा चैव, कथितो जैन शासने ॥१६३॥
शास्त्रेषु त्रिविधा शुद्धिः, कथिता शुद्धिवेदिभिः।
तासां रूपाणि कथ्यन्ते, स्वकीय शुद्धिमिच्छता॥१६४
प्रथमोक्ता मनः शुद्धिः, वाक् छुद्धिस्ततोऽपरा।
कायशुद्धिस्तृतीया च, अतोऽन्या नैव विद्यते।१६५॥
वीतरागं बिना देवं, बिना च जैनशासनम्।
नान्यज्जगति सत्यंसा, मनः शुद्धिनिरूपिता ॥१६६॥
जिनभक्तेर्नभूतं यत्, अन्यतस्तत् कथं भवेत्।
वस्यवचनमेतादृक्, बाक् शुद्धिश्च सामता ॥१६७॥
सेहे बद्धत्वभावेन, छेद्यभेद्यादिवेदनाम्।
जिनदेवं विनानान्यं, नमामि प्रलयेऽपिच ॥१६८॥
स्वान्ते यस्य मतिरेषा, कायशुद्धिस्तु सामता।
वर्जनीयं सदा शीघ्रं, शास्त्रेच पञ्चदूषणम् ॥१६९॥
धर्म्मवादेन तत्वानां, दृढाय गुरुसन्निधौ।

शंकानाञ्च समाधानं, कर्तव्यं शुभभावतः ॥२००॥
तत्त्वानां निर्णयार्थञ्च, शंका सा पुष्टिदायिका ।
अवश्यमेव कर्तव्या, मानवैर्मुक्तिरिच्छुभिः ॥२०१॥
वितण्डा लक्षणैर्युक्ता, जयस्य लिप्सया तथा ।
जैन शास्त्रेषु या शंका, सा सम्यक्त्व प्रदूषिका॥२०२॥
तादृक् शंका न कर्तव्या, समय व्यर्थकारिका ।
हानिः प्रत्युत तत्वेषु, मूलनाशविधायिनी ॥२०३॥
राज्ञि रंके समाबुद्धिः, येषां च किल सर्वदा ।
नान्यथा वादिनस्तेस्युः, सर्वज्ञाः समदर्शिनः ॥२०४॥
कुदर्शनस्य या वाञ्छा, कांक्षा सा परिकीर्तिता ।
द्वितीयं दूषणं ज्ञेयं, विषवल्ली समं मतम् ॥२०५॥
कल्पवृक्षं परित्यज्य, कण्टकीं को निषेवते ।
ऐकान्तिक कुदृष्टेश्च, कांक्षा च दुःखदायिका ॥२०६॥
धर्म्मफलस्य संमोहः, वितिगिच्छा प्रकीर्तिता ।
या या क्रियाऽस्ति सा चैव, फलवती निगद्यते ॥२०७॥
शुद्धधर्म्मक्रियाणाञ्च, मिलिष्यति फलं न किम् ।
निष्फलत्वं न धर्म्मस्य, स्वप्नेऽपि परिभाव्यताम् ।२०८।
निरीहया च कर्तव्या, सर्वधर्म्म क्रिया खलु ।

मोक्षकारणता ज्ञेया, परा स्वर्गफलादिका ॥२०९॥
फलं मनसि नेष्टव्यं, फलेन किं प्रयोजनम् ।
यथा धान्यस्य वापेन, मिलिष्यति न किं तृणम् ॥२१०॥
मिथ्यामतौ गुणाश्चैव, तद्रूपेणैव संगताः ।
संयोगेन विषस्यैव, दुग्धं विषायते यथा ॥२११॥
तथा मिथ्यात्व संयोगे, गुणो मिथ्या स्वरूपकः ।
तद्गुणानाञ्च श्लाघावै, मिथ्यावर्णन सदृशी ॥२१२॥
अतो न वर्णनं कार्य्यं, सम्यक्त्व गुणशालिना ।
बालानां दुख हेतुः स्यात्त्याज्यं ष तूर्य्यदूषणम् ॥२१३॥
उन्मार्गेषु प्रगन्तृणां, स्तवमुन्मार्गपोषणम् ।
कदापि नैव कर्तव्या, अत उन्मार्गिनां स्तुतिः ॥२१४॥
मिथ्यात्विनां सहावासः, कर्तव्यो न हि कर्हिचित् ।
संसर्गकरणात्तेषां, दोषः प्रत्युत सर्वदा ॥२१५॥
दोषायन्ते गुणाश्चैव, विषमिश्रितधान्यवत् ।
न केऽपि प्राप्तुमिच्छन्ति, गुणांश्च दोषमिश्रितान् ॥२१६
अष्टौ प्रभावका ज्ञेया, धूर्य्यः प्रावचनी मतः ।
विद्यमानश्रुतार्थानां, ज्ञातारो भवभीरवः ॥२१७॥
द्वितीयो धर्म्मवक्तावै, नन्दिषेणो महामुनिः ।

रञ्जयत्युपदेशेन, भनक्ति परसंशयान् ॥२१८॥
श्रद्धां द्रढीयते स्वस्य, स्वात्मानं रञ्जयन्ति वै ।
तादृशो धर्म्मवक्ता वै, विज्ञेयो धर्म्मकांक्षिणा ॥२१६॥
स्वपरमतसंवेद्य, तर्ककौशलशालिना ।
समयसूचिकाबुद्धिर्ज्ञातव्या मल्लवादिनः ॥२२०॥
विद्वज्जन सभायाञ्च, केनचिन्नाभिभूयते ।
प्रौढपाण्डित्ययुक्तश्च, तृतीयोऽपि प्रभावकः ॥२२१॥
यशोविजयमुख्याश्च यथा च धर्म्मसूरयः ।
काशिराजसभायाञ्च, जयश्री प्राप्नुवन्ति ते॥ २२२॥
निमित्तकं यथार्थं वै, यो वक्ति भद्रबाहुवत् ।
वितथलेशता नैव, चतूर्थः स प्रभावकः ॥२२३॥
तपोगुणेन देदीप्तः, धर्मरोपकता सदा ।
आश्रवरोधकर्ता वै, कोपेन वर्जितः सदा ॥२२४॥
नन्दिषेणो मुनिर्वै तु, पञ्चमोऽपि प्रभावकः ।
मन्यते सर्वदा चैव, जिनाज्ञां प्राणतोऽधिकाम्॥२२५॥
विद्यामन्त्रादिभिर्युक्तो, वज्रस्वामिसमो मतः ।
शासनोन्नतिकर्ता च, बौद्धप्रदेशके यथा ॥२२६॥
षष्ठः प्रभावको ज्ञेयः, राज्ञश्च प्रतिबोधकः ।

आचार्य्य हेमचन्द्राद्याः, हीरसूरीश्वरो यथा ॥२२७॥
अञ्जन-योग-योगेन, कालिकमुनि सादृशः।
धर्म्मप्रभावको ज्ञेयः, सप्तमो जैनशासने ॥२२८॥
माधुर्य्यार्थेन संयुक्तं, काव्यं सदा सुधारसैः।
कृत्वा धर्मनिमित्तेन, राजानं रञ्जयन्ति ये ॥२२९
शासनभावका ज्ञेयाः, सिद्धसेन दिवाकराः।
यावत्तत्सदृशा नैव, भवन्ति जैनशासने ॥२३०॥
तावत्पूजादिधर्माणां कारणे प्रोद्यमा मताः।
तेऽपि प्रभावका ज्ञेयाः, शुद्धाचार प्ररूपकाः ॥२३१॥
भूषणानि च ज्ञेयानि, तत्सरूपं निगद्यते।
ज्ञायः क्रियाविधीनाञ्च, प्रत्याख्यानञ्च वन्दनम् ॥२३२॥
कौशल्यञ्च क्रियास्वेव, तदपि प्रथमं मतम्।
संसारतारणे शक्तं, तीर्थं तेन निगद्यते ॥२३३॥
द्रव्यभावप्रभेदेन, तीर्थं संसेव्यतां सदा।
गीतार्थमुनिवर्य्येण, धर्मस्नेहो विधीयते ॥२३४॥
तीर्थसेवनरूपं तद्, द्वितीयं भूषणं मतम्।
भक्तिर्देव-गुरूणाञ्च, यथायोगं प्रतन्यते ॥२३५॥
देवानां द्रव्यभावेन, क्रियते सेवनादिकम्।

शुद्धाशनेन साधूनां, भक्तिः प्रकाश्यते सदा ॥२३६॥
तृतीयं भूषणं ज्ञेयं, भक्तिरूपं प्ररूपितम् ।
श्रद्धातश्चालनोपायो, येन केन कृते सति ॥२३७॥
चित्ते चञ्चलता नैव, प्राणान्तेऽपि विधीयताम् ।
चतुर्थं भूषणं ज्ञेयं, श्रद्धानं शुद्धिमिच्छता ॥२३८॥
"शासनस्यानुमोदित्वं, येन कृत्येन जायते ।
प्रत्यहं धर्मरागश्च, सर्वेषां हृदये तथा ॥२३९॥
तादृक् कार्य्यञ्च कर्त्तव्यं, शासनस्यानुमोदिना ।
भूषणं पञ्चमं ज्ञेयं, वीतरागत्वमिच्छता ॥२४०॥
लक्षणानि विबोध्यानि, दर्शनज्ञापकानि वै ।
सापराधिषु जीवेषु, हेया मनो मलीनता ॥२४१॥
वक्तव्या वाग् विचार्य्यैव, लक्षणं प्रथमं मतम् ।
देवमानवसौख्यानां, दुःखरूपेण चिन्तनम् ॥२४२॥
सुखपश्चाच्च दुःखं वै, तत् सुखं नैव गीयते ।
एकान्तसुखता यत्र, दुःखलेशो न वै कदा ॥२४३॥
क्षायिकं च सुखं सत्यमन्यञ्च दुःख रूपकम् ।
यस्य सा सुखप्राप्तिस्यात्, सुखीति प्रणिगद्यते॥२४४॥
संवेगाख्यं द्वितीयं च, तृतीयन्तु निगद्यते ।

भवभ्रमणभीतो यो, यथा च निगडादिषु ॥२४५॥
नारकादि भवभ्रान्त्या, भवोद्वेगः प्रजायते ।
तारकं न विना धर्मात्, स्वान्ते किञ्चित्तु मन्यते॥२४६॥
भवोद्वेगस्वरूपं वै, निर्वेदः परिकथ्यते ।
दीनेष्वार्त्तेषु भीतेषु, याचमानेषु जीवितम् ॥२४७॥
येन केन प्रकारेण, तद्दुःखं परिणाशयेत् ।
द्रव्यानुकम्पनं तच्च, भावतस्तु निगद्यते ॥२४८॥
धर्महीनेषु जीवेषु,[1] धर्म्मप्राप्तिः प्रकार्य्यते ।
धर्म्म-प्राप्तेश्च सल्लाभस्तद्धि भावानुकम्पनम् ॥२४९॥
जिनेन वीतरागेण, भाषितं नान्यथा किल ।
मनसि वाचि काये च तादृशी यस्य भावना ॥२५०॥
आस्तिकता तदा ज्ञेया, पञ्चमं लक्षणं स्मृतम् ।
एतच्चिह्नेन विज्ञेया, श्रद्धावन्तो जना इमे ॥२५१॥
षड् यातना विचारस्तु, क्रियते सुख हेतवे ।
सर्वजीवैश्च कर्त्तव्यो, जैनशासनवेदिभिः ॥२५२॥
कुतीर्थिना गृहीतानि, अर्हच्चैत्यानि सर्वथा ।
तत्र वन्दनकार्य्याणि, कर्त्तव्यानि न वै कदा॥२५३॥

---

१—*स्वरूपनामा*

वन्दना करयोगेन, नमनं मस्तकेन वै।
अभीष्टान्नादि दानेन, गौरवञ्च प्रकाश्यते ॥२५४॥
वन्दनादिक सर्वं तत्, यतनायाः फलं मतम्।
दानादिका द्वितीया सा,यतना शुभभावजा ॥२५५॥
पुनः पुनः प्रदानं यत्, चानुप्रदानमुच्यते।
सुपात्रे मोक्षहेतुत्वं, दाने करुणता न वै ॥२५६॥
कुपात्रे करुणा-बुद्ध्या, दीयतां व्यवहारतः।
पात्रा-पात्रविचारो न, अनुकम्पासु सम्मतः ॥२५७॥
यो विना जल्पनं ब्रूयात्, स आलापो निगद्यते।
मुहुर्मुहुश्च ह्यालापं कुर्वन् संल्लापको मतः ॥२५८॥
यतनाऽतोऽपि सम्यक्त्वं, दीप्यते व्याहृतिश्चवै।
दीप्यते कारणात् सा वै,यतना नैक भेदतः॥२५६॥
चलन्ति शुद्ध-धर्म्मान्न, सम्यक्त्वदृढ़पालकाः।
आकाराः स्युर्न वै तेषां, चान्येषामुपकारकाः ॥२६०॥
पुरप्राकार तुल्यास्ते, आकाराः परिभाषिताः।
प्राकारो न विनाद्वारमाकारा स्तादृशा मताः॥२६१॥
आकाराःषट च बोद्धव्याः, सम्यक्त्व रक्षका मताः।
राजागणाभियोगौ च, बलदेवाभियोगकौ ॥२६२॥

वृत्तिकान्तारकश्चैव, गुरुनिग्रह इत्यपि ।
तादृशं यादृशं वक्ति, पालनीयं नृपुङ्गवैः ॥२६३॥
दन्तिनां यादृशा दन्ता, निःसृता न विशन्तिवै ।
सज्जन-दुर्जनानाञ्च, मध्ये भेदस्तु तादृशः ॥२६४॥
सज्जनस्य वचः सत्यं, प्रस्तरोत्कीर्णचिह्नवत् ।
दुर्ज्जनस्य वचो मिथ्या, जलरेखा-स्वरूपवत्॥२६५॥
राजाग्रहेण कर्तव्ये, मनः शैथिल्यवादिभिः ।
दोष आकारतो नैव, विज्ञेयो ज्ञानशालिना ॥२६६॥
तथापि स्वान्तशैथिल्यं, इदमेवहि ज्ञायताम् ।
एवमन्यत्र चाकारे, विज्ञेयं शुभदृष्टिभिः ॥२६७॥
राजाग्रहाभियोगेन, गैरीयपरिवेषणम्[1] ।
अन्यागारेषु तत्काले, कारितं कार्तिकेन[2] वै ॥२६८॥
यतः सम्यक्त्वनैर्मल्यं, जायते स्वान्त शुद्धितः ।
भावना सैव बोद्धव्या, सम्यक्त्वशुद्धकारिका॥२६९॥
अभिमानवशेनैव, करोत्यज्ञानतः क्रियाम् ।
असत्या साऽपि बोद्धव्या, घटकुट्यां प्रभातवत् ॥२७०॥
प्रथमा भावना ज्ञेया, द्वितीया परिकथ्यते ।

---

१—गैरियक परिवेषणं २—कार्तिक श्रेष्ठिभिः

धर्मप्रसादरूपस्य, पीठं तु दर्शनं मतम् ॥२७१॥
येन पीठं दृढीभूयात्प्रसादोऽपि दृढो भवेत् ।
पीठे यदि च शैथिल्यं प्रासादो नैव तिष्ठति ॥२७२॥
श्रद्धादृढत्वभावाय, क्रियते सा तृतीयका ।
सम्यक्त्वरत्नरक्षार्थं, मनस्तत्रविधीयताम् ॥२७३॥
मनःस्थैर्ये यतो जाते, गुणेषु स्थिरता मता ।
गुणरत्नं विना तेन, विशाकलितरूपकम् ॥२७४॥
आगत्य मोहचौराश्च, चोरयन्ति गुणांश्च वै ।
ततो दृढं विधानाय, चतुर्थी भावना मता ॥२७५॥
प्राधान्यञ्च शमादीनां, भावना पञ्चमी मता ।
सर्वस्याधारता भूमौ, गुणानां दर्शनं तथा ॥२७६॥
सम्यक्त्वरूपपात्रं वै, यदा मिलति तद्वरम् ।
श्रुतशीलादिभावानामधो यायाच्च नो रसः ॥२७७॥
षष्ठी च भावना ज्ञेया, श्रद्धानं चैव रक्षता ।
षड्भावनाश्चसंप्रोक्ताः,अत्यादरं वितन्यताम्॥२७८॥
स्थानकं षड्विधं ज्ञेयं, सम्यक्त्वशुद्धिकारणम् ।
चैतन्यलक्षणो जीवः कर्मपुद्गलमिश्रितः॥२७९॥
क्षीर-नीर-समोज्ञेयः, किन्तु निश्चयतः पृथक् ।

यथा हंसो जलं त्यक्त्वा, दुग्धं पीबति वै पृथक् ॥२८०॥
स्वानुभवेन हंसेन, कर्मविवेचनं कृतम् ।
स्थानकं प्रथमं संज्ञं, द्वितीयं प्रतिपाद्यते ॥२८१॥
आत्मा नित्यस्वरूपोऽयं अनुभूतश्च सर्वदा ।
जन्मनैव यथा बालः, स्तन्यपानं विधीयते ॥२८२॥
पूर्वभवीय संस्काराद्, विना पीबति वै कथम् ।
यदि पीतं तदावान्ति, क्रियते च कथं नु वै ॥२८३॥
अतः पूर्वभवाभ्यासः, तत्र किं नानुमीयते ।
दानादिकक्रियाणाञ्च, फलं तु पारलौकिकम् ॥२८४॥
अतो नित्यः स मन्तव्यः, देवमनुष्यकस्यवै ।
अनित्यत्वञ्च पर्य्यायात्, नित्यो द्रव्येण कथ्यते॥२८५॥
नित्यानित्यत्वरूपेण, चिन्तनं यच्च तन्यते ।
द्वितीयं स्थानकं ज्ञेयं, तृतीयं प्रणिगद्यते ॥२८६॥
दण्डयोगात्कुलालैश्च, क्रियते वै घटो यथा ।
तथा कर्म्मप्रयोगेन, जीवैर्देहश्च तन्यते ॥२८७॥
गुणकर्त्ता स्वरूपाच्च, कर्मकृत् पररूपतः ।
सुग्रामनगरादीनां, कर्त्ताऽपि व्यवहारतः ॥२८८॥
पुण्यपापफलानाञ्च, भोक्तात्मा परिज्ञायते ।

शरीरादिकभोग्यानां, भोक्ताऽपि चानुमानतः॥२८९॥
व्यवहारनयेनैवं, विज्ञेयं बुद्धिशालिना।
निश्चयतो गुणानां वै, भोक्ता च प्रणिगद्यते ॥२९०॥
चतुर्थस्थानकं तच्च, पञ्चमञ्च प्रकाश्यते।
अनन्तसुखरूपैव, निश्रेयः पदता स्थिरा ॥२९१॥
आधिव्याध्यादिराहित्यं, क्षायिकसुखपोषणम्।
स्थानकं पञ्चमं तादृक्, षष्ठं स्थानकमुच्यते॥२९२॥
ज्ञानक्रियातया मोक्षः, इति सम्यक् विचार्य्यताम्।
सहजतो हि सर्वेतं, गमिष्यन्ति न कर्हिचित्॥२९३॥
ज्ञानवादी वदत्येवं, सत्यञ्च ज्ञानमेवहि।
क्रियाज्ञानं विना नैव, तज् ज्ञानं किंकरिष्यति॥२९४॥
शुक्तौ रजतभ्रान्त्या तु, गमने रजतं न वै।
अतः सत्यं तु विज्ञेयं, ज्ञानमेव जगत्त्रये ॥२९५॥
क्रियां विना क्रियावादी, तज्ज्ञानं किं करिष्यति।
ज्ञानेन किं तरिष्यन्ति हस्तप्रचालनं विना ॥२९६॥
भोजनादिकसामग्री, समीपे परितिष्ठति।
गच्छति किं मुखे ग्रासः हस्तेन ग्रहणं विना ॥२९७॥
अतः सत्या क्रिया ज्ञेया ज्ञानं तु निष्फलं मतम्।

अज्ञानिनां च संक्लेशः, एकान्तं हृदि मन्यताम्॥२९८॥
स्याद्वादाश्रयणेनैव विद्यते नैव दूषणम् ।
सज्ज्ञानपूर्वकं कर्म्म, करणे दोषता न वै ॥२९९॥
सापेक्षया च तत्सर्वं, सत्यं मनसि मन्यताम् ।
निरपेक्षतया सर्वमसत्यं परिभाव्यताम् ॥३००॥
तदिदं स्थानकं षष्ठं, शुभभावेन ज्ञायताम् ।
सम्यक्त्व निर्म्मलं तस्माद्, दोषापत्तिर्न जायते।३०१॥
सप्तषष्टि विचाराणां, विचारो हृदये यदा ।
मोक्षप्राप्तिस्तदा तेषां, सासन्ना नाऽत्र संशयः ।३०२।
यथा केवलज्ञानानां, मोहनीयं न रोधकम् ।
सहायि कारणं किन्तु, तत्क्षयः प्रणिगद्यते ॥३०३॥
सद्दर्शनस्य वै तत्र, दृष्टिमोहो न रोधकः ।
सहायि कारणं ज्ञेयं, तच्चोपशमनादिकम् ।३०४।
मतिज्ञानतिरोभावः[१], क्षयोपशमनादितः ।
जातं ततो निमित्तं तत्, कथ्यते परमार्थतः ॥३०५॥
यावत्कारण सामग्री, बाह्याभ्यन्तरभेदिका ।
न मिलति तदा कार्य्यं, कदापि नैव जायते ॥३०६॥

१—मतिज्ञानावरणादिकर्मक्षयोपशमादितः

परिभ्रष्टस्य चारित्रात्, सम्यक्त्वं हृदये च वै।
मुक्तिप्राप्तौ न संदेहः, कर्तव्यः परमार्थतः ॥३०७॥
सम्यक्त्वात्सत्यज्ञानञ्च, ततः चारित्रता मता।
यथाख्यातचरित्राच्च,शीघ्रं मुक्तिः प्रजायते ।३०८।
यदि च दर्शने भ्रष्टः सम्यग्ज्ञानं कुतो भवेत्।
विना तेन न चारित्रं मुक्तिस्तु शशश्रृङ्गवत् ॥३०९॥
दंसणभट्ठो भट्ठो दंसणभट्ठस्स नत्थि निव्वाणम्।
सिज्झन्ति चरणरहिया दंसणरहियानसिज्झन्ति।३१०
प्राणान्तकष्टप्राप्तेऽपि सम्यक्त्वं नैव हीयते।
येनकेनाप्युपायेन सम्यक्त्वं हृदि धार्य्यताम् ॥३११॥
सम्यक्त्वशुभकार्य्यस्य पालने विघ्नता भवेत्।
अतः परीक्षणं कार्य्यं भावनातश्च सर्वदा ॥३१२॥
श्रेयांसि बहुविघ्नानि भवन्ति महतामपि।
अश्रेयसि प्रवृत्तानां क्व यान्ति विघ्ननायकाः॥३१३॥
विघ्नं भवति नित्यं वै यथा सद्व्यवहारिणः।
प्रयोजनं क्व विघ्नस्य तथाऽसद्व्यवहारिणः॥३१४॥
मिथ्या व्याहृतिरूपत्व, विघ्नराहुश्च सर्वदा।
तत्र चापरविघ्नानां, प्रवेशो नैव विद्यते ॥३१५॥

इति शास्त्रविशारद जैनाचार्य्य विश्व
वन्द्याचार्य्यचूडामणि पूज्यपाद गुरुदेव
विजयधर्म्मसूरि शिष्येण न्यायतीर्थ
न्यायविशारदोपाध्याय मंगल
विजयेन विरचिते
योगप्रदीपे सप्रपञ्च
सम्यक्त्व वर्णननामा
पञ्चमप्रकाशः
समाप्तः ।

# ॥षष्ठ प्रकाशः॥

निगदितश्च संक्षेपाद्, द्वादशव्रतानां व्याख्यानश्च ।
पञ्चमे प्रकाशके च सम्यग् दर्शनं च ज्ञातव्यम् ॥१

## व्रतातिचार वर्णनं

व्रतानां सातिचाराणां, पालने दूषणं महत् ।
अतोऽतिचारता ज्ञेया, नादर्तव्या च कर्हिचित्॥२॥
दर्शनस्यातिचाराश्च, शङ्कादयो निरूपिता ।
अणुव्रतादिकानाश्च, निरूपणं प्रसङ्गतः ॥३॥
भवेच्च स्खलना क्वापि, व्रताचरणकारिणाम् ।
सा च चतुर्विधा ज्ञेया, चातिक्रमादि भेदतः ॥४॥
व्यत्यतिक्रमकौ चैव, अनाचारातिचारकौ ।
तेषां स्वरूपविज्ञानं, कथ्यते वीरशासनात् ॥५॥
आधाकर्म्मादि भोज्यस्य, निमन्त्रणश्रुतौ श्रुताद् ।
अतिक्रमश्च जायेत, आचारस्य तु लंघनात् ॥६॥
तदाहारानयार्थं वै, स्वस्थानाच्च प्रयाणके ।

व्यतिक्रमाभिधानं स्यादुल्लंघने विशेषतः ॥७॥
दायकगृहसंप्राप्ते, आहारग्रहणे सति ।
अतिचारस्तु विज्ञेयः, त्रिश्रेणिभ्यः प्रपाततः ॥८॥
आहारादानतः पश्चाद् भुंक्ते गत्वा गृहान्तरे[1] ।
भोजने खल्वनाचारः, अनाचारस्य सेवनात् ॥९॥
योग्यप्रायश्चिती भूता, स्खलना परिकीर्तिता ।
चतुर्थी स्खलनायां तु, प्रायश्चित्तं महन्मतम् ॥१०॥
अज्ञातभावतः कश्चित्, करोत्येवं विधां क्रियाम् ।
प्रायश्चित्तस्य तत्रैव, ग्रहणार्हो निगद्यते ॥११॥
यदि च ज्ञातभावेन, त्रिश्रेणिमुपगच्छति[2] ।
तथाऽपि हृदि सद्भावात् प्रायश्चित्तस्य योग्यता ॥१२॥
परिणामेन योग्यत्वं, ज्ञातव्यं ज्ञानिभिः सदा ।
ततः प्रायश्चितं देयं, दानेऽन्यथा तु दण्ड्यते ॥१३॥
व्रतार्थिनाऽतिचाराश्च, सेवनीया न वै कदा ।
पापभीरुः कथं पापं, सेवते ज्ञातभावतः ॥१४॥
विस्मरणात्कदाप्येवं, सेवति चातिचारकम् ।

१—उपाश्रये
२ प्राप्नोति ।

भग्ने व्रते च पश्चाद्धै, विचारो जायते हृदि ॥१५॥
ज्ञापनार्थं तदा तेषां, भग्नं व्रतं न मन्यताम् ।
किन्त्वतिचारता लग्ना, प्रायश्चित्तमतोमतम् ।।१६॥
प्रतिक्रान्तिर्द्विसंध्यं च, ह्यतिचारस्य शोधिका ।
व्रतार्थिनातु कर्त्तव्या, मनः शुद्धिं विधित्सता॥१७॥
वधबन्धछविच्छेदाः, अतिभारस्य ढौकनम् ।
अन्नपान निरोधश्च, व्रते चाद्येऽतिचारता ॥१८॥
स्थावरादिक जीवानां, यतो वधो विधीयते ।
वधरूपोऽतिचारश्च, प्रथमे प्रथमोमतः ॥१९॥
त्रसकर्मोदयेनैव, त्रसाश्च परिभाषिताः ।
तेषां रज्वादिना बन्धः, द्वितीयः प्रथमे मतः ॥२०॥
वृक्षादीनां त्वचोच्छेदः, छविच्छेद उदाहृतः ।
प्रथमाणुव्रतानां च, अतिचारस्तृतीयकः ॥२१॥
नरहस्तिपशूनांच, ह्यतिभारस्य ढौकनात् ।
अतिभाराऽनुढौकाख्यः, चतुर्थः प्रथमे मतः ॥२२॥
अन्नपानस्य तेषां च, निरोध करणे खलु ।
अन्न पाननिरोधाख्यः, पञ्चमः प्रथमे मतः ॥२३॥

ज्ञेया नादरणीयाश्च, दोषप्रवृद्धिहेतुकाः ।
वर्ज्या हि चातिचारास्ते, धर्मार्थिभिः प्रयत्नतः॥२४॥
मिथ्याऽभ्याख्यानरहस्याभ्याख्याने कूटलेखनम् ।
न्यासापहारसाकार मंत्रभेदा द्वितीयके ॥२५॥
पापोपदेशनं चैव, अन्यस्योन्मार्ग प्रेरणम् ।
मिथ्योपदेशनं ज्ञेयं, द्वितीये प्रथमो मतः ॥२६॥
गुह्यप्रकाशकत्वेन, रहस्यसत्प्रभाषणम् ।
अभ्याख्यानं हि चैकान्ते, द्वितीयश्चातिचारकः॥२७॥
अनालोच्य प्रवक्तव्यं, चौरो वा पारदारिकः ।
एवं प्रकारवादित्वं, तृतीयश्च द्वितीयके ॥२८॥
अन्यसदृशाकारश्च, नूल मुद्रा विधापनम् ।
परप्रयोगताऽऽधीनं, अन्येनाऽनुक्तवाक्त्वतः॥२६॥
लेखस्य कारकत्वेन, अतिचारस्य सेवनाद् ।
चतुर्थश्चातिचारः स्याद्, जैनधर्माऽनुसारतः ॥३०॥
विश्वासागतजीवानां, वंचनं नैक भेदतः ।
अन्यपार्श्वे समागत्य, विश्वस्तस्य प्रकाशनम्॥३१॥
विश्वस्तमंत्रभेदाऽऽख्यः, अतिचारश्च पंचमे ।
एते पंचातिचारश्च, द्वितीयस्मिन् व्रते मताः ॥३२॥

न्यासी कृतकवस्तूनां, अथवा चापलापनम् ।
न्यासाऽपहारनामाऽऽख्यः, द्वितीये पञ्चमो मतः॥३३॥
स्तेनक्रियासु चौरस्य, या प्रेरणा विधीयते ।
ततस्तेन प्रयोगाख्यः, तृतीये प्रथमो मतः ॥३४॥
चौर्येणानीतरिक्तस्य, ग्राह्यं मुधाक्रयेणवा ।
आदानं स्तेनपार्श्वाश्च, द्वितीयश्च तृतीयके ॥३५॥
राज्याम्नायं समुल्लंघ्य, ग्राह्यमन्यविधेन वै ।
विरुद्धराज्य इत्याख्यः, अतिचारस्तृतीयके ॥३६॥
सुवर्णरूप्यसादृक्ष, कुत्सित द्रव्य वस्तुषु ।
वर्णादिना च निर्माय, लोके सुवर्णवत्तया ॥३७॥
प्रख्यापनञ्च सर्वत्र, विषये व्यवहारके ।
गृह्यतां सत्यसौवर्णमसत्यं परित्यज्यताम् ॥३८॥
प्रतिरूपक इत्याख्यः, चतुर्थश्च तृतीयके ।
व्यवहारोप्यनादेयः, सर्वदुःखस्य कारणम् ॥३९॥
कूटतूल कुमानेन, परेषां प्रवितारणम् ।
कूटक्रयणमित्याख्यः, तृतीये पञ्चमो मतः ॥४०॥
स्वापत्या व्यतिरिक्तस्य, कन्यादानफलेच्छया ।
स्नेहसम्बन्धतो वापि, विवाहस्य च कारणम् ॥४१॥

अन्यविवाहकाराख्यः, चतुर्थे प्रथमो मतः ।
अयमपि प्रदोषाख्यः, श्रीकृष्णेन निराकृतः ॥४२॥
प्रतिनरञ्चरन्ती वै, सा स्त्री साधारणी मता ।
किञ्चित्कालं च भाट्या वै, ग्राह्या तत्राऽपि भोगके॥४३॥
इत्वरकाल इत्याख्यः, अतिचारश्च संमतः ।
महात्मना च संत्याज्यः, नादर्तव्यश्च कर्हिचित्॥४४॥
अन्येन स्वीकृतायान्तु, स्त्रियां गमनरूपकः ।
परगृहीत इत्याख्यः, तृतीयश्च चतुर्थके ॥४५॥
करणे वै तु क्रीडाया, या क्रीडा रागकारिका ।
अनङ्गक्रीडनाख्यश्च, चतुर्थो वै चतुर्थके ॥४६॥
कामविषयतायाश्च, वृद्धिस्तीव्रप्रकामतः ।
योनिप्रमुख कक्षादि, स्थानेषु मुष्कमोचनम् ॥४७॥
तत्कृतेन ग्रहीलायां, चटकायाश्च सादृशम् ।
मृतवन्निश्चलः शेते, अभीक्ष्णं स्त्रीषु रोहणम्॥४८॥
कुत्सिता सा क्रिया ज्ञेया, विषयाणां प्रवर्द्धिका ।
तस्याश्च सेवनञ्चैव, पञ्चमोऽनङ्गक्रीडनम् ॥४९॥
सातावेदोदयेनैव, अग्निदेवादि-साक्षिकम् ।
पाणिग्रहणनामाख्यः, विवाहः परिकीर्तितः॥५०॥

यावत्प्रमाणक्षेत्रस्य, प्रतिज्ञा च व्रताय वै ।
तस्याश्च भंगकर्तव्ये, प्रमाणातिक्रमोमतः ॥५१॥
क्षेत्रस्य यत्प्रमाणेन, धनाय नियमः कृतः ।
उल्लंघनं कृतं तस्य, व्रतेऽतिचारता मता ॥५२॥
धनधान्यस्य वै यावत्प्रमाणा या प्रतिश्रुतिः ।
उल्लंघनं कृतं तस्याः, धनप्रमाणलंघनम् ॥५३॥
दास्यादि भृत्यकानाञ्च, यावती वै प्रतिश्रुतिः ।
उल्लंघनं कृतं तस्याः, भृत्यप्रमाणलंघनम् ॥५४॥
रूप्यक शातकुम्भानां, यावती च प्रतिश्रुतिः ।
उल्लंघनं कृतं तस्याः, तेषां प्रमाणलंघनम् ॥५५॥
आकाशात्पतितैश्चैव, जलैर्निष्पाद्य शस्यकम् ।
तस्योत्पत्तेश्च यत्स्थानं, क्षेत्रं तत्प्रणिगद्यते ॥५६॥
पञ्चकाणुव्रतानाञ्च, सम्यक्त्वस्य च वै तथा ।
अतिचाराश्च शास्त्रेषु, प्रोक्तास्ते च प्रकाशिताः॥५७॥
शास्त्रमालम्ब्य वक्तव्ये, दृश्यते भवभीरुता ।
अन्यथा भववृद्धिस्यादनन्तदुःखदायिका ॥५८॥
शास्त्रं चक्षुश्च येषां वै, कथं तेऽसत्यवादिनः ।
शास्त्रदीपे समीपस्थे, न गर्तेषु पतन्ति ते ॥५९॥

शास्त्रं पुरस्कृतं येन, वीतरागः पुरस्कृतः ।
पुरस्कृते च सर्वज्ञे, कथं मिथ्या वदन्ति ते ॥६०॥
आत्मशासनत्राणाय, बुधैः शास्त्रं निरूप्यते ।
वीतरागवचो रूपं, नान्यच्च परिकीर्तितम् ॥६१॥
स्मृत्यन्तर्ध्यान कार्य्यं च, उर्ध्वाधोदिग्व्यतिक्रमौ ।
क्षेत्रस्य वृद्धिरूपं स्यात्, तिर्य्यग्दिग्व्यतिलंघनम्॥६२॥
अतिचारास्तु विज्ञेयाः, दिग्वरतेः प्रदूषकाः ।
गुणव्रतस्वरूपे च, प्रथमे भवभीरुणा ॥६३॥
व्याकुलत्व प्रमादेन, मत्याद्यपाटवादिना ।
क्षेत्रविस्मरणं चैव, स्मृत्यन्तर्ध्यानमुच्यते ॥६४॥
पर्वतशिखरारोहविषये वा प्रतिश्रुतिः ।
तस्यातिक्रमकारित्वमुर्ध्वव्यतिक्रमस्तदा ॥६५॥
लौहसुवर्ण ताम्रादि, रजतादिषु भूमिषु ।
भूमिगृहोदपानानां, नियमो यादृशः कृतः ॥६६॥
उल्लंघनं कृतं तस्य, अधोदिशो व्यतिक्रमः ।
अतिचारश्च बोधव्यः, परिहेयश्च सर्वदा ॥६७॥
तिर्य्यग्गमनप्रासंग्ये, दिग्विदिङ्नियमः कृतः ।
गमनागमकर्तव्ये, व्यतिक्रमेऽतिचारता ॥६८॥

शतयोजनमन्यत्र, सहस्रादिकमेकतः ।
यावत्प्रमाणकं दिक्षु, कृतं तेन व्रतार्थिना ॥ ६९ ॥
गमने कारणं नैव, सहस्त्रयोजनेषु वै ।
शतयोजनगन्तव्ये, प्रसङ्गो जायते बहु ॥७०॥
अतो लोभवशेनैव, अन्वस्मिश्चान्यक्षेपणम् ।
कृतं समीकरत्वाय, क्षेत्रवृद्धिस्ततो मता ॥७१॥
सचित्तं तेन संबद्धं, सचित्तमिश्रणं तथा ।
अभिषवश्च दुष्पक्वः मता पञ्चातिचारता ॥७२॥
कन्दमूलफलादीनां, सचित्तानाञ्च भक्षणम् ।
सचित्ताहारकर्तव्ये, ह्यतिचारश्च सप्तमे ॥७३॥
पादपादिसचित्तेन, संबद्धा गुन्द्रवस्तुता ।
पक्वफलसचित्तादावन्तवर्त्तिश्च बीजतः ॥७४॥
अनाभोगादिरूपेण, कृतं तस्य च भक्षणम् ।
सचित्तसंयुताहारः, अतिचारो द्वितीयकः ॥७५॥
अनेकद्रव्यसंधाननिष्पन्नानां परिश्रुताम् ।
मांसप्रकार खंडानामासवानां तथैव च ॥७६॥
अनाभोगादि रूपेण कृतं तेषां तु भक्षणम् ।
अभिषव इतिख्यातश्चतुर्थः सप्तमे मतः ॥७७॥

अर्धस्विन्नयवादीनां, गोधूम मुद्गवस्तुनः ।
अनाभोगादि रूपेण कृतं तेषाञ्च भक्षणम् ॥७८॥
पञ्चमोऽप्यतिचारश्च, सप्तमे प्रतिपादितः ।
नादर्तव्यश्च ज्ञातव्यः, सप्तमव्रतकांक्षिणा ॥७९॥
कन्दर्पश्चैव कौकुच्यः, मौखर्य्यमविचारता ।
उपभोगाधिकत्वंच, युक्ताधिकरणं तथा ॥८०॥
असमीक्ष्य समारंभः अष्टमे प्रतिपादितः ।
अतिचाराश्च बोधव्याः व्रतरक्षणकांक्षिभिः ॥८१॥
रागोदयेन हास्यादि प्रयुक्तासभ्यवादिता ।
कन्दर्पः सोऽथ विज्ञेयः अतिचारोऽष्टमे मतः॥८२॥
मोहोदयेन हास्यादि, युक्तासभ्यप्रलापिता ।
तद्वर्जनकृतकायेनाऽसभ्यव्यापार-कारणम् ॥८३॥
कौकुच्यं तच्च विज्ञेयं, अतिचारो द्वितीयकः ।
कर्तव्यं न कदाप्येवं, अनाचारस्य कारणम् ॥८४॥
असंबद्धकहास्यादि, असम्बद्धवचस्विता ।
असंबद्ध प्रलापित्वं, मौखर्य्यं तन्निगद्यते ॥८५॥
शकटेन युगं चैव, उदुखलेन मूशलम् ।
कार्मुकेन शरादिश्च, संयोज्य गृहरक्षणम् ॥८६॥

युक्ताधिकरणं तच्च, कथ्यते भवभीरुणा।
महारंभनिमित्तं तत् कर्तव्यं न कदाचन ॥८७॥
अतिचारो न कर्तव्यः ज्ञातव्यो व्रतधारिणा।
अनर्थदण्डहेये च, अतिचारश्चतुर्थकः ॥८८॥
यावद्वस्त्रादिकानाञ्च मध्ये येषां प्रयोजनम्।
तदधिकञ्च मन्तव्यमुपभोगाधिकं तथा ॥८९॥
अधिकस्योपभोगस्य, रक्षणे दोषता खलु।
अधिकं रक्षणीयं न अष्टमव्रतधारिणा ॥९०॥
रक्षणेऽप्यतिचारश्च, मनस्येवञ्च भाव्यताम्।
अनालोच्य समारंभे,अतिचारोऽष्टमे मतः ॥९१॥
षष्टसप्तमयोश्चैव, अष्टमस्य तथैव च।
गुणव्रतं कृतं नाम, अणुव्रतगुणाकरम् ॥९२॥
मनोवचनकायैश्च, दुष्प्रणिधाप्यनादरः।
स्मृत्यनवप्रतिस्थाप्यः नवमेऽप्यतिचारता ॥९३॥
व्रतविषयिणी शिक्षा, यत्र सुचारु विद्यते।
अन्त्यतूर्य्यं व्रतानाञ्च, शिक्षाव्रताभिधानता ॥९४॥
शरीरस्य विभागानां, पाणीनाञ्च पदां तथा।
अव्यवस्थितरीत्यैव, सामायिके च स्थापनम् ॥९५॥

कायचापल्यभावेन, अस्थिरताऽऽसने मता।
स्थानासनेऽस्थिरत्वेन, स्थैर्यं नैव प्रजायते ॥९६॥
कायदुष्प्रणिधानाख्या, नवमेऽप्यतिचारता।
कायदुष्प्रणिधानश्च, न कर्तव्यं कदाचन ॥९७॥
वर्णसंस्कारकाभावे, शुद्धमुच्चारणं नहि।
न तेनार्थावबोधःस्यात्सा वाग्दुष्प्राणिधानता ॥९८॥
द्रोहे-र्ष्याक्रोधलोभानां, गर्वादीनां तथैव च।
मनस्येवं प्रजायन्ते, ¹व्यासङ्गे नैव विभ्रमाः ॥९९॥
मनो दुष्प्रणिधानश्च, तत्करणेन प्रजायते।
तादृशं नैव सेव्यं वै, सेवने चातिचारता ॥१००॥
सामायिके समत्वे च, आत्मनः शुद्धरूपके।
अनुत्साहो न कर्तव्यः, कर्तव्ये चातिचारता॥१०१॥
पश्चात्स्मृति विनाशेन, कृत्वा सामायिके स्थितः।
कृतं नवेति ज्ञानं न, अतिचारस्ततस्तथा ॥१०२॥
उपयोगे समायः स्याद्, विस्मरणे सदोषता।
दोषागमो न जायेत, अतःस्यात्सावधानता ॥१०३॥
आनय प्रेष्य प्रायोगौ, शब्दरूपानुपातकौ।

१—इत्याख्यः

पुद्गलक्षेपनामाख्याः, दशमे चातिचारता ॥१०४॥
संदेशादि प्रदानेन, सचित्तादिकवस्तुनः ।
आनयनं वितन्येत, दशमे प्रथमो मतः ॥१०५॥
अभिगृहीत देशानां, व्यतिक्रम भयादितः ।
भृत्यं प्रेष्य त्वयानेयं, मदीयश्च गवादिकम् ॥१०६॥
प्रेरणेति च कर्तव्ये, प्रेष्यप्रयोगनामकः ।
अतिचारश्च मन्तव्यः, देशावकाशिके व्रते ॥१०७॥
स्वगृहभूमि देशानां, पूर्वमभिग्रहः कृतः ।
पश्चादुत्पन्न हेतौ तु, किञ्चिद्व्याजं विधीयते॥१०८॥
उच्छ्वासादि कृतेनैव, अन्येषां प्रतिबोधनम् ।
शब्दानुपातरूपोऽयं, दशमे स्यात्तृतीयकः ॥१०९॥
स्वगृहभूमि देशानां, पूर्वमभिग्रहः कृतः ।
पश्चादुत्पन्न हेतौ च, छलं किञ्चिद्गवेष्यते ॥११०॥
स्वाकारालोकनेनैव, अन्येषां प्रतिबोधनम् ।
रूपानुपातरूपोऽयं, चतुर्थो दशमे मतः ॥१११॥
नियमित प्रदेशादेः, बहिः स्थित जनस्य वै ।
ज्ञापनार्थञ्च लोष्टादि, स्वप्रदेशात्प्रक्षिप्यते ॥११२॥

अस्मिन्कार्य्यें च कर्तव्ये, पुद्गलक्षेपनामकः ।
अतिचारश्च ज्ञातव्यः, दशमे पञ्चमोमतः ॥११३॥
प्रत्यवेक्षित राहित्ये, स्थानके वाऽप्रमार्जिते ।
उत्सर्गादाननिक्षेपा, अनादरस्मृती तथा ॥११४॥
अतिचाराश्च पञ्चेमे, पौषधव्रतदूषकाः ।
नाचरणीयाःकदाप्येवं, मन्तव्याः पौषधार्थिना॥११५॥
प्रस्रवणस्य चोच्चारे, खेलशिंघाण वस्तुनः ।
दृष्ट्या विलोकनं यत्र, प्रमार्जनञ्च नो कृतम् ॥११६॥
एतादृग्भूमिदेशादौ, उत्सर्गकरणं तथा ।
आद्योऽतिचाररूपोऽयं, मन्तव्यः पौषधव्रते ॥११७॥
पीठफलकयष्टीनां, पात्रकम्बलवस्तुनः ।
दृष्ट्या विलोकनं यत्र, नो कृतं च प्रमार्जनम्॥११८॥
एतादृग्भूमिदेशादौ, निक्षेपग्रहणे कृते ।
द्वितीयो ह्यतिचारश्च, मन्तव्यः पौषधव्रते ॥११९॥
संस्तार साधनस्यैव, दर्भकम्बल वस्तुनः ।
दृष्ट्या विलोकनं यत्र, न कृतं वै प्रमार्जनम्॥१२०॥
एतादृग्भूमि देशादौ, संस्तारक प्रविस्तरौ ।
तृतीयो ह्यतिचारश्च, मन्तव्यः पौषधव्रते ॥१२१॥

पर्वण्यादिक तिथ्यादौ, अनुत्साहश्च पौषधे ।
अनादरेण कर्तव्ये, अतिचारश्चतुर्थकः ॥१२२॥
करणीयक्रियादीनां, चोपवासादिपौषधे ।
स्मरणे स्खलना या स्यात्स्मृत्यनुस्थापनं च तत्॥१२३॥
स्मृत्यनुस्थापनं यत्तु, पंचमश्चातिचारकः ।
सावधानेन कर्तव्यं, पौषधमप्रमादिना ॥१२४॥
सचित्ते वस्तु निक्षेपः, सचित्तेन पिधानकम् ।
परस्य व्यपदेशाख्यः, मात्सर्य्य दर्शनं तथा ॥१२५॥
कालातिक्रमकाख्यश्च, एते पञ्चातिचारकाः ।
अतिथि संविभागस्य, मन्तव्या व्रतलिप्सुभिः॥१२६॥
चतुर्धाहारपानानां, अनादानमनीषया ।
यवगोधूमशाल्यादौ, सचित्ते निक्षपात्तथा ॥१२७॥
एतत्कार्य्ये च कर्तव्ये, अतिचारः प्रजायते ।
महामुनेश्च दानादौ, चान्तरायो निबध्यते ॥१२८॥
अतस्तादृङ् न कर्तव्यं, यतो दानान्तरायकृत् ।
अतिथिसंविभागस्य, प्रथमश्चातिचारकः ॥१२९॥
चतुर्धाऽऽहार पानानां, अनादान मनीषया ।
सुरणकन्दपुष्पादि, सचित्तेन पिधानकम् ॥१३०॥

सचितेन पिधानाख्यः, अतिचारः प्रकथ्यते ।
अतिथिसंविभागस्य, मन्तव्यश्च द्वितीयकः ॥१३१॥
पश्यन्तं संयतं वै तु, भिक्षाकाल उपस्थिते ।
न स्वान्ते देयबुद्धिश्च, प्रकटाऽन्नादि वस्तुषु ॥१३२॥
किञ्चिच्छलं च निष्कास्य, परकीयं प्रकथ्यते ।
विनाऽऽज्ञां किमुयच्छामि, तुभ्यं महामुने! वद!!१३३॥
एतादृक् कार्य्यकर्तव्ये, अतिचारः प्रजायते ।
अतिथिसंविभागस्य, कर्तव्यं नहि तादृशम्॥१३४॥
कषाययुक्तचित्तेन, द्वेषबुध्या प्रयच्छताम् ।
मात्सर्य्याख्योऽति चारश्च, चतुर्थः संविभागके॥१३५॥
योग्यो गोचरकालोऽपि, तस्यातिक्रमणं कृतम् ।
सद्भावो हृदये नैव, अनादानमनीषया ॥१३६॥
कालातिक्रम इत्याख्यः, अतिचारः प्रकीर्त्तितः ।
संविभागस्य ज्ञातव्यः, संविभागं प्रकुर्वता ॥१३७॥
जीवितमरणाशंसा, मित्रसुखानुरागके ।
निदानकरणं चैव, संलेखनातिचारता ॥१३८॥
वस्त्रादि बहुलाभेन, कुटुम्बानां सुखेन वै ।
लोकश्लाघाश्रुतेनैव, जीवनमिदमेव च ॥१३९॥

जल बुद्बुद् स्वरूपस्य, देहविनाशरूपतः ।
अवस्थानादि गार्ध्येन, प्रयत्नकरणं तथा ॥१४०॥
इति जीविताशंसायाः, करणं व्रतधारिणाम् ।
जीविताशंस इत्याख्यः, संलेखनातिचारकः॥१४१॥
स्वकीयानादरं दृष्ट्वा, मरणं मामकं कदा ।
चिन्तनपरिणामस्स्याद्, मरणाशंसनं मतम् ॥१४२॥
रोगग्रस्तशरीरस्य, मृतौ दत्तश्च मानसम् ।
प्राप्तजीवनकष्टस्य, मुहुर्मरण चिन्तनम् ॥१४३॥
मरणाशंस इत्याख्यः, ह्यति चारो द्वितीयकः ।
संलेखनातिचारेषु, मन्तव्यः सुखमिच्छता ॥१४४॥
जीविते मरणे चैव, सहचारि सुमित्रके ।
योग्यो ह्यपूर्वस्नेहश्च, तं हातुं नैव वाञ्छति ॥१४५॥
इत्यनुरागकारित्वे, मित्रानुरागता मता ।
संलेखनासु बोधव्यस्तृतीयो ह्यतिचारकः ॥१४६॥
स्मृतिविशेषरूपेण, अनुभूत स्त्रिया सह ।
मुहुः सुखस्य संस्मारे, सुखानुबन्धरूपकः ॥१४७॥
कष्टानुष्ठानशीलैश्च, तपोभिर्लाभसंचितः ।
तेषां विक्रय कारित्वे, निदानं तन्निगद्यते ॥१४८॥

यदि वाऽऽसां तपस्यानां, चारित्रस्य तथैव च ।
अस्ति मम फलं तर्हि, जन्मान्तरस्य चिन्तनम्॥१४६॥
चक्रवर्त्यादि भोगानां, देवेन्द्रादिक वस्तुनः ।
सुखं भवतु खल्वेवं, चिन्तनं वै निदानकम्॥१५०॥
तपश्चारित्र नागं¹ वै, विक्रीय रासभः क्रीतः ।
यथा भोगनिदानं वै, ब्रह्मदत्तादिना कृतम्॥१५१॥
निदानं नैव कर्तव्यं, पुरुषेण कदाचन ।
चिन्तामणिं परित्यज्य, शकलं च कथं धृतम्॥१५२॥
साहचर्य्यस्य पूर्वस्य, पांशु क्रीडादि वस्तुनः ।
स्मरणे सति यः स्नेहः, संजातः सुखरूपकः ॥१५३॥
तस्य प्राणान्तकालेऽपि, परित्यागो न जायते ।
इति विचिन्तनं तच्च, मन्तव्यश्च द्वितीयकः॥१५४॥
संलेखनातिचारश्च, ज्ञातव्यः सर्वदा जनैः ।
तेषामाचरणे यत्नः, कदापि नैव तन्यते ॥१५५॥
एतेषामतिचाराणां, येन केन प्रकारतः ।
आचरणन्तु सर्वेषां, यदि वा यस्य कस्यचित्॥१५६॥

---

१—हास्तिनं

कृतं प्रमादतस्तस्य, मिथ्यादुष्कृतता भवेत् ।
भूयादतःपरं नैव, आचारणं न तन्यते ॥१५७॥

इति श्री शास्त्रविशारद-जैनाचार्य्य-सुश्लोक
कीर्ति-विश्वपूज्य जंगमयुगप्रधान पूज्य-
पाद गुरुदेव श्री विजयधर्म्म सूरीश्वर
शिष्येण न्यायविशारद न्यायतीर्थो
पाध्याय मंगलविजयेन विरचिते
योगप्रदीपेऽतिचार वर्णन
नामा षष्ठप्रकाशः ।

# ॥ सप्तम प्रकाशः ॥

## संलेखनास्वरूप वर्णनं

संलेखना शिवादाने, समर्था मलशोधिका ।
संलेखना सुखप्राप्त्यै, परमं साधनं मतम् ॥१॥
कषायविग्रहादीनां[1], तद्भवमृत्यु कारणे ।
यथार्थं तनुकारित्वे, मारणान्तिकलेखना[2] ॥२॥
द्विविधा सा च विज्ञेया, द्रव्यभावप्रभेदतः ।
तयोर्द्वयोः स्वरूपञ्च, अनुक्रमेण प्रोच्यते ॥३॥
धातुभ्यो विषयोन्मादः, कथितः पूर्वसूरिभिः ।
आहारादिकहेयेन, तस्य शोषणता मता ॥४॥
द्रव्यसंलेखना ज्ञेया, संलेखनां चिकीर्षता ।
भावसंलेखनारूपं, कथ्यते शास्त्रयोगतः ॥५॥
रागद्वेष कषायाणां, समतापरिणामजा[3] ।
धर्म्मध्यानप्रभावेन, जनेन संनिरुध्यते ॥६॥

---

*१—शरीरादीनां २—संलेखना चोप युज्यते ३—वृत्तिः*

भावसंलेखना ज्ञेया, भाववृद्धिं प्रकुर्वता ।
कर्तव्या ज्ञानिभिः सर्वैः, द्वयी संलेखना तथा ॥७॥
संलेखनात्मघातेषु, भिन्नता प्रतिभाति का ।
प्राणघातस्तु सर्वत्र, विद्यते च तयोर्द्वयोः ॥८॥
रागद्वेषौ विनिर्मुच्य, धृत्वा निर्ममतां किल ।
भावप्राणप्रशुध्यर्थं, द्रव्यप्राणान्विमुञ्चति ॥६॥
ध्यानारूढः सदैव स्यात्समता सर्ववस्तुषु ।
न स्वीयं परकीयञ्च, जगति सर्वथा मतम् ॥१०॥
द्वादशवर्षपर्य्यन्तं, मरणान्तिकलेखनाम् ।
आलोच्य स्वीय बोधेन, आपृच्छ्य ज्ञानिनं तथा ॥११॥
तादृशमस्ति यद्यायुः, संलेखनां करोति सः ।
युज्यते करणं नैव, ज्ञानाभावे च तादृशी ॥१२॥
स्वपरेषां सुलाभाय, यदि शक्तिश्च विद्यते ।
तद्युपकारता कार्य्या, इत्येवं भावना सदा ॥१३॥
असारस्य शरीरस्य, नश्वरशीलरूपतः ।
ज्ञानेन तपसा पातः, आत्मघातो न कथ्यते ॥१४॥
अतोविचार्य्य वक्तव्यं, आत्मघातः क्रियात्मकः ।
द्वयोः स्वरूपमज्ञात्वा, अन्यद्वक्तुं न युज्यते ॥१५॥

रागद्वेषविनाशी क्व, क्व च रागमलीमसः ।
द्वयोः साम्यं न कर्तव्यं, हस्तिरासभयोर्यथा॥१६॥
क्व चिन्तामणि सद्रत्नं, क्व काचशकलं तथा ।
धर्मध्यानप्रलीनः क्व, क्व चार्तध्यान रूपकम् ॥१७॥
अवस्थायां प्रमादिन्यां, आत्मघातो विधीयते ।
अप्रमत्त शरीरादौ, संलेखनां समीहते ॥१८॥
अतो विचार्य्य वक्तव्यं, समंजसश्च सर्वदा ।
तूलनात्मक दृष्ट्या च, तूलना सर्वदा मता ॥१६॥
आत्महितश्च भावेन, भवेत्सर्वत्र सर्वदा ।
रत्नत्रितयरूपेण, आत्मन्येव गवेष्यताम् ॥२०॥
शरीरं नश्वरं त्याज्यं, येन केन प्रकारतः ।
अप्रमत्तत्वभावेन, प्रमत्तभावतस्तथा ॥२१॥
निष्कास्यते रसः सारो, यथेक्ष्वादिकवस्तुषु ।
निस्सारश्च तुषादिस्तु, त्यज्यते सर्वमानवैः ॥२२॥
स्वपरोपकृतिसारः, सदैव देहधारिणाम् ।
यावत्कालं प्रजायेत, तावत्तेषाञ्च रक्षणम् ॥२३॥
यदा तत्कार्य्यकर्तव्ये, शक्तिस्तेषु न विद्यते ।
तुषरूपस्य वैतस्य, त्यक्तव्ये दोषतां वद ॥२४॥

धर्म्मध्यानप्रधानेन, अप्रमत्तत्वयोगतः ।
शरीरादेश्च हातव्ये, नहि दोषो गुणावह; ॥२५॥
आर्तध्यानप्रधानेन, कषायदृढभावतः ।
शरीरादेश्च हातव्ये, बहुदोषो विभाव्यताम् ॥२६॥
एकतो गुणप्राधान्यं, अन्यतो दोषरूपता ।
लाभालाभौ समालोच्य पश्चात्सर्वं निगद्यताम्॥२७॥
अत आत्मार्थिना कार्य्या, संलेखना सुभावतः ।
आत्मनः सुखलाभाय, अन्तिमसमये तथा॥२८॥

इति शास्त्रविशारद जैनाचार्य्य विश्ववन्द्य
जंगमयुगप्रधान सूरीश्वरसम्राट श्री
विजयधर्म्मसूरि शिष्येण न्यायतीर्थन्याय
विशारदोपाध्याय मंगल विजयेन विर-
चिते योगप्रदीपे मारणान्तिक
संलेखना वर्णननामा
सप्तम प्रकाशः

---

# ॥ अष्टम प्रकाशः ॥

## मार्गानुसारि गुणवर्णनं

कृष्यते चात्मक्षेत्रं च, मार्गानुसारिभिर्हलैः ।
तदा सम्यक्त्व बीजस्य, वपनं जायते सदा ॥१॥
बीजावापे हलं मुख्यं, कारणं प्रणिगद्यते ।
अतो मार्गानुसारित्वमवश्यमेव दर्श्यते ॥२॥
धर्म्ममार्गानुगन्तव्ये, मता मार्गानुसारिता ।
कदा तादृगवस्था च, प्राप्यते इति दर्श्यते ॥३॥
पञ्चत्रिंशच्च भेदेन, न्यायसम्पन्नतादितः ।
स्वरूपं तस्य वक्तव्यं, श्रूयतां धर्म्मभावतः ॥४॥

### न्यायसंपन्नविभवस्वरूपं

स्वामिमित्रादि द्रोहाच्च, वश्वस्तानां प्रतारणात् ।
चौर्य्यादेश्चासदर्थानां, परित्यागश्च सर्वथा ॥५॥
स्वसवर्णानुकुल्येन, सद् व्यापारे प्रवर्तनम् ।
अर्थार्जनस्य चोपायः, स न्यायःप्रणिगद्यते ॥६॥

तेन सम्पन्नतास्तेषाम्, न्यायसम्पन्न उच्यते ।
धर्म्मे व्ययस्य तेषां हि, क्रियते शुद्धभावतः ॥७॥
अन्यायार्जितवित्तानां, व्ययो धर्म्मे भवेन्नहि ।
केनचिद् यदि क्रियेत, तदा तत्र कषायता ॥८॥
चौर्य्यादिकश्च तत्राऽपि, गालिप्रदानकारणम् ।
न्यायालयेषु गन्तव्यं, जायतेऽन्याययोगतः ॥९॥
गृहादावुपभोगेऽपि, स्वान्ते भीतिश्च जायते ।
समभावो यदा कुत्र, प्राप्येत न कदाचन ॥१०॥
अन्यायार्जित वित्तानां, अनुभूतं नृपैः फलम् ।
न्यायार्जितधनानाञ्च, प्राप्तं च श्रेष्टिनाफलम्॥११॥
तयोः कथानकं चैव, "धर्म्मदेशनशास्त्रके"[१] ।
पूज्य गुरुवरेणैव, प्रोक्तं ततोवधार्य्यताम् ॥१२॥
अन्यायफलकिंपाकः, अत्र परत्र भुज्यते ।
न्यायफलञ्च सौभाग्यं, सर्वत्राप्यनुभूयते ॥१३॥

## शिष्टाचारनिरूपणं

व्रतज्ञानवयोवृद्धाः, प्रामाणिकाश्च सर्वदा ।
यैश्च सेवाकृता तेषां, ते च शिष्टा उदाहृताः॥१४॥

---

१—धर्मदेशनात्मक ग्रन्थे

लोकविरुद्ध हातत्वं, दीनोद्धारे च यत्नता ।
सर्वदा शुभध्यानत्वं, धर्म्मदेशस्वजातिषु ॥१५॥
सदाचारस्स विज्ञेयस्तस्य प्रशंसकाः सदा ।
मन्तव्या धर्म्मग्रन्थेषु, शिष्टाचार प्रशंसकाः ॥१६॥
आचारः कथ्यते तेषां, श्रूयतां हि तमिच्छता ।
श्रुत्वा स्वान्ते च धर्तव्यः, आचरणीय एव वै ॥१७॥
विपद्युच्चैश्च प्रस्थेयं, श्रयणीयं महत्पदम् ।
न्यायानपेतवृत्तिश्च, मलीनं नैव मानसम् ॥१८॥
दुर्जनः पार्थनीया न, मित्रांश्चाल्पधनं तथा ।
सता केनेति प्रोक्तं वै, असिधारासमं व्रतम् ॥१९॥
नियमाः षट् सदाचाराः, पालनीयाश्च सर्वदा ।
तदा शिष्टत्वमायाति, अन्यथा तु कदापि न ॥२०॥

## विवाहस्वरूपनिरूपणं

कुलशीले समे येषां, ये च विभिन्न गोत्रजाः ।
तेषां परस्परं कार्य्यः, विवाहो गृहमेधिभिः ॥२१॥
पितृपितामहादीनां, पूर्ववंशः कुलं मतम् ।
अभक्ष्य भक्षणत्यागः, शीलश्च तन्निगद्यते॥२२॥

वेषभाषाधनानाञ्च, मन्तव्याऽपि समानता ।
सर्वेषु विपरीतेषु, कर्हिचिन्न समानता ॥ २३ ॥
वरस्त्वभक्ष्यभोगीन, अभक्ष्यभोगिनी वधुः ।
तयोर्द्वयोश्च संयोगः, संक्लेश वर्द्धकोमतः ॥२४॥
वरोऽपि मद्यमांसांशी, सदाचारवती वधुः ।
उत्तमकुलजा पत्नी, अधमकुलजो वरः ॥२५॥
तयोः परस्परं योगे सुखशान्ति कुतो भवेत् ।
तथैव भिन्न भाषायां, वैषम्यं विभवे तथा ॥२६॥
अतः कुलादिके साम्ये, विवाहे रतिजं सुखम् ।
अन्यथा नित्य संक्लेशः, प्रजायते परस्परम् ॥२७॥
पूर्वैक पुरुषो[१] वंशः, तद्गोत्रमिति कथ्यते ।
वध्वा वरस्य गोत्रस्य, भिन्नता चाऽत्र संमता ॥२८॥
एकगोत्रे च वैवाहे, कर्तव्ये दोषता भवेत् ।
भगिनीभ्रातृ संयोगसदृशी पापता मता ॥२९॥
युग्मकाले प्रदृश्येत, व्यवहारश्च तादृशः ।
अधुना किं न क्रयेत, उच्यतां दोषदर्शिना ॥३०॥

---

*१ पूर्वैकपुरुषपरंपरातः समागतो वंशो गोत्रामिति कथ्यते यथा गर्गादागतं गोत्रं गार्ग्यमुच्यते तथैवात्रापि ।*

युगलिक मनुष्याणां, सहजन्म मृती तथा ।
यावत्कालं न सम्बद्धः, तावद् भ्राता भगिन्यपि॥३१॥
यदातयोः रतिक्रीडा, परस्परं प्रजायते ।
तदा तयोश्च दाम्पत्य, लक्षणा चैव योग्यता॥३२॥
जायते नैव वैवाहः, अग्निदेवादिसाक्षिकः ।
वैवाहिकश्च कार्य्यं नो, तत्काले सर्वथा मतम् ॥३३॥
या व्यवहारमर्यादा, आद्यभगवता कृता ।
पक्वान्नभोजनादीनां, कुम्भादिशिल्प वस्तुनः॥३४॥
द्वासप्ततिः कलानाञ्च, राज्यपालनवस्तुनः ।
अविष्कारश्च सर्वेषामाद्यभगवता कृताः ॥३५॥
तदा युगलिकानाञ्च, अभूदाचारमन्दता ।
शनै शनैश्च मन्दत्वे, व्युच्छिन्नः सर्वदा ततः॥३६॥
व्यवहारस्य प्राधान्यमार्य्यावर्ते च संमतम् ।
वैवाहादिक कार्य्याणां, सर्वेषाञ्च तदादितः ॥३७॥
सहजन्ममृती चैव, धर्म्मो युगलिको नहि ।
अधुनाकेषु कुत्राऽपि, विवाहः कथ्यते कथम् ॥३८॥
यदा च सहजन्मादि, व्यवहारस्तदा नहि ।
व्यवहारो यदा जातः, सहजन्मादिर्नो तदा ॥३९॥

विवाह एक गोत्रीयः, भगिनीभ्रातृसदृशः ।
अतस्तत्र न कर्तव्यः, संसार सुखमिच्छता ॥४०॥
सदाचार प्रसिध्यर्थं, विवाहः संस्तौ मतः ।
अन्यथाऽसत्प्रचारेण, विनंक्ष्यन्ति परस्परम् ॥४१॥
एकगोत्रजवैवाहः, आर्य्याचारो न वै भवेत् ।
लोकविरुद्धदोषाद्याः, भवन्ति महतां सदा ॥४२॥
व्यवहारश्च धर्म्मेषु, आर्य्याणां मुख्यतो मतः ।
अधर्म्मोऽन्यायप्राधान्यः, म्लेच्छानां सः प्रदृश्यते॥४३॥
अतो विवाह कार्य्येषु, आर्य्यम्लेच्छेषु भिन्नता ।
एकगोत्रजवैवाहः, अधर्म्म मूलको मतः ॥४४॥
सुयोग्य स्त्री परिप्राप्ते, सुयोग्य सुत लाभता ।
सुयोग्यपुत्रलाभे च, धर्म्मध्यानेसहायता ॥४५॥
परिमितं धनञ्चैव, दीयते व्यवहारतः ।
स्वातन्त्र्यश्च गृहे देयं, न ह्ययोग्य स्वतन्त्रता॥४६॥
परस्त्री भगिनी तुल्या, मन्तव्या सर्वदा जनैः ।
एतच्चतुष्टयं कार्य्यं, स्त्री सदाचारपोषकम् ॥४७॥
एकाकिन्या न गन्तव्यं, निशि नैवातिजागृतिः ।
दूरतो वारिनानेयं, वासो मातृगृहे सदा ॥४८॥

रजकमालिदूतीनां, सहवासो दुःखप्रदः ।
यतः शीलस्य वैनाशः, त्यक्तव्यः सर्वथा मतः॥४६॥
प्रयोजनमनुद्दिश्य, स्वस्थानान्नैव गम्यताम् ।
कामलम्पटदासीनां, सहवासोऽपि हीयताम् ॥५०॥
विदेशगमने पत्यो, शृङ्गारो नहि सज्यताम् ।
सुयोग्यकुलमर्य्यादा, रक्षणीया सदा मता ॥५१॥
मर्मविद्वचनं चैव, कुचेष्टायां प्रधानता ।
उद्भटवेशहास्यादि, गीतं कौतुककारकम् ॥५२॥
विचित्ररङ्गरक्तानि, वस्त्राणि च सुपुष्पकम् ।
रात्रौ बहिर्गतिश्चैव, सर्वमेतत्परित्यजेत् ॥५३॥
कुलीनसधवास्त्रीणां विधवानां तथैव च ।
आचारा ये विरुध्धास्युः, कर्तव्या न कदाचन॥५४॥

पापभीरुस्वरुपं

हिंसाऽसत्यादत्तदानो ब्रह्मचण्डालकादीनाम्[1] ।
अभक्ष्य सुरामिषाणां, पापर्धित्वद्युतादीनाम्॥५५॥

---

१—तृष्णादीनाम्

पापसाधक वस्तूनां, त्यागः कार्य्यो विपश्चिता ।
सर्वदा सुखशीलेन, भाव्यश्च पाप भीरुणा॥५६॥
सात्विकश्च सदाऽऽचारः, प्रसिद्धदेशवासिभिः ।
परिवेशाशनादीनां, वस्त्रपात्रादिवस्तुनः ॥५७॥
वैवाहादिककार्य्याणां, संस्थितान्त सुजन्मनाम् ।
रक्षणीयश्च सर्वत्र, न कर्तव्या विरुद्धत ॥५८॥

## प्रसिद्धदेशाचारस्वरूपनिरूपणं

यस्मिन्देशे निवासः, स्यात्तद्देशवासिभिः सह ।
सुख दुःखादि कार्य्येषु, कर्तव्यतत्परो भव ॥५९॥
अन्यथाचारकर्तव्ये, मनुष्या मरुदेशिकाः ।
वराडप्रान्त भागस्था, सर्वथा तत्पृथग् भवाः ॥६०॥
वराड प्रान्तिकैर्ज्ञातं, लुण्टाका वञ्चका इमे ।
आगता धनलुण्टार्थं, नत्वस्मद्दुःख दुःखिनः॥६१॥
इति विचार्य्य सर्वैश्च, मीलित्वा धनलुण्टितम् ।
व्यवसायस्य यत्पत्रं, प्रज्वाल्य भस्मसा कृतम् ॥६२॥
तथैव वंगदेशादौ, ढाकाप्रान्तस्थितैर्जनैः ।
बहिष्कारः कृतस्सर्वैः मरुदेशप्रवासिनाम् ॥६३॥
सात्विके च सदाचारे, तद्देशे च निवासिनाम् ।

रजकमालिदूतीनां, सहवासो दुःखप्रदः ।
यतः शीलस्य वैनाशः, त्यक्तव्यः सर्वथा मतः॥४९॥
प्रयोजनमनुद्दिश्य, स्वस्थानान्नैव गम्यताम् ।
कामलम्पटदासीनां, सहवासोऽपि हीयताम् ॥५०॥
विदेशगमने पत्यो, शृङ्गारो नहि सज्यताम् ।
सुयोग्यकुलमर्य्यादा, रक्षणीया सदा मता ॥५१॥
मर्मविद्वचनं चैव, कुचेष्टायां प्रधानता ।
उद्भटवेशहास्यादि, गीतं कौतुककारकम् ॥५२॥
विचित्ररङ्गरक्तानि, वस्त्राणि च सुपुष्पकम् ।
रात्रौ बहिर्गतिश्चैव, सर्वमेतत्परित्यजेत् ॥५३॥
कुलीनसधवास्त्रीणां विधवानां तथैव च ।
आचारा ये विरुध्धास्युः, कर्तव्या न कदाचन॥५४॥

## पापभीरुस्वरुपं

हिंसाऽसत्यादत्तदानो ब्रह्मचण्डालकादीनाम्[१] ।
अभक्ष्य सुरामिषाणां, पापर्धित्वद्युतादीनाम्॥५५॥

१—तृष्णादीनाम्

पापसाधक वस्तूनां, त्यागः कार्य्यो विपश्चिता ।
सर्वदा सुखशीलेन, भाव्यश्च पाप भीरुणा॥५६॥
सात्विकश्च सदाऽऽचारः, प्रसिद्धदेशवासिभिः ।
परिवेशाशनादीनां, वस्त्रपात्रादिवस्तुनः ॥५७॥
वैवाहादिककार्य्याणां, संस्थितान्त सुजन्मनाम् ।
रक्षणीयश्च सर्वत्र, न कर्तव्या विरुद्धत ॥५८॥

## प्रसिद्धदेशाचारस्वरूपनिरूपणं

यस्मिन्देशे निवासः, स्यात्तद्देशवासिभिः सह ।
सुख दुःखादि कार्य्येषु, कर्तव्यतत्परो भव ॥५९॥
अन्यथाचारकर्तव्ये, मनुष्या मरुदेशिकाः ।
वराडप्रान्त भागस्था, सर्वथा तत्पृथग् भवाः ॥६०॥
वराड प्रान्तिकैर्ज्ञातं, लुण्टाका वञ्चका इमे ।
आगता धनलुण्टार्थं, नत्वस्मद् दुःख दुःखिनः॥६१॥
इति विचार्य्य सर्वैश्च, मीलित्वा धनलुण्टितम् ।
व्यवसायस्य यत्पत्रं, प्रज्वाल्य भस्मसा कृतम् ॥६२॥
तथैव वंगदेशादौ, ढाकाप्रान्तस्थितैर्जनैः ।
बहिष्कारः कृतस्सर्वैः मरुदेशप्रवासिनाम् ॥६३॥
सात्विके च सदाचारे, तद्देशे च निवासिनाम् ।

सहयोगः प्रदातव्यः, सर्वकार्य्येषु सर्वदा ॥६४॥
सुखित्वं करणेनैव, वासो कार्य्यो न चान्यथा ।
पालनीयस्सदाचारः, देशादौ वसता सता ॥६५॥

## अवर्णवादत्यागस्वरुपनिरूपणं

निन्दा केनाऽपि नो कार्य्या, यस्य कस्यापि जन्तुनः॥
निन्दकाः संसृतौ जाताः,निन्दायाः कारकाजनाः ६६
आत्मश्लाघा न कर्तव्या, नीचगोत्रप्रसूतिका ।
कोटिशो भवपर्य्यन्तं, दुर्मोचा संसृतौ मता ॥६७॥
परम्पराभवो यश्च, अपमानविधायकः ।
निन्दामूलक औपायः, कर्तव्यो न कदाचन ॥६८॥
राज्ञां तदाश्रितानाञ्च, निन्दा त्याज्या विशेषतः ।
प्राणानां वा धनानां वा, नाशः प्रत्यक्षतो मतः ॥६९॥
स्वप्राणधनरक्षार्थं, राजनिन्दा प्रहीयताम् ।
गृहस्थैश्च सदा त्याज्योऽवर्णवादश्च सर्वदा ॥७०॥

## स्थान कर्त्तव्य निरूपणं

स्वादुशीतजलं यत्र, यत्र दूर्वादि वस्तुनः ।
समुत्पत्तिश्च जायेत, गृहं कार्य्यं तु तत्र वै ॥७१॥

स्थानेऽतिव्यक्तरूपे वै, गृहकार्य्यं न शान्तिदम्।
चौरादि लम्पटादीनां, चोत्पातः सर्वदा भवेत् ॥७२॥
स्थानादावतिगुप्ते वै, गृहं न सुखशान्तिदम् ।
अग्निप्रकाशवायूनां, अभावे स्वाथ्य हीनता ॥७३॥
अनेकागमकं द्वारं, निर्गमद्वारनैककम् ।
तस्मिन्गृहेऽपि शान्तिर्न, मन्तव्या सुखमिच्छता॥७४॥
पारदारिकचौरौ च, विशतस्तत्र चान्यतः ।
अन्यतो गमनं तस्माद्, ह्युपद्रव प्रधानता ॥७५॥
अतस्तद्रूपिनो कार्य्यं, गृहश्च गृहमेधिना ।
परिमितद्वाररूपं, गृहं कार्य्यं सुखेच्छुभिः ॥७६॥
साधर्म्मिकसहावासः, गृहं कार्य्यश्च तत्र वै ।
पुत्रेषु धर्म्म प्राधान्यं, सहवासेन जायते ॥७७॥
कुप्रातिवेश्मिके योगे, धर्म्मनाशश्च सर्वथा ।
सदाचारस्य वै लोपः, दत्ता धर्म्मे तिलाञ्जलिः॥७८॥
देशान्तरप्रयाणेऽपि, तादृग्गृहनिवासिनाम् ।
स्वान्ते निरन्तरं चिन्ता, ततः स्वाथ्यं कुतो भवेत्॥७९॥

## सदाचारिसंगनिरूपणं

द्युतकृद् धूर्तजल्पानां,, दुराचारिप्रवादिनाम् ।

भिक्षुरजकभाण्डानां, मालिकुम्भकृतां तथा ॥८०॥
पापर्द्धिनीचजातीनां, मद्यमांसादिभोजिनाम् ।
पारदारिकचौराणां, अन्येषां तादृशामपि ॥८१॥
उपरि कथितानाञ्च, संगस्त्याज्यस्सुखेच्छभिः ।
कर्त्तव्यः सर्वदा संगः, धर्म्मिणां शुद्धचारिणाम्॥८२॥
नीचसङ्गप्रसङ्गेन, समागच्छति नीचताम् ।
समुद्रजलयोगेन, गंगायां क्षारता यथा ॥८३॥
कदापि नैव कर्त्तव्यः, सुश्राद्धैर्नीचसंगता ।
सर्वथा धर्म्मनाशः स्याद्भवन्ति दुर्गुणास्तथा ॥८४॥
कुसंगतिप्रसंगेन, नष्टः कुलवालु मुनिः ।
साध्वाचारपरिभ्रष्टः, नृजन्महारितं तथा ॥८५॥

## मातापितृसेवास्वरूपनिरूपणं

त्रिसंध्यं जनको वन्द्यः, गृहकार्य्येषु पृच्छनम् ।
परत्र हितकार्य्येषु, कर्त्तव्येषु च प्रेरणम् ॥८६॥
भोगादि सर्ववस्तूनां, तयोः प्रदानता मता ।
तत्राऽपि मातृभक्तिस्तु, कर्त्तव्या चाधिका मता॥८७॥
उपाध्यायाद्दशाचार्य्य, आचार्य्याणां शतं पिता ।
सहस्त्रं तु पितुर्माता, गौरवेणातिरिच्यते ॥८८॥

स्तन्यपानकपर्य्यन्तं, पशूनां मातृता मता।
पश्चान्मातुः पतिस्सस्यात्तादृशी पशुरूपता ॥८९॥
दाराणां लाभपर्य्यन्तं, मातृभक्तिषु तत्पराः।
ते नराः अधमाः ज्ञेयाः, सत्प्रवृत्तिर्बहिर्मुखाः ॥९०॥
दारेषु चागतेष्वेव, मातृभक्तिः प्रलीयते।
सावकाशो वदत्येवं, शृणोतु पति देवता ॥९१॥
श्वश्रुननान्द जेष्ठिन्यः, गालिं ददति प्रत्यहम्।
निरन्तरमतिक्लेशं कुर्वन्ति सोद्यमाश्चताः ॥९२॥
किञ्चिदपि न शृण्वन्ति, भवन्तस्तु वचो मम।
किं मया वद कर्तव्यं, गच्छामि स्थानके क्वच ॥९३॥
एवमुक्त्वा प्रकुर्वन्ति, उरः कुट्टनता क्रियाम्।
भजन्ति नाटकं तादृक्, स्वचरितानुसारतः ॥९४॥
उद्विग्न स्वान्तभावेन, जाता व्याकुलता हृदि।
किं कर्तव्ये च वै मूढः, पत्नी गुरुं करोति सः ॥९५॥
सा वदति मया त्यक्तं, यथा मातृगृहं सदा।
तथा त्वया सदा त्याज्यं, मातृगृहं नु सर्वथा॥९६॥
वस्त्राणां धावनं चैव, अशुचिक्षालनादिकम्।
रोगाणां परिचर्य्या च जनन्या प्रेमतः कृता ॥९७॥

सेवा करणप्रासंग, आगतस्तस्य नृपशोः ।
तदा स्त्रीसन्मुखी भूत्वा, त्यक्ता माता च सर्वदा॥६८॥
तादृशाकार्य्यकर्तारः, ज्ञेयास्तेप्यधमा नराः ।
त्यक्त्वा मात्रुपकारं वै, स्वच्छन्दवर्तिनः सदा ॥६६॥
दातव्या कोपमा तेषां, नराणां किल कथ्यताम् ।
यावज्जीवं चोपकृतिः, स्थावरा विस्मरन्तिनो ॥१००॥
प्रथमवयसि पीतं तोयमल्पं स्मरन्तः,
शिरसि निहित भारा नालिकेरा नराणाम् ।
उदकममृतकल्पं ते ददुर्जीवितान्तम्,
नहि कृतमुपकारं, साधवो विस्मरन्ति ॥१०१॥
प्रस्थाय स्त्री मतिं स्वान्ते, त्यजन्ति ये च मातरम्।
तेषामधम जीवानां, का गति भाविनी वद ॥१०२॥
गृह कार्य्यं प्रकुर्वन्तीं, मन्तारो ये च मातरम् ।
मध्यमास्तेऽपि बोधव्या, मातृभक्तिं प्रकुर्वता ॥१०३॥
सद्विचारप्रसङ्गे च, ते स्वार्थसाधका जनाः ।
वार्तालापेषु मध्ये च, वदन्ति तच्छणोतु वै ॥१०४॥
षष्टिवत्सरसंप्राप्ते, पितृणां धीः प्रणश्यति ।
नाऽऽदेया सम्मतिस्तेषां, वदन्ति तादृशं जनाः॥१०५॥

हेलयन्ति च सर्वत्र, तेषां भक्तिश्च दूरतः ।
वुध्येक कारणं स्वस्मिन्, मन्यन्ते मूढ़बुद्धयः ॥१०६॥
तेऽपि नरा न वै श्लाध्याः, मन्तव्याः सज्जनैर्हृदि ।
उत्तमा भाविनी शिक्षा, ग्राह्या च ज्ञानिभिः सह॥१०७॥
सेवां भक्त्या च कुर्वन्ति, मातृपित्रोश्च सर्वदा ।
सर्वसंसारिकार्य्येषु, तदाज्ञां पालयन्तिये ॥१०८॥
पूर्वं कारयतां पित्रोः, पश्चात्कुर्वन्ति भोजनम् ।
तेषां सुखेन सौभाग्यं, सदा मनसि मन्यते ॥१०९॥
त्रैकालिकनमस्कारं, कुर्वन्ति भक्ति भावतः ।
न तु मनसि संकोचः, क्रियत उत्तमैर्जनैः ॥११०॥
विश्रान्तिर्गृहकार्य्येभ्यः, दातव्या सर्वथा सुतैः ।
धार्म्मिकसर्वकार्य्येषु, कर्तव्या प्रेरणा मता ॥१११॥
येन केन प्रकारेण, श्रद्धामूलकसद्गुणम् ।
तदा मे सफलं जन्म, पितृभिर्यदि प्राप्यते ॥११२॥
इति भावनया तेषां, समायपौषधादिकम् ।
गत्वा गुरु समीपे तु, कारयितव्यता मता ॥११३॥
येन योगेन बुध्यन्ते, तस्य योगस्य वर्णनम् ।
चतुर्णामनुयोगानां, कर्तव्यं गुरुभिः सदा ॥११४॥

प्रत्युपकारतां तस्य, वालयन्ति सुपुत्रकाः ।
ते पुत्रा उत्तमा ज्ञेया, श्लाध्याः जगति ते मताः॥११५॥
पितरोऽपि सुतान् सर्वान्, धर्म्मे प्रेरयन्ति वै ।
अधर्म्मात्पाति यस्त्वेवं, सः पितेति निगद्यते॥११६॥
संतानोत्पत्ति कर्तव्ये, पितृत्वं नैव कथ्यते ।
तत्र विषयप्राधान्यं, अस्ति वेदोदये तथा ॥११७॥
धर्म्मस्य पुष्ठिदा माता, अधर्म्माद्रक्षणात्पिता ।
कुर्वतः स्वस्वकार्य्यं वै, तावेव पितरौ तदा ॥११८॥
पूर्वोक्तगुणयुक्तेषु, मातृपितृषु सर्वदा ।
भक्तिभावश्च कर्तव्यः, पुत्रैश्च सुखमिच्छुभिः॥११९॥

## गृहत्यागनिरूपणं

स्वचक्र परचक्रादिः, दुर्भिक्षप्लेगमारयः ।
स्वीय निर्वाहताऽभावः, लोकविरोधता तथा॥१२०॥
इत्युपद्रवयुक्तस्य, स्थानस्य सेवनं दुखम् ।
अतस्तत्परिहर्तव्यं, स्थानं स्थान सुखेच्छया ॥१२१॥

## निन्द्यकर्मत्यागनिरूपणं

निन्द्यं कर्म्मत्रिधा प्रोक्तं, देशजातिकुलैरपि ।
गौर्जरैर्मद्यमांसादि, ब्राह्मणे मद्यविक्रयः ॥१२२॥

रात्रि भोजनता जैने, निन्द्यं कर्म्म निगद्यते ।
प्रवृत्तिर्गर्हिते कार्य्ये, नैव कार्य्या कदाचन ॥१२३॥
तिललवणवाणिज्यं, ब्राह्मणेषु निगद्यते ।
असत्यवादिता जैने, निन्दनीया मता तथा ॥१२४॥

## वित्तानुसारिव्ययनिरूपणं

ऊनाधिको न वै कुर्य्यात्, लाभानुसारि सव्ययः ।
न्यूने कृपणता दोषः, अधिकेषु स्याद् दरिद्रता॥१२५॥
समयोचितरीत्याच कुटुम्बपरिपोषणम् ।
धार्म्मिककार्य्यकर्त्तव्ये, विवाहादौ तथैव च ॥१२६॥
अतिथिभक्तिकर्तव्ये, सा धार्म्मिके तथैव च ।
एवंरीत्या च सर्वत्र, योग्यव्ययो विधीयते ॥१२७॥
पादमायान्निधिंकुर्य्यात्, पादं वित्ताय योजयेत् ।
धर्म्मोपभोगयोःपादं, पादं भर्तव्य-पोषणे ॥१२८॥
आयादर्धं नियुञ्जीत, धर्म्मे समधिकं ततः ।
कुर्य्याच्छेषेण शेषञ्च, यत्नतः तुच्छमैहिकम् ॥१२९॥
धर्म्ममार्गेऽधिकं तस्माद्व्ययं कुर्वन्तु सज्जनाः ।
पुण्याल्लक्ष्मीःप्रजायेत, लक्ष्म्याः दानफलं मतम्॥१३०॥
परोपकारकार्य्येषु सद्व्ययः क्रियते सदा ।

धर्म्मस्वजातिदेशादौ, पुण्ये च तारतम्यकम्॥१३१॥
मोक्षफलं सुपात्रादौ दीने पुण्यफलं स्मृतम् ।
सप्तक्षेत्रं सुपात्रं च आदितोऽभयदानकम् ॥१३२॥
सज्जना ये न कुर्व्वन्ति, आयानुकूल सव्ययम् ।
कृतघ्नास्ते च बोधव्या, धर्म्मेषु द्रोहता मता॥१३३॥
पुण्याद्विभवसंप्राप्तिः, फलं पुण्यस्य भक्षितम् ।
क्षीणेपुण्ये च दारिद्र्यं, दारिद्राद्धर्म्मनाशन॥१३४॥
प्रातःकालं समुत्थाय, नाम गृह्णन्ति नो जनाः ।
न नाम श्रेष्टिशब्देन, पुत्कुर्वन्ति जनास्तथा॥१३५॥
पितामहार्जिता लक्ष्मी, पितृष्वसा न भुज्यते ।
पित्रुपार्जितलक्ष्मी सा, जाता च भगिनी समा॥१३६॥
स्वयमुपार्जिता लक्ष्मी स्वपुत्री भुज्यते कथम् ।
अतः सव्ययता श्रेष्टा, वित्तस्य गृहमेघिना ॥१३७॥
अष्टादश तु दोषा वै, लगन्ति च धनार्जने ।
आत्मवस्त्रमलीनं च, भवति पाप योगतः ॥१३८॥
मलीनः पुरुषो[1] जातः, क्षाल्यते व्ययनीरतः ।
अन्यथा पापिनाऽनेन, भुज्यते कुगतौ दुःखम्॥१३९॥

---

१—आत्मा ।

संमील्य भुज्यते सर्वैः, धनं सर्वमुपार्जितम् ।
दुर्गतौ तेन नो कोऽपि, पापभोगाय गच्छति ॥१४०॥

## वित्तानुसारिवेषस्वरूपनिरूपणं

वित्तानुसारतो वेषं, विधातव्यश्च सर्वदा ।
सहस्रपतिना वेषः, कोटिशस्य घृतो यदि ॥१४१॥
तदा जगति निन्दास्यादुद्भटवेषकारणात् ।
दरिद्रोऽयं कथं चेमं, वेषं परिदधाति सः ॥१४२॥
गृहे किमपि नास्त्येव चोरितं कश्च कस्यचित् ।
अन्यथा तादृशो वेषो, कथञ्च परिधीयते ॥१४३॥
सहस्राधिपतेर्वेषं, कोटिशश्च दधाति नु ।
तदा जगति कार्पण्य, प्रसिद्धिस्तस्य जायते ॥१४४॥
अतोवित्तानुसारेण, सद्वेषः परिधार्य्यते ।
श्लाघनीयस्स सर्वत्र, ज्ञातव्यः सुखमिच्छता॥१४५॥

## बुध्यष्टगुण स्वरूपनिरूपणं

धर्म्मश्रवणकार्य्येषु बुध्यष्टगुणकारणम् ।
तेषां गुणविहीनाना, मधिकारश्च नो भवेत्॥१४६॥
धीमना च यथा केन, रामायणं निगद्यते ।
ग्राम्यजनस्यसाम्मुख्ये, सीताख्यानं समागतम्॥१४७॥

सीता हरणता प्रोक्ता, विदुषा तत्र संसदि ।
पश्चाद्ग्राम्य जनैःपृष्टं सीताजनं भवेत् कदा॥१४८॥
तैर्ज्ञाता हरिणी सीता, हरिण शब्द जल्पनाद् ।
मानुषी भाविनी नैव, शंकाशंकु महान् हृदि॥१४९॥
निर्बुद्धिक मनुष्याणां, समीपे किं कथानकम् ।
बुध्यष्टकगुणानाञ्च, अभ्यासः क्रियतां दृढम्॥१५०॥
सुश्रूषा श्रवणश्चैव, ग्रहणं धारणं तथा ।
उहापोहोऽर्थविज्ञानं, तत्वज्ञानञ्च धीगुणाः ॥१५१॥
"सुश्रूषा" श्रोतुमिच्छा वै, "श्रवण" शब्द संश्रुतिः।
शास्त्रार्थस्य दृढीकारः, "ग्रहणं" कथ्यते बुधैः ॥१५२॥
गृहीतार्थस्य संस्कारः, "धारणा" सा उदाहृता ।
ज्ञात्वार्थतं समालम्ब्य, अन्यस्मिन्सद्विचारणा ॥१५३॥
व्याप्त्यनुग्राहकैस्तर्कैः, "ऊहा" सा क्रियते तदा ।
यथा धूमं नगे दृष्ट्वा, धूमाग्नि सहचारिताम् ॥१५४॥
तर्कैर्महानसस्थानं, स्मृत्वा व्याप्तिर्वितन्यन्ते ।
नगाग्न्य-मितिश्चैव, सै "वोहा" वै निरूपिता॥१५५॥

२—कोटीश्वराणां वेषो रंकेन यदि ध्रियते

युक्त्यनुभववैरुध्यं, अनर्थस्य च कारणम् ।
तादृक्कार्यान्निवृत्तिस्तु,"अपोहः"परिकीर्तितः॥१५६॥
सामान्य ज्ञानमूहा सा, अपोहस्तद् विशेषकम् ।
तर्कविशेषद्वारा च, समारोपविवर्जितः ॥१५७॥
वस्तुधर्म्मस्य विज्ञानमर्थज्ञानमुदाहृतम् ।
अमुकवस्तुनो रूपमिदमेवाऽन्यथा नहि ॥१५८॥
रूपस्य निश्चयं तादृक्, तत्वज्ञानं निगद्यते ।
प्रत्यहं धर्म्मसंश्रावात्[1], समागच्छति ते गुणाः॥१५९॥
बुद्धिगुणैश्च पूर्वोक्तैः, निर्म्मला यस्य शेमुषी ।
अकल्याणस्य भागी स, भवेन्नैव कदाचन ॥१६०॥
क्लान्तमपोज्झतिखेदं, तप्तं निर्वाति बुध्यते मूढम्।
स्थिरतामेतिव्याकुलमुपयुक्तसुभाषितं चेतः॥१६१॥
किं हारैः किमु कंकणैः किमसमैः कर्णावतंसैरलम् ।
केयूरैर्मणिकुण्डलै रलमलं साडम्बरैरम्बरैः ।
पुंसामेकमखण्डितं पुनरिदं मन्यामहे मण्डनम् ।
यन्निष्पीडितपार्बणामृतकरस्यन्दोपमासुक्तयः॥१६२॥

---

१—श्रवणाद्

## भोजनकार्यस्वरूपनिरूपणं

अजीर्णे भोजनत्यागी, सर्वदा स सुखी भवेत् ।
अजीर्ण भोजिनां नैव, शरीरे स्वस्थता खलु ॥१६३॥
धर्म्मसाधनता देहे, धर्म्मार्थिभिर्मता सदा ।
पापिनां पाप हेतुश्च, रोगिणां क्लेश साधनम् ॥१६४॥
दुःखहेतुश्च रंकानां, भोगिनां भोगसाधनम् ।
कर्म्मादान निमित्तं तु, यन्त्रपीलनकारिणाम् ॥१६५॥

## अजीर्ण स्वरूप निरूपणं

व्यवहारानुसारेण, शरीरं धर्मसाधनम् ।
इति स्वीकृत्य मन्तव्यमजीर्णे भोजनं त्यजेत् ॥१६६॥
अजीर्णप्रभवाः रोगाः, धातुक्षयादजीर्णकम् ।
धातुक्षयस्य रक्षार्थं, ब्रह्मचर्य्यञ्च पालयेत् ॥१६७॥
परिपाको यदान्नस्य, सम्पूर्णे विग्रहे तदा ।
अजीर्णस्य भयं नैव, मन्तव्यं हृदये सदा ॥१६८॥
स्वादु मिष्टान्नकं दृष्ट्वा भुञ्जते तृष्णयाऽधिकम् ।
नाशयन्ति शरीरं ते, अजीर्णं प्रार्थयन्ति वै ॥१६९॥
मलवातयोर्विगन्धो, विड्भेदो गात्र गौरव मरुच्यम् ।
अविशुद्धश्चोद्गारः, षडजीर्ण व्यक्तलिङ्गानि ॥१७०॥

अजीर्णलक्षणे ज्ञाते तत्कालं भोजनं त्यजेत् ।
शरीरजं विकारञ्च, जठराऽग्निस्तु शामयेत् ॥१७१॥
पाक्षिक उपवासो वै, धर्म्मशास्त्र उदाहृतः ।
स्वास्थ्यार्थं यदि कर्तव्यः, तदापि विग्रहे सुखम्॥१७२॥
वैद्यैरजीर्णरक्षार्थमायुर्वेदे विरेचनम्
अमुत्र परलोकेषु, अहितार्थं विरेचनम् ॥१७३॥
उभयलोकसौख्याय, उपवासो निरूपितः ।
उपवासो ह्यतःकार्य्यः, यतोऽजीर्णस्य रक्षणम्॥१७४॥
विरेचने शरीरादौ, जायते परिवर्तनम् ।
क्वचिद्वायुप्रकोपःस्यात्, नाड़ीचशिथिलाभवेत्॥१७५।
पक्षभक्षितचान्नानामुपवासे प्रपक्वता । ।
मनो निर्म्मलतामेति, भगवद्भजने रुचिः ॥१७६॥
अनालस्यमवैकारः, शरीरे स्वस्थता सदा ।
उपवासोऽप्यतःश्रेष्टः, न तु विरेचनं कदा ॥१७७॥
किञ्चिन्न्यूनोदरं कार्यं, प्रचारार्थं नभस्वताम् ।
क्षुधागर्तप्रपूराय, कल्प्यं षड् भागकं मतम् ॥१७८॥
आहारेण त्रिभागं तु, द्विभागं भ्रियते जलैः ।
तन्नियमाऽनुसारेण, दुःखं नो वर्तने भवेत् ॥१७९॥

प्रकृतेरानुकूल्येन, नियतकाल भोजनम् ।
तत्साम्यमिति गीयेत, स्वास्थ्यं सर्वत्र रक्षता ॥१८०॥
पानाहारादयो यस्याऽविरुद्धाः प्रकृतेरपि ।
सुखित्वायावकल्प्यन्ते, तत्साम्यमिति गीयते ॥१८१॥
पितुर्मातुः शिशूनाञ्च, गर्भिणीवृद्धरोगिणाम् ।
प्रथमं भोजनं दत्वा, स्वयं भोक्तव्यमुत्तमैः ॥१८२॥

## त्रिवर्ग निरुपणं

अन्योऽन्या प्रतिबन्धेन, त्रिवर्गमपि साधयेत् ।
धर्म्मार्थकामनानाञ्च, समूहश्चत्रिवर्गकः ॥१८४॥
त्रिवर्गसाधनं सम्यक्, गृहस्थानां प्रचोदिम् ।
त्रिवर्गं विफलं यस्य, तस्य जन्मनिरर्थकम् ॥१८४॥
धर्म्मार्थयोर्विनाशेन, केवलं कामसेवनात् ।
विपत्तेर्भाजनं सम्यक्, भवेयुस्ते नराः सदा ॥१८५॥
धर्म्मकामविनाशेन, केवलं वसु प्रार्जनात् ।
सिंहवत् पापभागीस्यादुपभोगो न वै भवेत् ॥१८६॥
अर्थकाम विनाशेन, केवलं धर्म्म सेवनम् ।
तत्कर्तव्यं मुनीनांस्याद्,गृहस्थानां न युज्यते॥१८७॥

धर्म्मार्थौं परिषेऽप्येते, यदा कामविनाशतः ।
गृहिणामधिकारे तु, गृहस्थाऽभावता भवेत् ॥१८८॥
अतः परस्पराबाधः, यत्र स्यात्करणं हि तत् ।
अन्यथा करणे तत्र, दोषापत्तिर्भवेत् सदा ॥१८९॥
नाशौ वैस्त्रीधनादीनां, कदाचिद्दैवयोगतः ।
धर्म्मरक्षा तदा कार्य्या, धर्म्मः सर्वस्व कारणम्॥१९०॥
स्वान्ते धर्म्मधनं यस्य, तस्य सर्वं समागतम् ।
हृदि धर्म्मधनं नास्ति, तस्य सर्वं निरर्थकम् ॥१९१॥
त्रिवर्गसाधनं सम्यक्, गृहस्थानां सुसंमतम् ।
मोक्षश्चैव मुमूक्षूणामन्येषां न कदाचन ॥१९२॥
यथायोग्याऽतिथौ साधौ, दीनेषु प्रतिपत्तिकृत् ।
धर्म्मे योग्यः स बोधव्यः, अन्ये तु नामधारिणः॥१९३॥

## अतिथि स्वरूपं

तिथि पर्वादिकं सर्वं, त्यक्तं येन महात्मना ।
अतिथिं तं विजानीयादन्यमभ्यागतं विदुः ॥१९४॥

## साधु स्वरूपं

महाव्रतधरा धीराः, भिक्षामात्रोपजीविनः ।
सामयिकस्थ धर्म्मोपदेशका गुरवोमताः ॥१९५॥

महाव्रत धरा ये च, पञ्चाचारस्य पालकाः ।
पञ्चेन्द्रियविजेतारः, प्रवचनाष्टता युताः ॥१९६॥
समभावसमालीनाः, सर्वसम्पत्तिकारकाः ।
स्वपरदर्शने विज्ञाः, साधवस्ते उदाहृताः ॥१९७॥

## दीनस्वरूपं

धर्म्मार्थकाममोक्षाणां, येषामेको न विद्यते ।
प्राप्तं सर्वक्षयं येषां, ते दीनाः परिकीर्तिता ॥१९८॥
अतिथावतिथेबुध्या, साधुबुध्या च साधुषु ।
दीने कारुण्यबुध्या च, भक्तिः कार्या तथैव च॥१९९॥

## औचित्यस्वरूपं

औचित्यमेकमेकत्र, गुणानां कोटिरेकतः ।
विषायते गुणग्रामः, औचित्य परिवर्जितः ॥२००॥

## अतिथिसाधुदीनदानस्वरूपं

दीनेऽनुकम्पयबुध्या च, दातव्ये नहि दोषता ।
अन्यथा करणाऽभावे, सम्यक्त्वं ज्ञायते कथम्॥२०१॥
येषां स्वान्ते दया नास्ति, ते पाषाणसमा मता ।
दयाहीनमनुष्येषु, जैनत्वं न निगद्यते ॥२०२॥

वीतराग समीपे च, पूर्वं नैवेद्यढौकनम् ।
पश्चादागत साधूनां, कार्य्यञ्च प्रतिलाभनम् ॥२०३॥
ततः साधर्म्मिकानाञ्च, कार्य्यते चैव भोजनम् ।
दीनेभ्यश्च ततोदत्वा, भुज्यते श्रावकैः स्वयम्॥२०४॥
आग्रह परिहारेण, सरलाशयसंयुताः ।
सद्युक्तीनां ग्रहीतारः, धर्म्म योग्याश्चतेमताः॥२०५॥
आग्रहिणो मतिर्यत्र, तत्रयुक्तिं नयन्ति ते ।
यत्र चानाग्रहायुक्तिः, मतिं तत्र नयन्ति ते ॥२०६॥
अभिनिवेश प्राधान्यमाग्रहि हृदये सदा ।
अनाग्रहि मनुष्याणां, प्रमाणमागमं मतम् ॥२०७॥
सौजन्योदार्य्यदाक्षिण्य, स्थिरताप्रियभाषकाः ।
परोपकारकारित्वं, ग्रहणार्हा गुणा मताः ॥२०८॥
येषां तेष्वनुरागश्च, तत्रैव पक्षपातता ।
ते मता धर्म्मयोग्याश्च, ये गुणपक्षपातिनः ॥२०९॥
निर्गुणश्च गुणद्वेषी, भवति गुणरागिषु ।
आगच्छन्ति गुणा नैव, गुणद्वेषिणि सर्वथा ॥२१०॥
आगच्छन्ति सदा ते च, गुणरागिषु सद्गुणाः ।
भवन्ति गुणिनो तेऽपि, निपाने दद्रका यथा ॥२११॥

## निषिद्धगमनत्यागस्वरुपं

निषिद्धदेशगंतव्ये, लाभश्च धनप्रापणम् ।
प्रचुरगुण-नाशःस्यात्,स्थित्वेकान्ते विचार्य्यताम्॥२१२

हृन्निष्ठुर धर्म्महानि, निर्दयता प्रवर्द्धनम् ।
असभ्य व्यवहाराणां, दुर्गुणानां प्रवेशनम् ॥२१३॥

अनादिकालभावेन, जीवो विषयतां व्रजेत् ।
आर्य्यदेशं परित्यज्य, अनार्य्य गमने तथा ॥२१४॥

धार्म्मिक सहवासो न, अर्वाग् दर्शिसमागमात् ।
मांसाशि सहवासेन, के के दोषा भवन्ति नो ॥२१५॥

यादृशः सहवासस्तादृशा दोषा गुणा अपि ।
काठिन्यं गुणप्रावेशे, दोषाः शीघ्रं विशन्तिवै॥२१६॥

विदेशगमने काले, उत्साहो मानसे बहु ।
ददाति याश्च शिक्षां यस्तां सर्वां सोऽपि मन्यते॥२१७॥

विदेशीय जलं पीत्वा, विदेशिसहवासतः ।
पश्चात्सर्वां च तां शिक्षां, हृदो निष्कासयेत्खलु॥२१८

गुणविपाकता येषां, जाता संपर्कतः हृदि ।
ते स्वदेशविदेशेषु, सर्वत्र समदर्शिनः ॥२१९॥

सर्वथा हृदये येषां, नास्ति गुणविपाकता ।
असत्संगतियोगे च, पतन्ति नाऽत्र संशयः ॥२२०॥
गंगाजलं महात्स्वादु, यदा सिंधौ[1] प्रगच्छति ।
तदा तज्जलयोगेन, गंगात्वं त्यज्यते सदा ॥२२१॥
अपूर्णोत्साहजीवस्य, विचारो नश्वरः सदा ।
धर्म्मभावोऽपि हारिद्ररागसदृक् सुमन्यताम् ॥२२२॥
मंजिष्ठारागसादृश्यं, पूर्णानां धर्म्मवासना ।
पूर्णानां देशवैदेशे, दोषः कुत्र न विद्यते ॥२२३॥
अतो निषिद्धदेशेषु, अपूर्णैं गम्यते नहि ।
गमने तेषु आर्य्यत्वं, कदापि नैव तिष्ठति ॥२२४॥

निषिद्धकालगमनत्यागस्वरूपं

निषिद्धकालगन्तव्यं, कर्तव्यं न कदाचन ।
रात्रिकाले च साधूनां, यथा च ब्रह्मचारिणाम् ॥२२५
तीर्थयात्रा चतुर्मासे, निषिद्धा दोषभावतः ।
तत्र यात्रार्थप्रस्थाने, दोषा हिंसादयस्तथा ॥२२६॥
उपद्रवाश्च चौराणां, जायन्ते बहुलास्ततः ।
विराधनाषा कायानां, संभवेत् प्रचुरातदा॥२२७॥

[1]—समुद्रे

साधुवन्दनकार्य्याय, गच्छन्ति साधुमार्गिणः ।
चातुर्मासेऽपिगन्तव्ये,दोषाम्पश्यन्ति नो जडाः ॥२२८॥
वन्दनार्थं सहस्रशः, आगतानां तदैव तैः ।
भोजनार्थं महाचुल्लीः, कृत्वा पापं विधीयते ॥२२९॥
असंख्यत्रसजीवानां, निधर्मने विनाशता ।
षण्णां जीवनिकायानां,प्रबलास्याद्विराधना ॥२३०॥
निषेधयन्ति पूजां ते, न वन्दनामिति चिन्त्यताम् ।
स्वपूजाकांक्षिणस्ते च, ईशपूजा निषेधकाः ॥२३१॥
स्वपूजार्थं महत्पापकारकानाञ्च कागतिः ।
भविष्यतीति तन्मन्ये,शुभा तु नहि कर्हिञ्चित् ॥२३२॥
अतो दया निधीमांवै, वन्दना किमु युज्यते ।
चातुर्मासे तु नैषेध, आगमने वितन्यताम् ॥२३३॥

## बलाबलविचरनिरूपणं

शारीरं मानसञ्चैव, स्वपरेषां बलाबलम् ।
धनसम्पत्तिवाणिज्यमनुष्यसाधनादिकम् ॥२३४॥
संपकुसंपभावादि दर्शनीयश्च सर्वदा ।
पश्चात्तुकार्य्यं कर्तव्ये, मन्यते धर्म्मयोग्यता ॥२३५॥

शरीरबलहीनानां, बलवता सह योधने ।
सर्वसम्पत्तिहानिः स्याल्लाभश्च सर्वथा नहि ॥२३६॥
बलहीनोऽपि व्यायामं, कर्त्तुं समुद्यमीयते ।
अतिश्रम प्रभावेन, बलंनश्यति पूर्वजम् ॥२३७॥
बलवतश्च व्यायामे, पुष्टिर्जायेत विग्रहे ।
अतोऽनेक क्रियाणाञ्च, करणे कुशलो भवेत् ॥२३८॥
सर्वं बलवतां पथ्यं, चावलस्य न किञ्चन ।
समरेषु च सर्वत्र, बलबुध्युपयोगिता ॥२३९॥
कर्म्मणा सह संग्रामे, बलं प्रधानकारणम् ।
बलभावेन संसारी, जायते परमार्थतः ॥ २४०॥
यदा शमदमध्यानैश्चात्मनि स्याद्बलिष्ठता ।
दुर्बलप्राणिनां कर्म्मसंग्रामे स्थानकं नहि ॥२४१॥
यदा मोहस्य प्राबल्यात्, कर्म्मणां च बलिष्ठता ।
तदा तैस्सह संग्रामे, आत्मनो विजयो नहि ॥२४२॥
तथा संसारि संग्रामे, एकत्र सैनिकं बलम् ।
अन्यत्र स्वल्पकं सैन्यं, तद्बलं तत्र हार्य्यते ॥२४३॥
अतो बलाबलं ज्ञात्वा, कर्त्तव्यं सर्वथा मतम् ।
तादृश कार्य्यकर्त्ताः, धर्म्मयोग्या उदाहृताः ॥२४४॥

## व्रतस्थस्वरूपनिरूपणं

अनाचारस्य हातारः, शुद्धाचारस्य पालकाः ।
व्रतस्थास्ते च बोधव्या, इतरे नाम धारिणः॥२४५॥

## ज्ञानवृद्धस्वरूपनिरूपणं

हेयोपादेयवस्तूनां, निश्चयो येन जायते ।
सम्यग्ज्ञानञ्च तज्ज्ञेयं, परं मिथ्यामतं सदा॥२४६॥
ताभ्यां वृद्धाः व्रते ज्ञाने, तद् वृद्धानाञ्च पूजकाः ।
व्रतस्थज्ञानवृद्धानां पूजकाः कथ्यंते जनैः ॥२४७॥
ज्ञानवृद्धस्य सेवायां ज्ञायते वस्तुरूपकम् ।
व्रतवृद्धस्य भक्त्या वै,जायते च व्रतोदयम् ॥२४८॥
अनयोर्भावतस्सेवा,—कर्तव्ये सफलं जनुः ।
अत्र परत्र जायेत धर्म्मयोग्यस्ततो भवेत् ॥२४९॥

## पोष्यपोषकव्यवहारस्वरूपं

मातृपितृकलत्राणां, भ्रातृपुत्रकयोस्तथा ।
पोष्यपोषकभावत्वं, क्रियते व्यवहारतः ॥२५०॥
अप्राप्यवस्तुदानेन, प्राप्यानाञ्च सुरक्षणात् ।
पोषकत्वञ्च पोष्याणां,धर्म्मयोग्यत्वकांक्षिभिः॥२५१॥

## दीर्घदर्शित्वनिरूपणं

अर्थानर्थविवेकित्वं, पूर्वापरविचारकृत् ।
विज्ञेयं दीर्घदर्शित्वं, सर्वत्रकुशलो भवेत् ॥२५२॥
सहसा कार्य्यकर्त्तव्ये, आपत्तिः प्राप्यते सदा ।
विमृश्य कार्य्यकर्त्तॄणां,संपच्च वृणुते सदा ॥२५३॥
सहसा विदधीत न,क्रियामविवेकः परमापदां पदम् ।
वृणुते हि विमृश्यकारिणं,गुण लुब्धाःस्वयमेवसम्पदः ।
विचारकारिणी शक्तिः, भूतभविष्यकालिकी ।
दीर्घदर्शिमनुष्येषु, विद्यते सुखहेतुका ॥२५५॥
गुणदोषस्वरूपौ तौ, पदार्थौ परिचिन्तयेत् ।
पश्चात्कार्य्यकर्तव्ये, दोषापत्तिर्न किञ्चन ॥२५६॥
दीर्घदर्शिगुणप्राप्तिः, विना पुण्यं न जायते ।
सुप्राप्तः स गुणो येन, मन्तव्यो धर्म्मयोग्यकः ॥२५७॥

## अकृत्यत्यागनिरूपणं

कृत्याकृत्यादि तत्त्वानां, पेयापेयादि वस्तुनः ।
जीवाजीवादि भावानां,गम्यागम्यादि कस्य वै ॥२५८॥
स्वकीय परकीयानां, भक्ष्याभक्ष्यादि वस्तुनः ।
स्वरूपं येन बोध्येत, विशेषज्ञत्वमुच्यते ॥२५९॥

यस्य तेषां न विज्ञानमकार्य्ये स प्रवर्तते ।
अकृत्यानाञ्च कारित्वे, प्रपतति स दुर्गतौ ॥२६०॥

विशेषज्ञस्वरूप

आत्मनो गुणदोषौ च, जानाति स विशेषवित् ।
ज्ञात्वा गुणे प्रवर्तेत, दोषांश्च प्रतिक्रामति ॥२६१॥
स्व प्रवृत्तित्व विज्ञाने, शक्तिर्येषां न विद्यते ।
पशुसमाश्च ते ज्ञेयाः, शृङ्गपुच्छविहीनकाः ॥२६२॥
इहोपपत्तिर्ममकेन कर्म्मणा,
कुतः प्रयातव्यमितो भवादिति ।
विचारणायस्य न जायते हृदि,
कथं स धर्म्मप्रवणो भविष्यति ॥२६३॥
जानन्ति चोपकारं ये, विस्मरन्ति कदापि न ।
सन्तस्ते विरला ज्ञेया, धर्म्मयोग्याश्च ते मताः॥२६४॥

कृतघ्नस्वरूप

उपकारं न जानन्ति, प्रत्युत विघ्नकारिणः ।
स्वार्थसाधकसम्पूर्णाः, कृतघ्नाः परिकीर्तिता ॥२६५॥
कृतघ्ने च कृतज्ञे च, भेदस्तु जघयोः सदा ।
जकारः स्वर्ग हेतुस्स्यात, घकारः स्वभ्रदो मतः ॥२६६॥

जकारश्च वहेन्नित्यं, महासत्त्वो युधिष्ठिरः।
दुर्योधनो घकारश्च, धृत्वा नरकभागभूत ॥२६७॥

## लोकवल्लभस्वरूपनिरूपणं

प्रमाणिकजनो लोकः, तस्य च वल्लभः सदा।
अप्रमाणिकलोकस्य, वल्लभोऽपि भवेन्न वा ।२६८।
अप्रमाणिकलोकास्तु, निन्दन्ति धर्म्मकारिणः ।
अधर्म्मिणश्च श्लाघन्ते, तेषां व्यापारतेदृशो ॥२६९॥
ये धर्म्मकार्य्यकर्तारः, हसन्ति तांश्च ते सदा।
उपहासञ्च कुर्वन्ति, स्वजातीय स्वभावतः ॥२७०॥
अकार्य्यकारिणस्तांश्चा—नलसान्प्रवदन्तिये ।
केषां स्तुतिं न कुर्वन्ति, अतएवाप्रमाणिकाः ॥२७१॥
तेषां प्रियोऽप्रियो वा च, भवितु कोऽपि नार्हति ।
अतः प्रमाणिकैर्लोकैः,कथ्यते लोकवल्लभः ॥२७२॥
मर्य्यादा सेविता येन, कृतव्रतं न मुञ्चति ।
प्राणान्तकष्टके जाते, न मर्य्यादामुल्लंघयेत् ॥२७३॥

## लज्जास्वरूपनिरूपणं

संयमकारणं लज्जा, असंयमाच्च रक्षति ।
लज्जायुक्तो नरश्चैव, सर्वत्र फलमाप्नुयात् ॥२७४॥

लज्जाहीनाः मनुष्यास्तु, अकार्य्यकार्य्यतत्पराः ।
अत्यल्पस्वार्थं लाभाय, त्यजन्ति सर्वसज्जनान् ॥२७५

लज्जा गुणौघ जननी जननीमिवार्य्या,-
मत्यन्तशुद्धहृदयामनुवर्तमानाः ।
तेजस्विनः सुखमसूनपि संत्यजन्ति,
सत्यस्थितिव्यसनिनो न पुनः प्रतिज्ञाम् ॥२७६॥

## दयालुत्वनिरूपणं

दुःखिनां दुःखनाशाय, तेषां सुखित्व प्राप्तये ।
सर्वदा यत्नकर्तारः, जगति ते दयालवः ॥२७७॥
अनुकम्पा निरूप्ये च, स्वरूपं कीर्तितं तथा ।
तया सह य संयुक्तः,'सदयः"परिभाषितः ॥२७८॥
अक्रूरः शमतासेवी, सौम्यगुणी स कथ्यते ।
करोति कस्य नोद्वेगं, सर्वेषां शम्मवाञ्छति ॥२७९॥

## क्रूरस्वरूपनिरूपणं

क्रूरा उद्वेग कर्तारः, त्यजन्ति स्वपरान्नपि ।
स्वभाव शान्ति राहित्या,शीघ्रमकार्य्यकारिणः।२८०॥
पुण्योदयेन सौम्यत्वं पापैश्च क्रूरता भवेत् ।
क्रूरताऽतः प्रहातव्या,आदर्तव्या च सौम्यता॥२८१॥

## परोपकारस्वरूपं

येनकार्य्येण चान्यानां, लाभो भवति सर्वदा ।
ज्ञेयः परोपकारः सः, अन्यस्तु स्वार्थसाधकः ॥२८२॥
करणे तस्य यः शूरः, परोपकारकर्म्मणः ।
स महापुरुषो ज्ञेयः, जगत्कल्याणकारकः ॥२८३॥
परोपकारकर्त्तव्ये, शक्तिर्येषाञ्च विद्यते ।
ते नरा उत्तमा ज्ञेया, व्यवहारानुसारतः ॥२८४॥
विद्यते च गुणा येषु, सर्वमार्गानुसारिणः ।
सः सर्वगुणधौरेयः, मन्तव्यः सर्वसज्जनैः ॥२८५॥
यद्यपि भूषितो मर्त्यः[1], तपो ध्यानादिकैर्गुणैः ।
विना परोपकारं ते, शोभन्ते न गुणा अपि ॥२८६॥
शासनोद्धारकार्य्यञ्च, कृत धनैनैव क्रियते ।
अतः परोपकारेण, धर्म्मयोग्यस्सदा मतः ॥२८७॥

## अन्तरंगारिषड्रिपुनिरूपणं

कामक्रोधतृष्णामान, मदहर्षाश्च वैरिणः ।
अन्तरङ्गारिषड् वर्गाः, जगदहितकारिणः ॥२८८॥

---

१—मनुष्यः

तेषां परिहृतिः कार्य्या, सर्वदा सुखमिच्छता ।
अन्तरङ्गारिभिर्ग्रस्ताः, ते कथं सुखकांक्षिणः ॥२८९॥
परापरगृहीतेषु, स्त्रीषु रत्यभिलाषिता ।
स काम इति विज्ञेयः,त्यक्तव्यः स च सर्वदा ॥२९०॥
स्वरपरकष्टमज्ञात्वा, आन्तरप्रीतिनाशकः ।
स्वात्मनि क्रियते कोपः,स क्रोधः परिकीर्तितः ॥२९१॥
देयवस्तु समीपस्थे, ग्राहके च समागते ।
तृष्णा तरलचित्तेन, किञ्चिदपि न दीयते ॥२९२॥
ज्ञेयो लोभकषायःस, कथ्यतेऽन्य प्रकारतः ।
विना कारणमन्यस्य, वस्तुनोऽनीतिपूर्विका ॥२९३॥
ग्रहणेच्छा प्रजायेत, स लोभः परिभाषितः ।
कारणं सर्वपापानां, गुणानां नाशको मतः ॥२९४॥
परप्रतारणं यच्च, आग्रहेण न माननम् ।
आग्रहः सर्व कार्येषु स मानः परिकीर्त्तितः ॥२९५॥

## प्रोक्तं योगशास्त्रे

जातिलाभकुलैश्वर्य्य बलरूप तपः श्रुतैः ।
कुर्वन् मदं पुनस्तानि, हीनानि लभते जनः ॥२९६॥

ये जना दुःखमुत्पाद्य, परेषां कारणं विना ।
द्युतादि व्यसनद्वारा, तुष्यन्ति धनलाभतः ॥२६७॥
स हर्ष इति विज्ञेयः, षडेते वैरिणोमताः ।
अन्तरंगारिरूपाणां, कर्तव्या त्यागतामता ॥२६८॥

वशीकृतेन्द्रियस्वरूपं

वशीकृतेन्द्रियग्रामो, गृहिधर्म्माय कल्पते ।
एतद्गुणविहीनास्तु, धर्म्म योग्या नहि कदा ॥२६९॥
इन्द्रियग्राममर्य्यादी, कृतो येन महात्मना ।
वशीकृतेन्द्रिय ग्रामो, धर्म्मयोग्योगृही मतः ॥३००॥
परस्त्री सर्वथा त्यागी, स्वस्त्रीसंतोषधारकाः ।
वशीकृतेन्द्रियस्सोऽपि, ज्ञातव्यः सर्वदा गृही ॥३०१॥
सर्वथेन्द्रियग्रामस्य, साधूनां त्यागिता मता ।
देशतः त्यागिता ज्ञेया, गृहमेधिषु भावतः ॥३०२॥
पञ्चत्रिंशद् गुणा एते, सम्पूर्णाश्च भवन्ति वै ।
तदा तेषां परिपूर्णे, धर्म्मयोग्यस्य पूर्णता ॥३०३॥
न्यूनत्वे न्यूनता ज्ञेया, संपूर्णेषु च पूर्णता ।
धर्म्मबीजोसि योग्यं च, क्षेत्रं ज्ञेयं महात्माभिः॥३०४॥

तस्मिन् क्षेत्रे च सम्यक्त्व-बीजारोपणता मता ।
बीजादंकुरपत्रादि, पुष्पफलादिकञ्च वै ॥३०५॥
सर्वं शीघ्रं प्रजायेत, ततो मुक्तिः प्रजायते ।
ते गुणाःसर्वथा मान्या, आदर्त्तव्या क्षणे क्षणे ॥३०६॥
धन्यास्ते पुरुषा ज्ञेयाः, सर्वश्लाघ्याश्च ते मताः ।
एतद्गुणसमायुक्ताः, ते नरा स्वर्गगामिनः ॥३०७॥
मुक्तिः परम्परा तेषां, जायते शुभ योगतः ।
यत्नश्चातोहि कर्त्तव्यः, यत्ने किं किं न सिध्यति ॥३०८

इति श्रीशास्त्रविशारद जैनाचार्य्य विश्ववन्द्य सूरिसम्राट् विजयधर्म्मसूरिशिष्येण न्याय विशारद न्यायतीर्थोपाध्याय मंगल विजयेन विरचिते आर्हतधर्म्म प्रदीपे मार्गानुसारिगुणवर्णन नामाऽष्टमः प्रकाश समाप्तः

# ॥ नवमप्रकाशः ॥

## सर्वज्ञविषयकपूर्वपक्षवर्णनं

अधुना सर्वज्ञ-विषय-विचारणा क्रियते तत्वरूपेण ।
बुद्धहरिहरजिनानाञ्च, तिष्ठति सर्वज्ञता कुत्र ॥१॥

पुरुषा नैव सर्वज्ञा, भवेयुश्च कदापि वै ।
यथा नरश्च रथ्यास्थस्तथाऽयमपि भाव्यताम् ॥२॥

प्रमाणत्वे न मन्तव्ये, ईश्वरेऽनादि कालिके ।
अनुमानं जगत्कर्तुः, बाधकं तन्न साधकम् ॥३॥

प्रत्यहं किं करायन्ते, यस्य सुराऽसुरादयः ।
छत्रादि चामरा दिव्यास्त्रिलोकख्यातिसूचिकाः ॥४॥

तत्रेश्वरत्व मन्तव्ये, आपत्तिश्च भवेन्नहि !
लाभस्य भावना किन्तु, दृश्यते च पदे पदे ॥ ५ ॥

किञ्चेश्वरं विनाऽन्यस्याः, व्यक्तेः पार्श्वे न तादृशि ।
दिव्यविभूति सामग्री, विद्यते न कदाचन ॥ ६ ॥

इन्द्रजालक्रियाकाराः, नमस्यां कारयन्ति वै।
कीर्तिलोलुपता द्वारा, किं किं कुर्वन्ति नो तदा ॥७॥
देवागमनभोयान-चामरादि विभूतयः।
मायाविष्वपि दृश्यन्ते, नातस्त्वमसि नो महान् ॥८॥
अनादिकाल खानिस्थमशुद्धं शातकुम्भकम्।
क्षारतेजः प्रयोगेन, स्वच्छं शुद्धं विधीयते ॥ ९ ॥
ज्ञानादीनां तथाऽऽत्मा वै, अभ्यासेन तथैव च।
अज्ञानमलनाशेन, सर्वज्ञः किमु नो भवेत् ॥१०॥
इयं युक्तिर्न मन्तव्या, अयुक्तवाक्प्रयोगतः।
विशुद्धेस्तारतम्यत्वमभ्यासे नैव जायते ॥११॥
नाल्पज्ञत्वं परित्यज्य, सर्वज्ञोऽपि भवेत्कदा।
वक्तुं न शक्यते भेदः, सर्वज्ञाल्पज्ञयोस्तथा ॥१२॥
अभ्यासः प्लवनस्यैव, जनैः कैश्चित्प्रतन्यते।
तादृगभ्यास प्राबल्यादुत्प्लवति गर्तमेककम् ॥१३॥
योजनोत्प्लवनं नैव, क्रियते कुत्रचित्कदा।
तथैवाभ्यासकद्वारा, सर्वज्ञत्वं न जायते ॥१४॥
दशहस्तान्तरं व्योम्नो, यो नामोत्प्लुत्यगच्छति।
न योजनशतं गन्तुं, शक्तोऽभ्यासशतैरपि ॥१५॥

मनुष्यत्वे न सार्वज्ञमस्तीति मे मतिः सदा ।
परन्तु ब्रह्मविष्णुत्वे, देवे कथं न विद्यते ॥ १६ ॥
अथापिदिव्य देहत्वाद्ब्रह्म विष्णुमहेश्वराः ।
कामं भवंतु सर्वज्ञाः, सार्वज्ञ्यं तु नरस्य किम् ॥१७॥
भक्तानुग्रहणे चैव, ये शूराः शत्रु-निग्रहे ।
कामिनी कामनाशक्ताः, ब्रह्म विष्णु-महेश्वराः ॥१८॥
कामस्नेहैः क्षणैः रागैः, युक्तेषु द्वेषधारिषु ।
यदि तेषाञ्च सार्वज्ञ्यं, अपराधं किमन्यकैः ॥१९॥
किञ्चेश्वरस्तु नास्त्येव, प्रमाणानामभावतः ।
तत्सर्वं प्रतिपाद्येत, सर्वेषां ज्ञानलाभतः ॥२०॥
वस्त्विन्द्रिय सुसंबद्धं, प्रत्यक्षेणैव गृह्यते ।
अक्षिसंबन्धता नास्ति, प्रत्यक्षं तस्य नो भवेत् ॥२१॥
प्रत्यक्षं तु मतं लिङ्गं अनुमाने च सर्वतः ।
व्याप्ति स्मरणतो वह्नेः, धूमस्य दर्शने यथा ॥२२॥
लिङ्गस्यादर्शनाभावे, ईश्वरो नानुमीयते ।
अनुमानप्रमाणस्य, अवकाशो न विद्यते ॥२३॥
उपमानप्रमाणन्तु, सादृश्यज्ञानयोगतः ।
सादृश्य ज्ञानताभावे, प्रकृतिस्तस्य नो भवेत् ॥२४॥

प्रमाणेन न सार्वज्ञ्यं, सिध्यति केनचिद्यदि ।
तदा च तत्प्रणीतानां, आगमे न प्रमाणता ॥२५॥
आगमस्य प्रमाणेन, ईश्वरो नैव साध्यते ।
ततः प्रमाणताऽभावे, सर्वज्ञः संसृतौ नहि ॥२६॥
विना सर्वज्ञता कस्य, उपपत्तिर्न वस्तुनः ।
देवदत्तो यथा पुष्टः, भुनक्ति दिवसे नहि ॥२७॥
भोजनञ्च विना पुष्टिं,कस्याऽपि जायते नहि ।
प्रत्यक्षेण च पुष्टः स, दृश्यते सर्वजन्तुभिः ॥२८॥
अनुत्पन्नं विना येन, तत्तेनैव प्रकल्पयेत् ।
कल्प्यते पुष्टि योगेन, प्रकृतेर्रात्रिभोजनम् ॥२९॥
क्वचिन्नानुपपत्तित्वं तथा सर्वज्ञतां विना ।
अतः कल्प्येत सर्वज्ञः, किमर्थं वद सत्यताम् ॥३०॥
प्रमाणं पञ्चकं यत्र, वस्तुरूपेण जायते ।
वस्तुसत्ता विबोधार्थं, तत्राभाव प्रमाणता ॥३१॥
प्रत्यक्षादि प्रमाणैश्च, सिद्धिर्यस्य भवेन्नहि ।
विद्यते नैव सर्वज्ञः, त्रैलोक्ये शशश्रृङ्गवत् ॥३२॥
अतीन्द्रियपदार्थानां साक्षाद् दृष्टा न विद्यते ।
नित्यवेदवचोभिश्च, यः पश्यति स पश्यति ॥३३॥

निर्णयोऽपि पदार्थानां, कर्तव्यो वेदवाक्यतः ।
अपौरुषेय वेदस्य, कर्ता च सर्वथा नहि ॥३४॥
नित्यवेदवचस्स्वेव, अभ्यासदृढभावतः ।
अतीन्द्रिय पदार्थानां, ज्ञानं संजायते तथा ॥३५॥
अपौरुषेय वेदेन, किं स्यात्पदार्थज्ञानता ।
पौरुषेयश्च वै वेदः मन्तव्यो बोधमिच्छता ॥३६॥
प्राचीन परिपाठ्यावै, गुर्वादीनां समागमात् ।
तत्सम्प्रदायहेतोश्च, पदार्थबोधजः खलु ॥३७॥
अतएव पुरा कार्य्यो, वेदपाठः प्रयत्नतः ।
ततो धर्म्मस्य जिज्ञासा, कर्तव्या धर्म्मसाधनी ॥३८॥

इतिश्री शास्त्रविशारद जैनाचार्य्यो विश्ववन्द्य
सूरिसम्राड् विजयधर्म्मसूरि शिष्येण
न्यायतीर्थ न्यायविशारदोपाध्याय
मंगलविजयेन विरचिते आर्हत
धर्म्मप्रदीपे सर्वज्ञसिद्धि
पूर्वपक्ष वर्णन नामा
नवम प्रकाशः
समाप्तः ॥

# ॥ दशम प्रकाशः ॥

## सर्वज्ञ विषयक पूर्वपक्ष [illegible]

सर्वज्ञं वीतरागं तं, विनाध्यानं न सिध्यति ।
विना ध्यानेन सर्वेषां, कर्म्मणां न क्षयो भवेत् ॥१॥
सर्वज्ञसिद्धि प्रामाण्यं, न स्यादिति च ते मतिः ।
प्रमाणस्य तु सत्वेन, मिथ्या सा परिभाषिता ॥२॥
ज्ञानस्य तारतम्यं हि, विश्रान्तं कुत्रचिन्मतम् ।
तरतमशब्दवाच्यत्वात्, सर्वदा परिमाणवत् ॥३॥
तारतम्यश्च विश्रान्तं, परिमाणस्य व्योमनि ।
सर्वज्ञे तारतम्यश्च, विश्रान्तं ज्ञानभावतः ॥४॥
प्रतिभाज्ञानप्रज्ञानां, जीवेऽधिकाधिकत्वतः ।
एकैकापेक्षया चैव, जगति खलु दृश्यते ॥५॥
न्यूनाधिक्यश्च सर्वत्र, सर्वजीवेषु दृश्यते ।
तदा तस्याश्च वै पूर्णविश्रान्तिस्तु क्वचिन्मता ॥६॥
यत्रोत्कृष्टत्व ज्ञानं वै सर्वपदार्थगोचरम् ।

सर्वज्ञो माननीयश्च सर्वकाले च सज्जनैः ॥ ७ ॥
यथा लिम्बुफलादाम्रफलं महन्निगद्यते ।
नालिकेरं च तस्माद्धै कुष्माण्डं परिकथ्यते ॥ ८ ॥
ततः प्रतोलिमार्गाणां गृहं ततो पुरं मतम् ।
ततो भारतदेशादिस्तिर्य्यग्लोकस्ततो मतः ॥६॥
त्रिलोकी महती तस्मादिति रूपेण लोकने ।
परिमाणं महत्सर्वं, विश्रम्यते च पुष्करे ॥ १० ॥
ज्ञेया ज्ञानस्य तद्रीत्या, एकैकतारतम्यता ।
धर्म्मपालात्क्षमापाले, धनपाले ततोऽधिकम् ॥११॥
तच्छोभनमुनीन्द्रे वै, हेमचन्द्रे ततो महत् ।
हरिभद्रे तदाधिक्यं, ततश्च वज्रस्वामिनि ॥१२॥
भद्रबाहौ ततो ज्ञेयं, श्रुतकेवलि नामके ।
ततोऽवध्यादि ज्ञानिषु, मनःपर्य्यायज्ञानिनि॥१३॥
ततोऽधिकश्च सम्पूर्णलोकालोकप्रकाशकम् ।
विश्रान्तं ज्ञानमुत्कृष्टं, तं सर्वज्ञश्च मन्यताम् ॥१४॥
यथा तप्तोष्णनीरादौ, औष्ण्यं तारतम्यकम् ।
उत्कृष्टौष्णे सुजातेऽपि, अग्नित्वं न प्रपद्यते ॥१५॥
सहकारित्वसामग्र्या, आगन्तुकधर्म्मं विना ।

द्रव्यस्य सहजो धर्म्मः, वैशिष्ट्यं स्वाश्रये नयेत्॥१६॥
अभ्यासस्य प्रभावेन, क्रमिक वर्द्धमानतः।
सर्वोत्कृष्टं च प्राप्नुयात्तथैवाऽत्रावधार्य्यताम् ॥१७॥
यथा हेमत्वे क्षारादिप्रभृतीनां प्रयोगतः।
शुद्धसुवर्णरूपत्वं, जायते नाऽत्र संशयः ॥१८॥
गुणश्रेणि समारोहे, योगाभ्यासस्य योगतः।
सर्वथा मोहनाशेन, ज्ञानावारादि नश्यति ॥१६॥
सर्वथा नश्यति यत्र, शुक्लध्यानप्रभावतः।
तत्र कैवल्यरूपोऽयं, ज्ञानभानुः प्रकाशते ॥२०॥
तद्वान् ? सार्वश्च विज्ञेयः, विश्रान्तं तारतम्यकम्।
ज्ञानं कुत्र भवेन्नैव, उत्कृष्टं तदपेक्षया ॥२१॥
जले ओष्ण्यञ्च दृश्येत, स धर्म्मः सहजो नहि।
समागतश्च हेतोर्वै, अग्न्यादि सहकारितः ॥२२॥
अतो जलेऽति तप्तेऽपि, जलमग्निर्न जायते।
आगन्तुकेषु धर्म्मेषु, तादृशो नियमो नहि ॥२३॥
जलज्वालनकर्त्तव्ये, सर्वनाशो विधीयते।
ज्ञानं तु सहजो धर्म्मस्तस्य विश्रान्तिर्दृश्यते ॥२४॥
दृष्टान्तं प्रथमं दत्तं, चोत्प्लुतिकरणस्य वै।

सहजोत्प्लुति धर्म्मो न, किन्तु कर्म्मस्वभावजः ॥२५॥
अतो नैव च मन्तव्यं, दृष्टान्तं तादृशं च वै ।
धूलिप्रक्षेपन्यायेन, वक्तव्यं तद् घृणास्पदम् ॥२६॥
प्रत्युत प्लुति कर्तव्ये, सामर्थ्यं परिनश्यति ।
ज्ञाने न तारतम्यञ्च, तादृशं परिदृश्यते ॥२७॥
विना कस्योपदेशञ्च, शास्त्रावलोकनं विना ।
चन्द्रसूर्य्यग्रहादीनां, धर्म्माधर्म्मादि वस्तुनः ॥२८॥
नरकस्वर्गतत्त्वानां, कालाकाशादि वस्तुनः ।
कोऽपि प्रत्यक्षदृष्टास्ति, यद्विषयोपदेशकः ॥२६॥
विना चिह्नं विना ज्ञानं, विना विषयोपदेशकम् ।
याऽविसंवादिता यत्र, तत्साक्षात्कृत्स संमतः ॥३०॥
यथा च जिनपालादि, अन्योपदेशतां विना ।
चन्द्रसूर्यप्रज्ञप्तिभ्यः, ज्योतिशास्त्रादिकात्तथा ॥३१॥
कृत्वा चन्द्रग्रहादीनां, स्वयं साक्षाच्च निर्णयम् ।
विनोपदेशसद्भावं[१], दत्ते परोपकारतः ॥ ३२ ॥
अतीन्द्रिय पदार्थानां, सर्वेषां चैव सर्वथा ।
यः साक्षात्कारकारीस्यात्सः सर्वज्ञो विभाव्यताम् ३३
परमाण्वादि तत्त्वानां, चातीव सूक्ष्मवस्तुनः ।

१—अन्योपदेशं विना स्वयमुपदेशं

अतीतकाल सद्रामरावणादिनृणां तथा ॥३४॥
निषधनीलरुक्मीणां, महाहिमवतां तथा।
देवकुर्वादिवप्राणां, चैरावतादि वस्तुनः ॥ ३५ ॥
महाविदेहवप्राणां[1], धातकीद्वीपसदृशाम्[2]।
समस्तानां पदार्थानां, साक्षाद्दृष्टा च मन्यताम्।३६।
एतेऽर्थाश्चाऽपि केषांचित्प्रत्यक्षास्युश्च सर्वदा।
पर्वतस्थैर्यथा धूमैः कृशानुरनुमीयते ॥ ३७ ॥
अग्नेरनुमितेः कर्तुरनुमेयः शिखी तथा।
तथापि पर्वतस्थायाः, व्यक्तेः प्रत्यक्षमेव च ॥३८॥
व्यवहित समीपस्थाः, अर्थाः सूक्ष्मादिका अपि।
त्रैकालिक पदार्था ये, अनुमेयाश्च मादृशाम्॥३९॥
कस्यचिदपि व्यक्तेश्च, प्रत्यक्षाश्च भवन्तु ते।
प्रत्यक्षीभूतका यस्य, सर्वज्ञः किं स नो भवेत् ॥४०॥
प्रागुक्तं यत्प्रमाणं न, सार्वसिद्धौ च विद्यते।
वन्ध्यापुत्रसमं ज्ञेयं, प्रमाणस्य प्रसिद्धितः॥ ४१ ॥
पदार्थः सो न मन्तव्यः प्रत्यक्षः यस्य नो भवेत्।
यदि चैवं प्रमन्येत, विरोधो दृश्यतां तदा ॥ ४२ ॥

१ क्षेत्राणां २ धातकी द्वीपकादीनाम्

पर्वतगह्वरस्था ये, ये च भित्तिर्बहिर्भवाः ।
रथ्यन्तरस्थिता ये च, पितामहादि पूर्वजाः ॥४३॥
ते सर्वे तव नाध्यक्षा, मन्यतां नैव ते त्वया ।
उच्यते यदि कस्यैव, प्रत्यक्षा अभवँश्च ते ॥ ४४ ॥
मन्यतां वै ततस्तत्र्यतीन्द्रियविषयेष्वपि ।
यस्य तेऽपि हि प्रत्यक्षा, स सर्वज्ञो भवेन्न किम् ॥४५॥
वै प्रत्यक्ष प्रमाणन्तु, ईशसिद्धौ नियामकम् ।
अनुमानं तु चर्य्येत, बाधकं तन्न वै भवेत् ॥ ४६ ॥
अनुमानं विना नैव, धर्मि साध्यस्य साधकम् ।
धर्म्मित्वेन च किं ग्राह्यः, सर्वज्ञः सुगतोऽथवा ॥४७॥
किंवा सर्वमनुष्याश्च, प्रश्नत्रयी विधीयते ।
धर्म्मितया च सर्वस्य, स्वीकारेऽपि गतिर्नहि ॥४८॥
साध्यत्वेन च तत्राऽपि, असत्त्वं किमु गृह्यते ।
सर्वज्ञस्तत्रनास्त्येव, इत्यनुमानता भवेत् ॥४६॥
असर्वज्ञत्वमथापि, गृह्यते साध्यत्वेन किल पुंसा ।
सार्वस्यधर्म्मित्वेच, हेतुनाकथ्यते तत्वतः किमु ॥५०॥
अनुपलम्भ हेतुत्वे, भावार्थस्तु निगद्यते ।
हेतोः कस्याप्यभावेन, सर्वज्ञः संसृतौ न हि ॥५१॥

सर्वज्ञस्यापि तत्रैव, उपलम्भो न जायते ।
तस्य किं कारणस्यैव, कार्य्यस्यैव तथैव च ॥५२॥
एवं प्रश्नत्रयी चैव, जायते चानुमानके ।
स्वीकारे आद्यपक्षस्य प्रश्नद्वयी च तत्र वै ॥ ५३ ॥
तवैकस्योपलम्भो न, सर्वज्ञस्य प्रजायते ।
जगति वा सर्वजीवस्य, इत्याशंका भवेत्सदा ॥५४॥
स्वीकारे आद्यपक्षस्य, भावार्थस्तु प्रजायते ।
सर्वज्ञ गोचरस्यैव, अनुभवस्तवापि नो ॥ ५५ ॥
इत्थेवं कथ्यमाने तु, हेतौ स्याद् व्यभिचारिता ।
अन्यजीवस्य वै चेतोऽनुभवस्तव नो भवेत् ॥५६॥
इति कथं निगद्येत, अन्यत्रानुभवो नहि ।
अन्यस्य मानसे सर्वज्ञानुभवो न विद्यते ॥ ५७ ॥
कस्यचिद्वस्तुतत्त्वस्यानुभवाभावतस्तव ।
तद्वस्तु सर्वथा नैव, इति वक्तुं न शक्यते ॥५८॥
सार्वानुमत्यभावेन, एकस्य तव सर्वदा ।
सर्वज्ञः संसृतौ नास्ति, इति मिथ्या वचो मतम् ॥५९॥
सर्वजीवस्य सर्वज्ञानुभवाभावतोऽपि च ।
सर्वज्ञः संसृतौ नास्ति, एवं कथञ्च कथ्यते ॥६०॥

स्वीकारे युग्मपक्षस्य, दोषापत्तिश्च सर्वदा ।
जगति सर्वजीवानां तादृशोऽनुभवः कथम् ॥ ६१ ॥
विना सर्वज्ञतां सर्वजीवानामप्यनुभवः ।
मानसिकः कथं ज्ञातः, सत्यं साहसिकं वचः ॥६२॥
आन्तरिकश्च स्वोकारो बहिर्निषेधधूर्तता ।
असत्यं तच्च मा ब्रूथाः अनन्तभवकारणम् ॥६३॥
प्रोक्त दोषस्य रक्षार्थं, सर्वज्ञ कारणस्य च ।
अभाव उपलम्भस्य, सर्वज्ञः सर्वदा नहि ॥ ६४ ॥
इत्यपि वचनं मिथ्या, सर्वज्ञ कारणे सति ।
ज्ञानावारादिघातीनां, कर्म्मणां कारणं क्षयः ॥६५॥
अनुमानेन हेतोश्च, सिद्धिस्तु प्रतिपाद्यते ।
ज्ञानावारादि रूपाणां, सर्वथा घातिकर्म्मणाम् ॥६६॥
कस्यांचिच्च क्षयो व्यक्तौ, भवेत्तत्र न संशयः ।
ह्रासेन तारतम्यस्य, कनकोपलयोर्यथा ॥ ६७ ॥
क्षारपुटाग्निसंयोग कारणानां समूहकः ।
मीलतियादृशस्तादृक्तारतम्यात्सुवर्णतः ॥ ६८ ॥
बाह्याभ्यन्तरमालिन्यविनाशः परिदृश्यते ।
पूर्णकारणसामग्र्या, पूर्णमलश्च नश्यति ॥६९॥

सुवर्णं निर्मलं भूयात्तथात्मनि विलोक्यताम् ।
अनादिकाललग्नानि, ज्ञानाद्यावरणानि च ॥ ७०॥
मोहनीयान्तरायश्च, घाति तत्परिभाष्यते ।
एतत्कर्म्मचतुर्णाञ्च, रत्नत्रयाविराधनात् ॥७१॥
निरतिचार योगानां, सर्वथा पालने सति ।
परमात्मनि जायेत, घातीनां सर्वथा क्षयः ॥ ७२ ॥
आविर्भूयाच्च कैवल्यज्ञानं सदा च निर्म्मलम् ।
लोकालोकस्य वै साक्षात्कारकारित्वमेव च ॥ ७३ ॥
यस्मिन्स्यात्तादृशं ज्ञानं सः सर्वज्ञ उदाहृतः ।
अतः सर्वज्ञ हेत्वभावो नैवात्र च विद्यते ॥ ७४ ॥
कदाचिदेवमुच्येत, सार्वकार्य्यस्य नाशतः ।
सर्वज्ञः संसृतौ नास्ति, मिथ्या वचनमित्यपि ॥७५॥
अविसंवादि वाक्यञ्च, सर्वज्ञः कार्य्यता मता ।
जैनागमेषु तत्साक्षात्, द्रष्टव्यं सज्जनैः सदा ॥७६॥
सर्वज्ञ व्यापकाभावात्सर्वज्ञ संसृतौ नहि ।
आकाशपुष्पवज्ज्ञेयं, इत्यपि वचनं हृदि ॥७७॥
समस्तवस्तुनः साक्षात्कारकारी च वै तथा ।
व्यापकत्वं च सार्वस्य, उभयत्र प्रसिद्धति ॥७८ ॥

क्रियते चानुमानश्च, शास्त्रानुभवयोगतः ।
समस्त वस्तुनः साक्षात्कारी कश्चिच्च विद्यते ॥७६॥
तद्ग्रहण स्वभावत्वे, प्रक्षीण प्रतिबन्धतः ।
यद्ग्रहण स्वभावत्वे, प्रक्षीण प्रतिबन्धकम् ॥८०॥
तत्साक्षात्कारितास्याद्धै, रूपसाक्षात्कृतिर्भवेत् ।
यथाऽपगतसद्ध्वान्त, प्रतिबन्धक लोचनम् ॥८१॥
तथा समस्त तत्वानां साक्षात्कारित्व नाशिनां ।
ज्ञानावारादि घातीनां, कर्म्मणां क्षयभावतः ॥८२॥
सुगतं धर्म्मिणं मत्वा, सर्वज्ञः स्वत्व साधकः ।
खपुष्पवच्च सो ज्ञेयः, मीमांसकैः मनोरथः ॥ ८३॥
सम्पूर्णया च सामग्र्या, [illegible] प्रजायते ।
अतोहि व्यापकाभाव वचः प्रलापमात्रकम् ॥ ८४ ॥
पूर्वोक्त दोषसद्भावे, निषेध्यो नहि केनचित् ।
सुगतव्यक्तिनैषेधे, सर्वज्ञत्वेन संमते ॥ ८५ ॥
सर्वसार्वे निषेधोऽपि, नागत इति मन्यताम् ।
एकस्यापि निषेधे तु अपरस्य विधानकम् ॥ ८६ ॥
समागता च विज्ञेया, मर्य्यादेयश्च शाश्वती ।
विनाऽपरस्य विधानेन, एकस्य न निषेधता ॥ ८७ ॥

आनयाब्राह्मणत्वं हि, उक्ते तु क्षत्रियस्य च।
आनयनं मनुष्यस्य, भिन्नस्य तस्य सदृशः ॥ ८८ ॥
न तु गवादि जन्तूनां, चानयनं प्रकथ्यते।
तथा ब्राह्मणभिन्नानां, क्षत्रियानयनं मतम् ॥८९॥
तथा सर्वज्ञसिद्धिस्तु, सुजाता निश्चयात्मिका।
अनुमानस्य शंकायां, प्रत्युत्तरं विधीयते ॥ ९० ॥
किलाप्रमाणिकानाञ्च, अर्थानां हेतुरुच्यते।
सामान्यवक्तृतायां वा, वैपरीत्येन चाथवा ॥९२॥
पक्षत्रयेषु चाद्यावै, असिद्धः प्रणिगद्यते।
स यो भवति सर्वज्ञः, अप्रामाण्यञ्च नो वदेत् ॥९३॥
सती वेश्या भवेन्नैव, वह्नौ च शीतता नहि।
सर्वज्ञः नो भवेद्वक्ता, तथा विरुद्धवस्तुनः ॥९४॥
स्वीकारे युग्मपक्षस्य, भावार्थ एव जायते।
सर्वज्ञत्वाद्विरुद्धार्थं, समर्थनं करोति न ॥ ९५ ॥
अतः सार्वज्ञ नो मेने, इति हास्यास्पदं वचः।
स्वीकारे नेत्रपक्षस्य, सर्वज्ञो नो प्रवक्तृतः ॥ ९६॥
इति वचो हि नो सम्यग्, हेतौ स्याद्व्यभिचारिता।
वक्तृता चैव सर्वज्ञे, साध्यञ्च तत्र नास्ति वै ॥९७॥

सर्वज्ञोऽपि न सर्वज्ञः, वेश्या भवति नाऽसती ।
इति न्यायः प्रजायेत, शोचनीयं च सर्वदा ॥६८॥
अतोऽनुमानप्रामाण्यं, सर्वज्ञस्य प्रसाधकम् ।
दृढभावेन मन्तव्यं, सर्वज्ञसिद्धिमिच्छता ॥६६॥
प्रमाणमागमं चैव, सर्वज्ञस्य न बाधकम् ।
पौरुषेयागमं चैव, सर्वज्ञबाधकं मतम् ॥ १०० ॥
अथवाऽपौरुषेयं च, प्रश्नद्वयी प्रजायते ।
अपौरुषेयप्रामाण्यं, सर्वज्ञबाधकं न हि ॥ १०१॥
अपौरुषेय सिद्धान्तं, कदाचिन्नैव संभवेत् ।
वाक्यसमूह सिद्धान्तं, पदावलिषु वाक्यता ॥१०२॥
पदन्तु वर्णसंदोहः, वर्णाः कण्ठादिस्थानजाः ।
धर्माधर्मौ विना नांगं, विनांगेन मुखं कुतः ॥१०३॥
मुखं विना न वक्तृत्वं, तच्छास्तार कथं परे ।
आगमं यदि मन्येत, अपौरुषेयता कथम् ॥१०४॥
यदि चापौरुषेयं चेत्, तत्तर्हि चागमं कथम् ।
तदागमं प्रमाणं स्याद्वक्ता च गुणवान्यदा ॥१०५॥
वक्ता भवन्मते नास्ति, प्रामाण्यमागमे कथम् ।
सार्वो हिरण्यगर्भः स्यादिति चेद्वेदवाक्यतः।१०६।

अपौरुषेयरूपोहि, वेदोऽनेन नस्वीकृत ।
प्रमाणैरागमैश्चैव, सर्वज्ञसिद्धिरागता ॥ १०७ ॥
पौरुषेयागमेनैव, सर्वज्ञो न निषिध्यते ।
सर्वज्ञः पुरुषेणैव, स्वयं किं प्रतिषिध्यते ॥ १०८ ॥
उपमानप्रमाणं च, सर्वज्ञ बाधकं न वै ।
उपमानोपमेयानां, विषयो दृष्टि गोचरे ॥ १०९ ॥
तत्रोपमानता ज्ञेया, सर्वज्ञस्य भवन्मते ।
स्वीकारो कर्हिचिन्नैव, तदा चर्चा वै निष्फला।११०।
भवतेवं प्रमन्येत, भवत्सिद्धान्त वादतः ।
तदोपमानबाधा न, इत्येवमपि मन्यताम् ॥१११॥
अतीन्द्रिय पदार्थानां, सार्वं विना निरूपणम् ।
केनापि च प्रकारेण, क्रियते न हि केनचित् ॥११२॥
किञ्चाऽर्थापत्ति प्रामाण्यं, सर्वज्ञबाधकं न वै ।
प्रत्युत साधकं ज्ञेयं, इत्येवं हृदि मन्यताम् ॥११३॥
विना सर्वज्ञसद्भावे, वेदे नैव प्रमाणता ।
संपूर्णगुणवान्वक्ता, तत्र सर्वज्ञता भवेत् ॥११४॥
प्रामाण्यमन्यथा वाचि, कुत्रचिन्नैव जायते ।
वेदे प्रमाणता सिध्यै, सर्वज्ञः किल मन्यताम् ।११५।

प्रमाणपंचकं यत्र, शुद्धरीत्या प्रवर्तते ।
तत्र कथमभावः स्यात्सर्वज्ञस्येति चिन्त्यताम् ॥११६॥
प्रश्नः—समस्त वस्तुनो ज्ञाता सर्वज्ञो यदि मन्यते।
तदाऽशुचिपदार्थानां, नारकदुःखवस्तूनां ॥११७॥
अनुभवोऽपि तस्य स्यादन्यथा ज्ञातृता न हि ।
उत्तरं—ज्ञानस्य प्राप्य कारित्वं, यस्य सिद्धान्त सम्मतम् ॥ ११८ ॥
तस्यापत्तिर्भवेदेव, सा न हि जैनशासने ।
ज्ञानमप्राप्य कारित्वं, जैनशासनसम्मतम् ॥११९॥
यथा सूर्यः स्वस्थानस्थः, वस्तुतत्वं प्रकाशते ।
आत्मस्थं तु तथा ज्ञानं, वस्तुतत्वं प्रकाशते।१२०।
प्रश्नः—संसारोऽनाद्यनन्तः स्यात्पदार्थानामनन्तता
अनन्तवस्तु सार्थानां, ज्ञानमनुक्रमे भवेद् ॥१२१॥
अनन्तकाल जातेऽपि, सर्वज्ञो न भवेत्कदा ।
सम्पूर्णज्ञानताऽभावे, सर्वज्ञो नैव सिद्धयति।१२२।
उत्तरं—यत्रानेक पदार्थानां, कृतं च प्रतिपादनम् ।
सम्यग् रीत्या च तच्छास्त्रं, अभ्यस्तं गुरुयोगतः१२३
निरूपणं च सम्पूर्णं, पदर्थानां च तत्र वै ।

जायते युगपज्ज्ञानं, कालविलम्बता न हि ॥१२४॥
तथा सार्वोऽपि सम्पूर्णपदार्थानां विलोकनम् ।
एकस्मिन् समयेनैव करोति नात्र संशयः ॥१२५॥
यथा सकलशास्त्रार्थः, स्वभ्यस्तः प्रतिभासते ।
मनस्येकक्षणेनैव, तथाऽनन्त प्रवेदनम् ॥१२६॥

## शंकरादिषु सर्वज्ञनिषेधवर्णनः

सर्वज्ञः वितरागो न, शङ्करब्रह्मविष्णवः ।
कामक्रोधादि संयुक्ताः, हिंसादिभावपोषकाः।१२७
स्वाङ्के स्त्रियं समादाय, गलहस्तप्रदायकाः ।
अवस्थां कामभोगीयां, सूचयन्ति च सर्वदा ।१२८।
केनापि सज्जनेनैव, स्वस्त्री स्वाङ्के न धार्यते ।
सर्वजनसमक्षेषु, तेषां च का विडम्बना ॥१२९॥
लज्जा कापि च स्वान्ते चेत्पामरजनसादृशी ।
कार्येश्च कामरागादि सूचकं च करोति किम्॥१३०॥
ततस्ते न हि सर्वज्ञाः, वीतरागा न कर्हिचित् ।
असभ्यकार्यकर्तव्ये, भवेयुरीश्वराः कथम् ।१३१।

## ंकरस्वरूपवर्णनम्

शांकरैः सह पार्वत्या, एकदा कोपनं कृतम् ।
तदा प्रार्थयते सोऽपि, योजयित्वा निजौ करौ ।१३२।
ततः कोपाधिकत्वेन, अलक्तादि युतेन वै ।
पादेन प्रहृतिर्दत्ता, शीघ्रं मुखे तदा तया ॥१३३॥
लग्नाऽलक्तमुखः शैवः, करोतु सर्ववाञ्छितम् ।
विश्वनाथीय टीकायां, सा[1] शिवहेतुका मता ।१३४।
कामभोगप्रसङ्गे च, कोपनं करणं मतम् ।
शान्त्यर्थं प्रार्थना सैव, कोपाधिकत्व कारिका ॥१३५॥
भस्मावगुण्ठितो देहः, वासुकीवलयायितः ।
श्मासानवास कर्त्ताऽपि, न त्यागी कामभोगके ।१३६।
ढक्कां डमरूपां तां, गृहीत्वा सोऽपि नृत्यति ।
अहो! चेश्वर रूपस्य, गतिः शिवस्य कीदृशी ॥१३७॥
नातो ज्ञानी च ध्यानी न, किन्तु क्रीडा कुतूहली ।
त्रिशूलयुक्तहस्तश्च, सर्वज्ञः स शिवः कथम् ।१३८।

## श्रीकृष्णे सर्वज्ञनिषेधवर्णनम्

हरिरपि न सर्वज्ञः, विषयाधीन स्वान्तकः ।
दृष्टान्तेनैव ज्ञाप्येत, तत्तच्छास्त्रानुसारतः ॥१३९॥

1—पादप्रहतिः ।

मिलित्वा गोपिकाः सर्वाः, वस्त्राणि परित्यज्य च।
कुर्वन्ति जल क्रीड़ां ताः, इच्छया कामपुष्टये।१४०॥
कृष्णस्तत्र समागत्य, चोरितं चेलकादिकम्।
आरूढः स्वेच्छया तत्र, वृक्षे कदम्बनामके ॥१४१॥
समाप्य जलक्रीडां वै, समागच्छन्ति तास्तटे।
अदृष्ट्वा स्वीय वस्त्राणि, जाता व्याकुलमानसाः१४२।
तदा कदम्बवृक्षस्थं, दृष्ट्वा कृष्णं च गोपिकाः।
स्वगुह्यमेकहस्तेन, स्थगित्वा प्रार्थयन्ति ताः ॥१४३॥
मदीयानि सुवस्त्राणि, समर्पयन्तु नाथ भोः।
वयं नग्नाः कियच्चिरं, स्थास्यामोऽत्र प्रभो वद १४४
तदा श्रीहरिणा प्रोक्तं, योजयित्वा करौ द्वयौ।
प्रार्थयन्तु तदा दास्ये, अन्यथा न हि कर्हिचिद् १४५।
पश्यंतु भो जनाश्चात्र, असभ्यता च कीदृशी।
वस्त्रापहरणं कीदृग्, कीदृशी हृदि धृष्टता ॥१४६॥
प्राकृतः पुरुषः कोऽपि, तादृक्कार्यं करोति न।
करणे महती लज्जा, घृणास्पदं पदे पदे ॥१४७॥
श्रीकृष्णसदृशो व्यक्तिः, रुक्मिण्यादि महासती।
कथं करोति तत्कार्यं, महाबीभित्स कारणम् ।१४८।

यदि कुलश्च सत्यं चंद्, तदा स पामरो जनः।
सर्वज्ञो वीतरागो न, अल्पज्ञः सम्मतो महान्।१४६।

## ब्रह्मणि सर्वज्ञनिषेधवर्णनम्

ब्रह्मापि न हि सर्वज्ञः, सावित्री लोलुपः सदा।
वृद्धावस्थां च सम्प्राप्तः, न [illegible] कुवासनाम् ॥१५०॥

## रामसर्वज्ञनिषेधवर्णनम्

यदि रामोऽपि सर्वज्ञः, सीतया हरणे सति।
कथं जनस्य पृच्छा सा, क्व गता सा प्रिया मम।१५१।
क्षणे क्षणे विलापादि, करोति मोह मूर्च्छया।
हा! सीते! इति हा! सीते! वदति तादृशं कथम् १५२
यदि स्वयं च सर्वज्ञः, सीत गवेषणं कुतः।
कथं युद्धादिकं कार्यं, कथं जीवविनाशता ॥१५३॥
वने कलङ्क सम्भ्रान्त्या, कथं त्यागं करोति सः।
कथं कलङ्क सम्भ्रान्तिः, कथं शुद्धिविधापनम्।१५४।
लवकुशौः समं युद्धं, करोति सर्वज्ञः कथम्।
स्वपुत्रौ न कथं ज्ञातौ, सार्वज्ञं तस्य कीदृशम्।१५५
भवदागममानाच, रामे [illegible] न हि।

कपिलोऽपि न सर्वज्ञः, अव्यक्ते ज्ञान स्वीकृताद्।१५६
अव्यक्ते जडरूपे च, ज्ञानधर्मौ मतौ कथम् ।
ऐश्वर्यबुद्धिसद्भावः, जडस्य घटते न हि ॥१५७॥
एकान्तनित्यतत्त्वानां, तन्मते प्रतिपादनम् ।
संसारबन्धमोक्षाश्च, योगाङ्गानाञ्च पालनम् ॥१५८॥
तत्सर्वं घटते नैव, कथं सन्यस्तधारणम् ।
आत्मनो व्यापकत्वे च, किमपि घटते न हि ॥१५६।
विरुद्धवस्तु स्वीकारे, विरुद्धस्योपदेशतः ।
कपिले नैव देवत्वं, युज्यते युक्त्यभावतः ।१६०॥
बुद्धोऽपि नैव सर्वज्ञः, शून्यवादप्ररूपणाद् ।
पदार्थेषु च सर्वत्र क्षणिकत्व प्रज्ञापनाद् ॥१६१॥
शून्यवादस्य सिध्यर्थं, प्रमाणं यदि दीयते ।
तदा शून्यमशून्यं स्याद्, शून्यं चेन्न प्रमाणकम्१६२
प्रमाणं यदि नो शून्यं, तर्हि वस्तु प्रसिध्यति ।
वस्तुत्वं चेत्प्रमाणस्य, शून्यवादो न तिष्ठति ।१६३
क्षणिकेऽप्यन्वयि द्रव्यं, भवन्मते न विद्यते ।
कृतस्य च विनाशेन, अकृतस्यागमः सदा ॥१६४॥

हिंस्यहिंसकभावानां, स्मृत्यादि शुद्धवस्तूनाम् ।
कार्यकारणतत्वानां, पोष्यपोषकतादीनाम् ।१६५।
व्यवहारो विभज्येत, क्षणिकवाद स्वीकृताद् ।
योगानां पालनं व्यर्थं, बुद्धसेवा च निष्फला ॥१६६॥
उपास्योपासकादीनां, व्यवहारो न युज्यते ।
पूज्यपूजकभावानां, सेव्यसेवकतादीनाम् ॥१६७॥
स्वशरीरार्पणेनैव, तत्रस्थ जीवजन्तूनाम् ।
विनाऽऽज्ञां तत्प्रदानेन, करुणा कवली कृता ॥१६८॥
मांसभक्षणकर्तव्ये, हिंसाऽनुमतिरागता ।
असत्य प्रतिपादित्वे, मृषावादोऽपि सेवितः ॥१६९॥
जीवादत्तं कृतं तेन, देहस्थ जीवदानतः ।
अन्यद् व्रतमपि त्यक्तं, निन्दादिकरणेन च॥१७०।
एवं रीत्या विचारे च, कर्तव्ये नहि देवता ।
बुद्धस्यापि प्रमन्तव्या, तपसि हीनशक्तिता ॥१७१॥
स्त्रीसङ्गः काममाचष्टे, द्वेषं चायुधसंग्रहः ।
मोहं चैवाक्षसूत्रादि, अशौचं च कमण्डलुः ॥१७२॥
भक्तानुग्रहकर्तारः, दुष्ट-मनतत्पराः ।
अवतारं गृहीतारः, युगे युगे च सर्वदा ॥ १७३ ॥

वृन्दावनमिदं विद्धि, मां विद्धि मधुसूदनम् ।
आत्मानं राधिकां विद्धि, यथेष्टं भो समाचरेः १७४
गुरवस्तन्मते चैव, दृश्यन्ते भोगलुब्धकाः ।
त्यागलेशो न वै किञ्चित्तदनुयायिनां तथा १७५
तरणोपायता नैव, त्यागाद्विना न मुक्तता ।
लोहनावं समारुह्य, तरिष्यंति कथं नु ते ॥१७६॥
देवाश्च विषयाधीनाः, गुरौ च यमशून्यता ।
भोगप्रधानता धर्मे, कुत्र तरणसाधनम् ॥१७७॥
हिंसाप्रधानयागादि, धर्माच्च न तरन्ति ते ।
अतस्तद्देवगुर्वाद्याः, तारणे न समर्थकाः ॥१७८॥

## श्रीकृष्णादौ जैनमतानुसारि विचारः

वस्तुगत्या विचारे च, श्रीकृष्णः पुरुषो महान् ।
वस्त्रहरणकार्यं तत्कृतं तेन कदापि न ॥१७९॥
कामिना किन्तु केनापि, स्वेन्द्रिय परिपुष्टये ।
समालम्ब्य च श्रीकृष्णं, स्वार्थसिध्यै च दर्शितं १८०
परस्त्री त्यागिना तेन, स्पष्टं परधनं न हि ।
परनिन्दा कृता नैव, सदाचारी च सर्वदा ॥१८१॥

जैनदर्शनविख्यातः, श्रूयतां तत्कथानकम् ।
भव्यजीवावबोधार्थं, कथ्यते शुद्धभावतः ॥१८२॥
श्रीमती रुक्मिणीदेवी, एकदा दैवयोगतः ।
महामुनिश्चतुर्ज्ञानी, यमुना निकटे स्थितः ॥१८३॥
साधुर्मासोपवासी सः, देहेऽपि ममता नहि ।
ज्ञानीध्यानी महात्यागी,स्वाध्यायध्यानतत्परः॥१८४॥
तस्यागतिश्च विश्रुत्य, वन्दनेच्छा महीयसी ।
यमुनापयसा वृद्धिः, तदानीं सा समागता ॥१८५॥
कया रीत्या च गन्तव्यं, इति चिन्ताकुला यदा ।
तदा श्री[illegible]णसामीप्ये,सा [illegible]मागत्य पृच्छति॥१८६॥
वन्दनायै मुनीनां च, गमनेच्छा गरीयसी ।
नद्याः पुरसमुत्तारे, उपायः प्रतिपाद्यताम् ॥१८७॥
कृष्णो वदति भो देवि ! तत्र गत्वैवमुच्यताम् ।
ब्रह्मचारी पतिर्मे चेदेकी भवतु द्वे तटे ॥१८८॥
सा गत्वा च वदत्येवं, यमुने ! शृणु मद्वचः ।
मे पतिर्ब्रह्मचारीचेदेकी भवतु ते तटे ॥१८९॥
तदानीं तत्र संजातमाश्चर्यं हृदये महद् ।
गत्वा मह[illegible]नान्नत्वा,आहारः प्रा[illegible]भितः॥१९०॥

मुनिना पारणं चैव कृतं दत्ता च देशना ।
धर्मध्यानं समाचर्य, प्रत्यागमनमिच्छति ॥१६१॥
यमुनाजलवृद्धिश्च, आगता बहुवेगतः ।
किं कर्त्तव्ये मुढ़ा सैव, शोचति मानसे बहु॥१६२॥
तदानीं स मुनिर्वक्ति, यातु नदी समीपके ।
गत्वा चैवं प्रवक्तव्यं,शृणोतु यमुने ! च भोः ॥१६३॥
मुनिः सदोपवासी चेद् द्वे तटे च तदा तव ।
एकी भवतु शीघ्रं वै,जातं तदा च तादृशम् ॥१६४॥
रुक्मिणीमानसे शङ्का, जाता तदा च श्रूयताम् ।
द्वात्रिंशत्सहस्राणां च,स्त्रीणां सदोपभोगके ॥१६५॥
ब्रह्मचारी कथं स स्यादुपवासी मुनिः कथम् ।
आहारग्रहणेनैव, मुनिना पारणं कृतम् ॥१६६॥
सर्वजनसमक्षेऽपि, कथमेतादृशं भवेद् ।
इतिशङ्का समाक्रान्ता,रुक्मिणी सा गृहे गता ॥१६७॥
गृहकार्ये मनः किञ्चिद्, व्यग्रं न महासती ।
चिन्ताग्रस्त स्वचित्तेन, विचारं वितनोति सा ॥१६८॥
सर्वज्ञो भगवांश्चैव, द्वाविंशतितमो जिनः ।
जिनेन्द्रो नेमिनाथश्च, तदानीं स समागतः॥१६९॥

अष्टादश सहस्त्रैश्च, साधुवृन्दैः समायुतः।
देवेन्द्रनरनाथैश्च, आगतो रैवताचले ॥२००॥
वनेशो द्वारिकां गत्वा, श्रीकृष्णमवर्धापयद्।
प्रदाय पारितोष्यं च, श्रीकृष्णेन विसर्जितः॥२०१॥
वन्दनार्थं स्वकावासाद्[१], यादवैः कुलकोटिभिः।
रथाश्वहस्ति सामग्र्या, राज्ञां च समुदायकैः॥२०२॥
तौर्यत्रिकैश्च संयुक्तः, बन्दिवृन्दैः समाश्रितः।
समुद्रविजयाद्यैश्च, दशार्हैः सुप्रतिष्ठितः ॥२०३॥
देवनिर्मित पर्षद्यां, श्रीकृष्णः स समागतः।
भगवन्नेमि नाथं च, कृतवांश्च प्रदक्षिणाम् ॥२०४॥
वन्दित्वा च नमस्यित्वा, यथा योग्यासने स्थिताः।
प्रधानपुरुषार्थस्य, साधनीं धर्मदेशनाम् ॥२०५॥
श्रुत्वा प्रफुल्लिताः सर्वे, धर्मध्यानेषु तत्परा।
केचिच्चारित्र-सद्धर्मं, केचिच्च श्राद्धधर्मकम् ॥२०६॥
केचित्सम्यक्त्व सद्भावं, केचिन्मार्गानुसारिताम्।
स्व स्व योग्यं च सम्प्राप्य, उत्थिता राजपौरुषाः॥२०७॥

१—द्वारिकातः

समयं रुक्मिणी प्राप्य, पृच्छति जगदीश्वरम् ।
भगवान्तद्विचारश्च, ज्ञात्वोत्तरमदापयद् ॥२०८॥
सहस्राणां च द्वात्रिंशत्स्त्रीभोगे ब्रह्मचारिता ।
आहारे क्रियमाणे च, उपवासी मुनिःकथम् ॥२०९॥
इत्यारेका च ते स्वान्ते, जाता सा महती खलु ।
परमार्थमजानाना, परिप्रष्टुं समागता ॥२१०॥
उत्तरं श्रूयतां देवि ! श्रुत्वा चैवावधार्यताम् ।
परस्त्री सर्वथा त्यागी,देशतो ब्रह्मचार्यतः ॥२११॥
द्वेधा ब्रह्मव्रतं प्रोक्तं, सर्वतो देशतस्तथा ।
मुनीनां सर्वतो ज्ञेयं, नवकोटि विशुद्धितः ॥२१२॥
परस्त्री त्यागसद्भावाद्देशतो ब्रह्मचारिता ।
गृहमेधिषु सम्प्रोक्ता, देशतस्त्याग भावतः ॥२१३॥
तव स्वामी च श्रीकृष्णः, ब्रह्मचारी स देशतः ।
परस्त्री सर्वथात्यागी,मन्तव्यो नात्र संशयः ॥२१४॥
स महापुरुषो ज्ञेयः, सम्यग्दृष्टिश्च सर्वथा ।
तीर्थकृन्नामकर्मत्व, बन्धकृत्पुरुषोत्तमः ॥२१५॥
इति भागवतीं वाणीं, श्रुत्वा प्रमादवत्यन्दू ।
मुनिविषयिणीं शङ्कां, निर्णेतुं सा प्रवर्त्तते ॥२१६॥

मुनेराहारकारित्वं, चारित्रपरिपुष्टये ।
न तु विषयपुष्ट्यर्थं, ज्ञातव्यं मानसे सदा ॥२१७॥

विनाहारं च देहं न, विना देहं न योगता[1] ।
विना योगं च ध्यानं न,विना ध्यानं न मुक्तिता ॥२१८॥
अतो देहस्य रक्षायै, आहारश्च मुनेर्मतः ।
विग्रहं धर्महेतुश्च, मुनीनां सर्वदा मतम् ॥२१९॥
राजमार्गे यथा गर्त्ता, पतिता दैवयोगतः ।
येन केन प्रकारेण, पूर्यते सुप्रयत्नतः ॥२२०॥
यदि च नैव पूर्येत, तदा हानिः प्रजायते ।
जनानां गच्छतां मार्गे, अतःसमीकरी मता ॥२२१॥
मुनीनां च तथा ज्ञेया, क्षुधागर्त्ता महीयसी ।
क्षुधागर्त्तां विना भृत्वा,चारित्रं नैव पाल्यते ॥२२२॥
अतः सरसवैरस्यैः, प्रासुकैरन्नपानकैः ।
क्षुधागर्त्ता प्रपूर्येत, चारित्रपरिपुष्टये ॥२२३॥
षट्कारण प्रभावेन, आहारश्च मुनेर्मतः ।
अन्यथाऽऽहारकर्त्तव्ये,प्रायश्चित्त बिधापनम्॥२२४॥

---

१—चारित्रता

इत्यादि देशनां श्रुत्वा, रुक्मिण्यादिकसज्जनाः ।
शङ्कासमाधितां कृत्वा,निःसंशया गृहे गताः ॥२२५॥
तद् दृष्टान्तेन ज्ञातव्यं श्रीकृष्णो नैव लम्पटः ।
गोपवधूदुकूलानां, चोरोऽपि नैव कर्हिचिद् ॥२२६॥
किन्तु कामिजनेनैव, तेन भवाभिनन्दिना ।
विषयवासना पूर्त्यैं,श्रीकृष्णोऽपि विनिन्दितः ॥२२७॥
श्रीरामोऽपि महात्मासौ,परस्त्रीत्यागभावतः ।
अन्ते सर्वं परित्यज्य,निर्ग्रन्थोऽजनि सर्वथा ॥२२८॥
निरतिचारचारित्रपालने तत्परोऽभवत् ।
प्रपाल्य शुद्धचारित्रमासनं सेवितं महद् ॥२२९॥
प्राणायामं च योगाङ्गं, धारणां प्रतिपद्य च ।
भरतादि त्रिकोट्यैश्च, मुनिभिः सह संयुतः ॥२३०॥
अनेकाभिग्रहं कुर्वन्, विरतिं प्रतिपालयन् ।
शमभावेन स्वात्मानम्भावयन् विमलाचले ॥२३१॥
समागतश्च तत्रापि, तृतीयं ध्यानमाश्रयन् ।
योगनिरोधनं कृत्वा, शैलेशीं परिप्राप्तवान् ॥२३२॥
चतुर्थध्यानतां ध्यात्वा, सर्वैः सह शिवं गतः ।
अतः सोऽपि विशुद्धात्मा,माननीयश्च सर्वथा ॥२३३॥

अतो रामोऽपि सर्वज्ञः, जातश्चयोगपालनाद् ।
न तु पूर्वदशायां स,मन्तव्य इति भाव्यताम्॥२३४॥
रामकृष्णादिका व्यक्तिः, नासीदिह च भारते ।
व्युत्पत्त्यर्थं समाश्रित्य, वदन्ति च समाजिनः ॥२३५॥
वसति यत्र त्रैलोक्यं, वसुदेवः स सम्मतः ।
आत्मनि रमयन् सोऽपि,श्रीरामः परिभाषितः॥२३६॥
स तु पृथग् न व्यक्तिः स्यादेक एव स ईश्वरः ।
परमात्मा च मन्तव्यः,न तु रामादिका अपि ॥२३७॥
उ० इति व्युत्पत्ति मन्तव्ये,सर्वथाऽनर्थता भवेत् ।
हिंसा-नन्दो दयानन्दः, इति कथं न प्रोच्यते॥२३८॥
दय धातुर्गतौ हिंसा, करणदानतादिषु ।
हिंसार्थं च समाश्रित्य, दयते हिंसते तथा॥२३९॥
दयानन्दः स विज्ञेयः व्युत्पत्त्यर्थाश्रयात्ततः ।
अतो योगरूढोऽर्थोऽपि,मन्तव्यः सर्वसज्जनैः ॥२४०॥
इतिहासप्रसिद्धानां, अपलापो न जायते ।
रामकृष्णादिकाः सर्वे,जातास्ते पुरुषोत्तमाः ॥२४१॥
रामकृष्णौ प्रसिद्धौ तौ, सर्वत्र संस्तुतौ मतौ ।
महात्मानौ च विज्ञेयौ,विवादः कस्यचिन्नहि ॥२४२॥

एतद्विषयलीलादि कार्यं, बीभित्सरूपकम् ।
कर्त्तव्यं न हि केनापि, धर्मध्यानं विधीयताम् ॥२४३॥
बुद्धोऽपि न हि सर्वज्ञः, पूर्वं सर्वं प्रपञ्चितम् ।
[illegible]प्रादि व्यक्तौ च सार्वज्ञ्यं नैव युज्यते ॥२४४॥
अथ तेषु क्षीणमोहस्तु, विनाऽन्यो [illegible]न्न विद्यते ।
यः सर्वज्ञः स चेशो वै, जिनेन्द्र एव मन्यताम् ॥२४५॥
जगन्निर्माणकर्त्तारं, मन्यन्ते केऽपि मोहतः ।
ईश्वरो न जगत्कर्त्ता, यथार्थं परिभाव्यताम् ॥२४६॥

इति श्रीशास्त्रविशारद जैनाचार्य्य जगत्पूज्य
बङ्गदेशादौ अहिंसाधर्मोद्धारकानेकराजसद्ध-
र्मोपदेशक पूज्यपादश्रीविजयधर्मसूरी-
शिष्याग्र्येण न्यायविशारद न्याय-
तीर्थोपाध्याय मंगलविजयेन
विरचिते आर्हतधर्म्मप्रदीपे
सर्वज्ञनिरूपण नामा
दशम प्रकाशः
समाप्तः ॥

## ॥ अथैकादशम प्रकाशः ॥

### जगत्कर्त्तृत्ववादनिरूपण-

दशमे सार्वसिद्धिश्च, प्रकाशे प्रतिपादिता ।
जगत्कर्त्तृत्वमीशस्य, किमस्तीति निगद्यते ॥१॥
पृथिवीपर्वतादीनां, कर्त्ता स्यात्कोऽपि बुद्धिमान् ।
कार्यत्वादिति मानं च, घटकर्त्ता कुलालवत् ॥२॥
यद्यज्जगति कार्यं तन्नो भवेत्कर्त्तृणा विना ।
यथा घटादिकं कार्यं, तथा च पर्वतादिकम् ॥३॥
यन्नेवं तन्न चैवं च, व्योमादिकं यथा मतम् ।
तादृशकार्यनिर्माणे, सामर्थ्यं चापरस्य नो ॥४॥
पर्वतादिषु कार्यत्वं, प्रत्यक्षं चानुभूयते ।
तत्कर्त्तृत्वं च मन्तव्यं, स एव परमेश्वरः ॥ ५ ॥
केनचिदत्र प्रोक्तं च, जगत्कर्त्ता महेश्वरः ।
अदेहत्वान्नभो वच्च, इत्यपि नैव युक्ति युक् ॥६॥

मद्दर्शनाऽनभिज्ञस्य, वचनं तादृशं मतम् ।
पृच्छामि प्रश्नकर्तारं, श्रूयतां सावधानतः ॥ ७ ॥
धर्मीश्वरं प्रतीतं वा, अप्रतीतं भवन्मते ।
मन्यते चाप्रसिद्धं चेद्धेतुस्तदा न युज्यते ॥ ८ ॥
अप्रतीतेश्वरो धर्मी, जगत्कर्तृत्व साध्यकम् ।
अशरीरत्व हेतुश्च, प्रयोगः सफलो न वै ॥ ९ ॥
अप्रतीतेऽशरीरत्वं, क्व स्थानं लभते वद ।
हेतुना नैव युज्येत, विचार्यं मानसे सदा ॥१०॥
धर्मी यदि प्रतीतः स्याज्जगन्नाथस्य वै तदा ।
यत्प्रमाणात्प्रतीतश्च, स्वकृद्देहस्य तेन वै ॥११॥
कथं ज्ञानं न जायेत, जगत्कर्तृत्वरूपतः ।
अत ईशोऽपि मन्तव्यः, नित्यः स एक एव तु ॥१२॥
नैक कर्त्तुश्च स्वीकारे, कार्ये विमतिता भवेत् ।
अतोऽनेकेन मन्तव्याः, जगत्कल्याणमिच्छता ॥१३॥
तेषु चाव्यापकत्वश्चेत्सर्वत्र रचनं कथम् ।
अतो व्यापकता मान्या, जगत्कर्तृत्वकांक्षिभिः॥१४॥
सर्वज्ञः सोऽपि ज्ञातव्यः, सर्वकारणजानतः ।
सर्वकार्यस्य निर्माणमन्यथा तस्य नो भवेत् ॥१५॥

उत्तरपक्षः—

मानं नैयायिकं दत्तं, जगत्कर्त्तृत्व साधकम् ।
व्याप्तेः प्रमाणतः सिद्धिः, यावत्तु न विधीयते ।१६।
ईश्वरेषु च तावद्वै, कर्त्तृत्वं नैव सिध्यति ।
प्रश्नावकाशता तत्र, जायते च मनीषिणाम् ॥१७॥
त्वदिष्टो जगदीशः किं, सशरीरोऽन्यथा भवेत् ।
शरीरधारकेशे च, प्रश्नावकाशता बहु ॥१८॥
दृश्यशरीरधारी किं, सदास्मदादिवत्किमु ।
पिशाचवच्च किं वा स्याद् दृश्य-विग्रही किमु ।१९।
दृश्यशरीरधारित्वे, [illegible] न प्रमाणता ।
केषाञ्चिदपि जीवानां, दृष्टिगोचरता न हि ॥२०॥
यदि दृश्यशरीरी चेत्तदा तु चास्मदादिवत् ।
प्रत्यक्षः किं न सर्वेषां, दृश्यते च क्षमातले ॥२१॥
शरीराभावतश्चैव, शरीरी नैव मन्यते ।
ईशकर्त्तृत्ववादोऽपि, कदापि नैव युज्यते ॥२२॥
तृणाभ्राशनिपातादि, इन्द्रधनुष्कवस्तूनाम् ।
वनस्पत्यादिकानाञ्च, उत्पादो दृष्टिगोचरः ॥२३॥
कार्यत्व हेतुना तत्र, ईश्वरे कर्त्तृता न हि ।

हेतौ च व्यभिचारित्वमनुमानेऽप्रमाणता ॥२४॥
अदृश्ये विग्रहे मान्ये, तत्रारेका तु जायते ।
महात्म्यं तादृशं तत्र, देहे सति न दृश्यते ॥२५॥
भाग्यहीनाः स-मे किंवा, पश्यति न हि वैग्रहम् ।
तादृगद्भुतमाहात्म्यं, ईशस्य किमु दृश्यते ॥२६॥
इत्येवमपि वाक्यं तु, प्रमाणविफलं मतम् ।
शपथैर्माननीयं स्यादन्या गति र्न विद्यते ॥२७॥
जगत्कर्त्तु[१] र्महात्म्यस्य, सिद्धिरदृश्यदेहतः ।
अदृश्य देह सिद्धिश्च, तादृगीश महात्म्यतः ।२८॥
इत्यन्योन्याश्रयो दोषः महात्म्यस्वीकृतौ भवेत् ।
अतो हि प्रथमः पक्षः, नादर्त्तव्य कदाचन ॥२९॥
द्वितीय पक्षस्वीकारे, संशयस्तत्र जायते ।
आकाश...पवत्तस्यात्सर्वथा ऽविद्यमानतः ॥३०॥
अत ...न्नैव दृश्येत, भाग्यस्य न्यूनताऽथवा !
इति संशयसद्भावे, निर्णयो नैव जायते ॥३१॥
अना...शोऽप्यदेहोऽस्ति, वैषम्यं तन्मते भवेत् ।
...तदार्ष्टान्तिके चैव, ज्ञातव्ये ज्ञानमिच्छता ॥३२॥

१—दृष्टान्त ।

घटपटादि कार्याणि, कृतानि दृश्य देहिना ।
पृथिव्यादीनि कार्याणि, अदेहिना कृतानि वै ।३३।
इति विषमता ज्ञेया, युक्ति वैषम्ययोगतः ।
तथाप्याकाशवत्तस्य, अदेहीशस्य सर्वथा ॥३४॥
जगन्निर्माणसामर्थ्यं, कदापि नैव सम्भवेत् ।
कार्यसिद्धेर्विना देहं, मन्तव्ये दोषदुष्टता ।३५।
वियतेदं जगच्चैव, कृतमित्यपि मन्यताम् ।
युक्ति शून्यं यथा तादृक्, तथात्र परिदृश्यते ।३६।
जगन्निर्माणकर्त्तुश्च, अदेहित्वे नस्वीकृतौ ।
अनवस्थात्व दोषोहि, जायते नात्र संशयः ।३७।
यो यः शरीरधारी स्यात्सावयवः स दृश्यते ।
यश्च सावयवो दृष्टः तत्कर्त्ता सशरीरवान् ।३८।
सोऽपि सावयवः किं न तत्कर्त्ता देहवान्भवेत् ।
एवं रीत्या च मन्तव्ये अनवस्था भवेद् ध्रुवम् ॥३९॥
तृणाभ्रविद्युदुल्कादीन्द्रधनुरादि वस्तूनाम् ।
वनस्पत्यादिकानाञ्च उत्पाद ईश्वरं विना ॥४०॥
अधुनाऽपि च दृश्येत, ततः प्रत्यक्ष बाधिते ।
धर्मिणि हेतु प्रायोगाद्बाधहेतुर्निगद्यते ॥४१॥

समागते च बाधत्वे, बाधिते नानुमानता ।
अतोऽनुमानताऽभावान्नेो संसार कर्त्तृता ॥४२॥
अनेकेश्वर कर्त्तृत्वे; वैमत्यं जगतो भवेत् ।
इत्यपि दोषता ज्ञेया, युक्ति विरुद्धता खलु ॥४३॥
पिपीलिकाश्च सम्भूय, सञ्चयन्ति कणादिकम् ।
नैक वर्धकिना चैव, सम्मील्य क्रियते गृहम् ॥४४॥
नैक सुवर्णकाराश्च, कुर्वन्ति भूषणं तथा ।
नैकाधिकारिणा चैव, न्यायः सम्मील्य दीयते ॥४५॥
न्यायालयेषु सन्मत्या तद्दृष्टान्तं विचार्यताम् ।
अल्पज्ञानामियं रीतिः, सर्वज्ञे का विचारणा ॥४६॥
अतो वैमत्य दोषेण, सर्वज्ञैकस्य मान्यता ।
प्रत्यक्षादि प्रमाणेन, विरुद्धा सर्वथा मता ॥४७॥
तत्रापि यदि कथ्येत, तत्कार्यमीशकर्त्तृकम् ।
प्रत्यक्षाद्यपलापानामन्धश्रद्धापि कीदृशी ॥४८॥
प्रत्यक्ष दृश्यमानानां, सर्वदा कार्य कारिणाम् ।
कृत्वानादरमेकेशकर्त्तृकं यदि मन्यते ॥ ४९ ॥
तदा घटपटादीनां, कुलालादि विधायिनाम् ।
पुत्रकर्त्तृ पितृणाञ्च, कर्त्तृत्वं मन्यते कथम् । ५० ।

एकेशेन कृतं सर्व, व्यर्था कुलालयत्नता ।
मातापित्रोस्तु संयोगः,निष्फलो जायते सदा ।५१।
पित्रोरुपकृतिश्चैव, कथं पुत्रेण मन्यते ।
तत्रेश्वरस्य कर्त्तृत्वं, पितृणां न कदाचन ॥५२॥
नवमासान्तपर्यन्तं, मात्रोदरेषु धारितः ।
प्रसूतिर्योनिद्वारा वै, मात्रा कृता च प्रेमतः ॥५३॥
ईश्वरेण न किञ्चिच्च, कार्यं कृतं कदाचन ।
उपकारं कथं तस्य, मन्यामहे वयं तथा ॥५४॥
स्त्रीसंयोगादिकं सर्वं, दण्डभ्रमि क्रियाऽपि वै ।
कृता चैकेश्वरेणैव, सर्वेषां निष्फलः श्रमः ॥५५॥
स्यादेतत्कुम्भकारादेः, कारणं न निषिध्यते ।
किन्त्वन्येषाञ्च सर्वेषां, कार्याणां कारको विभुः।५६॥
मक्षिका मधुमण्डादि, कार्यं कुर्वन्ति सर्वदा ।
सर्वे जनाः प्रपश्यन्ति, अपलापश्च कीदृशः ॥५७॥
वैमत्यस्य च सद्भावादेकमीशञ्च कल्पते ।
तर्हि त्वत्कल्पना ज्ञेया, कृपण व्यय सादृशी ॥५८॥
यथा प्रलोभि जीवश्च, धनव्ययश्च भोजने ।
दृष्ट्वा गृहं परित्यज्य, देशान्तरे गतः खलु ॥ ५९॥

तत्सदृशमिदं ज्ञेयं बुद्धि मूसल सादृशी ।
तीक्ष्णबुद्धेरभावेन, कल्पना तादृशी कृता ॥६०॥
ईश्वरो व्यापकश्चैव कल्पनेति न युज्यते ।
देहाच्च व्यापकत्वं वै, अथवा ज्ञानतो भवेत् ॥६१॥
शरीरव्यापकत्वे च बाधः प्रत्यक्षतो भवेत् ।
सर्वजगति सर्वत्र तिष्ठतीति प्रजल्पने ॥६२॥
अनन्तः प्राणिनश्चान्ये, अजीवाश्च धरातले ।
तव मते क्व तिष्ठन्ते, अवकाशो न कुत्रचित् ॥६३॥
पदार्थाः सन्ति नान्येऽपि वक्तुमिति न युज्यते ।
नैयायिकस्य ग्रन्थेषु, त्वयैवं प्रतिपादिताः ॥६४॥
तव मतेऽपरे जीवाः, सर्वे ते व्यापका मताः ।
अतो वद समेषाञ्च, अवकाशः क्व विद्यते ॥६५॥
देहव्यापकमन्तव्ये, अशुचि स्वादनं भवेद् ।
नारकवेदनादीनां, अनुभवोऽपि सर्वदा ॥६६॥
कुत्रचित्स्त्रीषु कर्हिचित्सम्भोगोऽपि प्रजायते ।
गुह्य स्थानस्य सम्बन्धाव्यापकत्वे महाक्षतिः ॥६७॥
सम्भोगोऽपि सदा ज्ञेयः परस्त्री पातकी भवेत् ।
विषया नरक जीवानामीप्सिता न भवेत्कदा ॥६८॥

सोऽपि सम्भोगसम्बन्धः निरन्तरं प्रजायते ।
नियमस्तु गृहस्थानां परस्त्री विषये सदा ॥६९॥
तवेशस्य व्रतं नास्ति, महच्चित्रमिदं मतम् ।
अनेकदोषसद्भावे, व्यापकत्वं न देहतः ॥७०॥
सर्वव्यापकता ज्ञानादीशस्य यदि मन्यते ।
तदा क्षतिर्न जैनानामिष्टापत्तिस्तु सर्वदा ॥७१॥
जैनैर्व्यापकता मान्या कैवल्यज्ञानद्वारतः ।
किन्तु तवैव सिद्धान्त व्याघातः सर्वथा भवेत् ॥७२॥
विश्वतश्चक्षुरुत विश्वतो मुखं, विश्वतः पाणि ।
उत विश्वतो बाहु, विश्वतः पादः इति श्रुतिः ॥७३॥
देहव्यापकता सिद्धिः करोति सर्वथा श्रुतिः ।
ज्ञानव्यापकता चैव भवद्भिर्मन्यते कथम् ॥७४॥
कथ्यते यदि सर्वत्र व्यापकत्वं न मन्यते ।
नियतस्थान मन्तव्ये, कार्यसिद्धिः कुतो भवेत् ॥७५॥
अनियत प्रदेशानां, कार्यं कुर्यात्कथं सदा ।
मन्तव्यो व्यापकश्चैव, सिद्धिः स्यादन्यथा नहि ॥७६॥
तदप्यथारूमन्तव्यं, प्रश्नानामवकाशतः ।
जगद्विरचनं देहात्किंवा, सङ्कल्पतो मतम् ॥७७॥

१—शुक्लयजुर्वेद

अनन्तकालजातेऽपि, जगत्पूर्णं न रच्यते ।
जगन्निर्माणता पूर्णा, कदापि नैव सम्भवेत् ॥७८॥
स्वीकारे प्रथमे पक्षे, पृथिवी पर्वतादीनाम् ।
अनन्तानं पदार्थानां, निर्माणं क्रमतो भवेत् ॥७९॥
देहव्यापकता पक्षः, भवद्भिरेव भक्षितः ।
सङ्कल्प पक्षस्वीकारे, व्यापकत्वं न सिध्यति ॥८०॥
नियतदेशिकत्वेन, कार्यं सर्वं विधीयते ।
यथा विद्याधरा देवाः, स्वस्थानस्थाश्च सर्वदा ॥८१॥
दूरस्थान्यपि कार्याणि, करोति चैक हेलया ।
तथा च भवदीशो न, नियत दैशिकस्थः किम् ॥८२॥
सङ्कल्पतश्च तत्कार्यं, किं न कुर्यादथो वद ?
दोषापत्तिश्च नास्त्येव, व्यापको मन्यते कथम् ॥८३॥
नियमित प्रदेशस्थे, श्रुति बाधः प्रजायते ।
संसारव्यापकत्वेतु, युक्ति बाधो महान्भवेत ॥८४॥
ज्ञानस्याप्राप्य कारित्वे, दोष लेशो न विद्यते ।
यन्मते प्राप्य कारित्वं, तन्मतेऽनेक दोषता ॥८५॥
अशुचिस्वादनादीनां, नारक वदनादीनाम् ।
अन्धकाराद्भूतीनां, परस्त्रीसङ्गमादानाम् ॥८६॥

कुसुमचन्दनादीनां, रसवत्यादि वस्तूनाम् ।
सर्वदेश्वरज्ञानं तु, व्यापकत्वेन सम्मतम् ॥८७॥
ज्ञानस्य प्राप्यकारित्वमपि तेषां मते मतम् ।
अतः पूर्वोक्तवस्तूनां, अनुभवो न किं भवेत् ॥८८॥
तदनुभवकर्त्तुश्च, मन्यते चेशता कथम् ।
ज्ञानव्यापकता चैव, भवन्मते न युक्तियुक् ॥८९॥
जगत्कर्त्ता च सर्वज्ञः, इति कथं त्वयोच्यते ।
प्रत्यक्षादि प्रमाणेन, सिध्यति न कदाचन ॥९०॥
अक्षसम्बद्धवस्तूनां, ग्राहकमक्षजं[1] मतम् ।
अतीन्द्रियश्च सार्वज्ञ्यं, कथं तेनैव गृह्यते ॥९१॥
जगत्कर्त्तुश्च सार्वज्ञ्यं, प्रत्यक्षादिकमानतः ।
अन्येनापि प्रकारेण, सिध्यति न कदाचन ॥९२॥
अनुमानपरोक्षेण, प्रमाणेन न सिध्यति ।
व्याप्तिज्ञानञ्च कर्त्तव्यं, सर्वदा लिङ्गलिङ्गिनोः ॥९३॥
जगत्कर्त्तुश्च सार्वज्ञ्य, सिद्धौ हेतुर्न सम्भवेत् ।
अतो हेतोरभावेन साध्यसिद्धिः कथम्भवेत् ॥९४॥

---

१—प्रत्यक्षं

ताहशीं मान्यतं विना जगद्विचित्रता न वै ।
जगद्वैचित्र्य सिद्ध्यर्थं, तस्य सर्वज्ञता मता ॥९५॥
तद्युक्तिरपि नादेया, सुहृदां हृदये खलु ।
विचारस्यावकाशस्तु, मीलत्यपि पदे पदे ॥९६॥
जगद्विविधता ज्ञेया, स्थिरजङ्गमभेदतः ।
स्थावरमपि द्वैधं स्यात्सचेतनमचेतनम् ॥९७॥
सचित्तजङ्गमानाश्च, स्थावराणाश्च सर्वदा ।
स्वस्व कर्मादि सामग्र्या, वैचित्र्यं जायते किल ॥९८॥
जडस्थावर संसारे, वैचित्र्यं जीवकर्मतः ।
कारणपञ्चता योग्यसाधनसम्पदां किल ॥९९॥
योगे कारण साकल्यं, अनादित्व प्रवाहतः ।
विज्ञेयं स्थितमस्तीति, ईशस्य न प्रयोजनम् ॥१००॥
जगद्वैचित्र्य सिध्यर्थं, व्यर्था चेश्वरसार्वता ।
तेन विनापि सर्वत्र, वैचित्र्यं परिसिध्यति ॥१०१॥
अनुमानं न सिध्यर्थं, आगमं तु विचार्यते ।
आगम ईशकृत्किंवा, अन्येनापि कृतं भवेत् ॥१०२॥
स्वीकारे प्रथमे पक्षे, सार्वज्ञ्यसिद्धिता न वै ।
तदेवं दर्शयिष्यामि, शृण्वन्तु सावधानतः ॥१०३॥

महात्म्ये न्यूनता यायात्, स्वयं स्वगुणगानतः ।
महात्मनो न युज्येत, सर्वज्ञोऽहं प्रजल्पनम् ॥१०४॥
आगमो मयका चैव, कृत इति च मन्यते ।
अभिमानित्व सूचत्वं, वाक्यं नेशस्य शोभते ॥१०५॥
तथापि यदि मन्येत, आगमश्चेश्वरैः कृतः ।
वाक्यसमूहकं शास्त्रं, पदसमूहवाक्यता ॥१०६॥
पदानि वर्णसन्दोहः, वर्णाः तात्वादि सम्भवाः ।
स्थानं देहं तु विज्ञेयं, अशरीरे न युज्यते ॥१०७॥
अदेहीशे च स्वीकारे, खण्डूययुक्तिः प्रदर्शिता ।
जगन्निर्माणकर्त्तुश्च शरीरं नैव सांप्रतम्[1] ॥१०८॥
अदेहस्य च मन्तव्ये, शास्त्रसिद्धिस्तुनो भवेत् ।
शास्त्र वर्णात्मकं सर्वं, कथं तेन विरच्यते ॥१०९॥
उपायेनैव केनाऽपि, ईशकृतं न युज्यते ।
ईशकृतं कथं तर्हि, शास्त्रमिति त्वयोच्यते ॥११०॥
स्वीकारे चापरे पक्षे, शास्त्रकृत विभिन्नतः[2] ।
शास्त्रकारश्च सर्वज्ञः, असर्वज्ञोऽथवा मतः ॥१११॥

---

१—युज्यते २—अन्येन ।

सर्वज्ञपक्ष स्वीकारे, द्वौ सर्वज्ञौ समागतौ ।
एकः संसारकर्त्ता वै, शास्त्रकर्त्ता द्वितीयकः ॥११२।
द्वयोः सार्वज्ञ्य मन्तव्ये, मूलक्षतिः समागता ।
ईश्वर एक एवेति, मान्यता भवतां मते ॥११३॥
द्वयोः सार्वज्ञ्य सिद्ध्यर्थं साधनानां गवेषतः ।
चिन्तायामनवस्थास्यादिति सर्वं विचिन्त्यताम्।११४।
शास्त्ररचयिता नैव, सर्वज्ञ इति मन्यते ।
अल्पज्ञ कृत शास्त्रेषु, विश्वासो नैव जायते ॥११५॥
प्रमाणभूत सिद्धान्ते, विरोधस्तु कथं भवेत् ।
नातस्तत्रापि प्रामाण्यं, इति मनसि धीयताम् ।११६।
मा हिंस्यात्सर्वभूतानि, महावाक्यमिदं मतम् ।
आलभते पशुं चैव, अग्निषोमीय यज्ञके ॥११७॥
षट्शतानि नियुज्यन्ते, पशूनामध्यमेऽहनि ।
अश्वमे स्य वाक्याच्च,न्यूनैश्चपशुभिः त्रिभिः॥११८॥
नानृतं वचनं ब्रूयात्,इति मिथ्या च दर्शिता ॥११९॥
न नर्मयुक्तं वचनं हिनस्ति,
न स्त्रीषु राजन् न विवाह काले ।
प्राणात्यये सर्वधनापहारे,
पञ्चानृतान्याहुरपातकानि ॥१२०॥

इत्याद्यसत्यवक्तव्ये, पापं तु नैव मन्यते ।
तच्छास्त्रेष्वेव ज्ञातव्यं, पश्य तेषां तु धृष्टता ॥१२१॥
लोष्टवत्परद्रव्याणि, वचनमिति सूचकम् ।
अदत्त परिहारस्य, मन्तव्यं तन्मनीषिभिः ॥१२२॥
वेदश्रुत्यादि शास्त्राणां वाक्यानि न तु श्लोकतः ।
यद्यपि ब्राह्मणोधाष्ट्‍र्या,परकीयमादत्ते छलेन वा।१२३।
तथापि नादत्तादानं सर्वं ब्राह्मणेभ्यो दत्तम् ।
ब्राह्मणानां च दौर्बल्याद्व षलाः परिभुञ्जते ॥१२४॥
तस्मादपहरन् ब्राह्मणः, स्वमादत्तो स्वयमेव ।
ब्राह्मणो भुङ्क्ते, स्वं वस्ते स्वं ददाति ॥१२५॥
अपुत्रस्य गतिर्नास्ति, स्वर्गो नैव च नैव च ।
तस्मात्पुत्रमुखं दृष्ट्वा, स्वर्गं गच्छन्ति मानवाः।१२६।
अनेकानि सहस्राणि, कुमारब्रह्मचारिणाम् ।
दिवं गतानि विप्राणां, अकृत्वा कुलसन्ततिं ॥१२७॥
तादृशाश्च ह्यसम्बन्धाः, प्रलापाः प्रतिपादिताः ।
वेदश्रुतौ स्मृतौ चैव,कथितं प्रविलोक्यताम्॥१२८॥
अतः संसारनिर्माता, सर्वज्ञः परमेश्वरः ।
भूतभाविभवज्ञाता, भवर्ता जगदीश्वरः ॥१२९॥

स्वेच्छाचार्य सुराणां च, महोपद्रवकारिणाम् ।
तादृगीश्वरवादश्च, खण्ड्यता मादृशैर्जनैः ॥१३०॥
कथं कृतश्च निर्माणं, न ततः परमात्मता ।
स्वस्थितिं प्रतिषेद्धारं, ज्ञात्वा निर्माप्यते कथम्॥१३१॥
अतो नहि स सर्वज्ञः, दुष्टानां दण्डने सति ।
भक्तानां परित्राणे च, रागद्वेषस्य मुख्यता ॥१३२॥
इमे दुष्टा अतो दण्ड्याः, त्रातव्या न कदाचन ।
त्रातव्या भक्तकाश्चैव,न दण्ड्यान्ते कदाचन ॥१३३॥
अयं निजः परो वेति, गणना लघुचेतसाम् ।
उदारचरितानाञ्च, वसुधैव कुटुम्बकम् ॥१३४॥
अज्ञानां पक्षपातश्च, तादृशो नैव विद्यते ।
सर्वज्ञस्य कथं तर्हि, पक्षपातो महान्भवेत् ॥१३५॥
इमे दुष्टा इमे भक्ताः, इति वाग्मोह सूचिका ।
रागद्वेषसमायुक्तं, मन्यते चेश्वरं कथम् ॥
स्व स्व कर्मसमाधीना रागद्वेषसमन्विता ।
स्वस्व कर्मफलानाञ्च, भोक्तारः प्रतिपादिताः॥१३७॥
इमे मम परे चैव इति मनसि धार्यताम् ॥१३८॥
तवेश्वरो न सर्वज्ञः, किन्तु स पामरो जनः ।

तमीश्वरञ्च मन्तारः, [illegible]ऽपि तादृशाः ॥१३९॥

परमात्मा जगत्कर्त्ता, स्वतन्त्रः किं पराधीनः ।

स्वतन्त्रपक्ष स्वीका[illegible], स कृपालुर्भवेन्नहि ॥१४०॥

एको रोगी परः शोकी, एको रङ्कः परो धनी ।

एको दुःखी परः सुखी, प्राज्ञ एकोऽति मूर्खराट् ॥१४१॥

स्वाम्येकः सेवकश्चान्यः, इत्येवं विविधां दशाम् ।

निर्मातुः परमेशस्य, पक्षपातो महान्मतः ॥१४२॥

दयालुता क्व याता सा, मनसि परिचिन्त्यताम् ।

एवं विधाश्च सृष्टिं तां, कथं कुर्यात्स्वतंत्रकः ॥१४३॥

स्वतन्त्रोऽतो न मन्तव्यः, दयालूर्नापि सम्भवेत् ।

अज्ञानी निर्दयः सोऽपि, ज्ञातव्यस्तद्विधानतः ॥१४४॥

यदि सत्यदयालूः स्यात्सुखिनं सकलं सृजेत् ।

परतन्त्रस्तु विज्ञेयः, सोऽपि दोषयुतः सदा ॥१४५॥

[illegible]य सत्[illegible]ण्यपापकर्मानुसारतः ।

प्रेरितेशेन कर्त्तृणा, क्रियते रचनं जगत् ॥१४६॥

अतः कर्मा[illegible]सारेण, विचित्रं मन्यते यदा ।

जगत्कर्त्तुश्च निर्माणे, स्वातन्त्र्यं तु तदा नहि ॥१४७॥

फलं कर्मानुसारेण, ईशः सर्वत्र दीयते ।

कथं तर्हि स निर्माता, मन्यते परमेश्वरः ॥१४८॥
स्वकर्मकारको जीवः, भोक्ता कर्मफलस्य च ।
संसर्त्ता परिनिर्वाता, स ह्यात्मा नान्य लक्षणः॥१४९॥
कर्मकालस्वभावाश्च, उद्यमनियती तथा ।
पञ्चकारणसामग्र्या, कार्यं सर्वं तु सिद्ध्यति ॥१५०॥
कारण पञ्चसारूप्यं, तत्त्वाख्याने प्रपञ्चितम् ।
अतस्तत्रैव द्रष्टव्यं, पञ्चकारणकांक्षिणा ॥१५१॥
स्वतन्त्रो न हि युज्येत, परतन्त्रेऽप्रयोजनम् ।
द्वयोर्मध्ये च नैकोऽपि, पक्षश्चात्र निगद्यते ॥१५२॥
जगन्निर्माण शक्तिमान्, करोति रचनां यदि ।
नित्यकर्तृ स्वभावेन,किंवाऽन्यथा स्वभावतः॥१५३॥
स्वीकारे प्रथमे पक्षे, जगन्निर्माणकार्यतः ।
निवृत्तिः परमेशस्य, कदाचिदपि नो भवेत्॥१५४॥
निवृत्तिर्यदि स्यात्तर्हि, स्वभावे हानिता भवेत् ।
अतः स्यादित्य नित्यत्वमागच्छेत्परमात्मनः ॥१५५॥
यदि स्वभावताऽभावे, सृष्ट्युत्पत्तिं करोति सः ।
तर्हि तेनैव सा सृष्टिः,क्रियते इति मन्यताम् ॥१५६॥
स्वभावाऽभावता तयोः द्वयोरपि च सादृशी ।

एकः कुर्यात्परोनैव, राजाऽऽज्ञेति च किं भवेत्॥१५७॥
स्वभावाऽभाव सत्त्वे च यदि कार्यं प्रजायते।
तर्हि वन्ध्या प्रसूतिं किं, न कुर्यात्कारणं वद !॥१५८॥
अतः कर्त्तृत्व स्वाभावस्वीकारेऽपि गतिर्नहि।
अस्वीकारे स्वभावे च, दोषापत्तिस्तथैव च॥१५९॥
नित्यमेकस्वरूपेशः, जगद्रचयिता खलु।
इत्यपि पक्षस्वीकारे, रचना नैव सम्भवेत्॥१६०॥
संहारोऽपि न युज्येत, संशय भावतः खलु।
एकेनैव स्वरूपेण, कार्यद्वयीं करोति सः॥१६१॥
किं तेनैव स्वरूपेण, अथवा भिन्नरूपतः।
एकेनैव स्वरूपेण, कार्यद्वयीं करोति चेत्॥१६२॥
एतत्पक्षे च मन्तव्ये, तद् द्वयी युगपद् भवेत्।
स्वीकारे भिन्नपक्षे वै, स्वरूपभेदस्पष्टतः॥१६३॥
ईश्वरस्याप्य-नित्यत्वमागच्छेन्नात्र संशयः।
रजो गुणेन निर्माणं, तमो गुणेन संहृतिः॥१६४॥
सत्त्वगुणेन स्थैर्यं स्यात्स्पष्टा स्वरूप भिन्नता।
कार्यभेदे स्वरूपस्य, भेद ततोऽप्यनित्यता॥१६५॥
किं चेश्वरो भवेन्नित्यः, स्वान्ते इत्यपि धार्यताम्।

किन्तु निरंतरं सृष्टिं, किं करोति जल्प्यताम् ॥१६६॥
यदेशस्य भवेदिच्छा, तदा सृष्टिं करोति सः ।
अन्यथा न करोतीति, ईदृशी मान्यता मम ॥१६७॥
स्वाधीनेच्छापि तस्यैव, परतंत्रः कुतो भवेद् ।
स्वाधीनेच्छा प्रमन्तव्ये, सदोत्पत्तिस्तथैव च ॥१६८॥
इच्छायाः परतन्त्रत्वे, ईश्वरः शक्तिमान्न हि ।
पराधीनेऽसमर्थत्वमसमर्थे कुतो भवेत् ॥१६९॥
किं चेच्छा ममता रूपा, ममता लोभरूपिका ।
लोभः कषायरूपः स्यात्सकषायीश्वरो मतः ॥१७०॥
सकषायि समीपे च, याञ्चायाः किं प्रयोजनम् ।
न परश्च दरिद्रोऽपि, ईश्वरी कर्त्तुमीश्वरः ॥१७१॥
कषायी जगदीशश्चेदन्येशाः किं भवन्ति न ।
समेऽपि सकषायित्वे, एकः स्यादपरो न हि ॥१७२॥
राजाज्ञा चेति नास्त्येव, सर्वं मनसि चिन्त्यताम् ।
सेच्छ-ईशो न मन्तव्यः प्राणैः कण्ठगतैरपि ॥१७३॥
बुद्धिमताञ्च संसारे, प्रवृत्तिर्द्विप्रकारिका ।
स्वार्थकारुण्ययोगेन, निर्माणं जगतो मतम् ॥१७४॥
कृतार्थत्वेन स्वार्थो न, जगदीशस्य सम्भवेत् ।

जगन्निर्माणकर्त्तव्ये,इति स्वान्ते विचार्यताम् ॥१७५॥
अतः कारुण्य योगेन, सृष्टिः सृज्येत चेश्वरैः ।
द्वितीयस्यापि पक्षस्य,अवकाशो न विद्यते ॥१७६॥
दुःखिजीवस्य दुःखस्य, दूरीकरणभावतः ।
करुणा सैव विज्ञेया,सृष्ट्युत्पत्तिस्तया न हि ॥१७७॥
प्राक्काले जगदुत्पत्तेः, देहेन्द्रियाद्यभावतः ।
सर्वजीवस्य सौख्यं स्याद् :खलेशो न किश्चन ॥१७८॥
पश्चाद्देहेन्द्रियाद्यश्च, उत्पाद्य करुणावता ।
सुखीनां दुःखदातृत्वे,कारुण्यं कीदृशं मतम् ॥१७९॥
देहेन्द्रियाद्यभावेन, प्राक्काले सुखिनो जनाः ।
केषां दुःखविनाशाय, ईशेन करुणा कृता ॥१८०॥
पश्चाच्च सृष्टिनिर्माणाद्, दृष्ट्वा च दुःखिनो जनान् ।
ततः करुणता जाते, दृष्टः परस्पराश्रयः ॥१८१॥
दुःखिजीवं विनिर्माय, दृष्ट्वा तान्दुःखिनो जनान् ।
करुणा मानसे जाता, दूरीकर्त्तुं प्रयत्यते ॥१८२॥
अनादीशश्च मुक्तो वा, अमुक्तो वा किमुच्यते ।
यद्युच्येत प्रमुक्तो वा, तदा स घटते नहि ॥१८३॥
सर्वकर्मविनाशः स्यात्तदा मुक्तस्तु कथ्यते ।

यदा मुक्तत्वमीशस्य,अनादित्वं तदा नहि ॥१८४॥
अनादित्वञ्च मुक्तत्वं, परस्परं विरोधयुक् ।
कदापि नैव युज्येत, मुक्त ईशस्ततो नहि ॥१८५॥
अमुक्तपक्षमन्तव्ये, किं नेश्वरास्तदा समे ।
अनादित्वं न मुक्तस्य,अमुक्ते चेशता नहि ॥१८६॥
इमौ पक्षौ च नादेयौ, मन्येते भवताऽपि वै ।
नास्ति तृतीयपक्षोऽपि,किं क्रियतेऽधुना वद ॥१८७॥
जगन्निर्माण कर्त्तव्ये, ईश्यस्य किं प्रयोजनम् ।
प्रश्नादश भवेयुश्च, उत्तरं च विधीयते ॥१८८॥
जगन्निर्माणकर्त्तव्ये, यथा रुचीश्वरेषु किम् ।
कारणं विद्यते तत्र, किं वा स्यात्परतन्त्रता ॥१८९॥
धर्माय चाथवेशस्य, सृष्टिनिर्माणता भवेत् ।
क्रीडा कुतुहलात्किं वा,निग्रहानुग्रहाय किम् ॥१९०॥
अथवा सुखहेतुत्वे, ईशस्य स्यात्परिश्रमः ।
किंवा दुःखविनाशाय,भूतविघ्नक्षयाय किम् ।१९१।
भावि विघ्न विनाशाय, ईस्वरस्य श्रमः खलु ।
किंवा स्वभावतस्तस्य, प्रवृत्तिर्जायते सदा ॥१९२॥
एतेषां दश प्रश्नानां, समाधानं न विद्यते ।

समाधानेन येनैव, सन्तोषः सर्वदा भवेत् ॥१९३॥
प्रथमपक्षस्वीकारे, सृष्टिक्रमे विपर्यता ।
पुरुषे लक्षणं स्त्रीणां,पुरुषस्य न स्त्रीषु किम् ।१९४।
यथा रुच्या यदा सृष्टिः,रचयेदीश्वरस्तदा ।
तदैकनियमेनैव, किं न रचयतीश्वरः ॥१९५॥
मोहाधीने च निर्माणे, यथा रुचिर्निविद्यते ।
विपर्यासश्च दोषोऽपि,आगच्छेत्प्रथमे खलु ॥१९६॥
द्वितीयपक्षमन्तव्ये, ईशे स्वतन्त्रता नहि ।
अन्याश्रयाच्च कर्त्तव्ये,स्वतन्त्रो गीयते कथम् ।१९७
प्राणिकर्मसहायेन ईशः, सृष्टिः करोति चेत् ।
तदेशेन कृतं किं स्यात्कर्मकृतं तु मन्यताम् ॥१९८॥
तृतीयपक्षमन्तव्ये, ईशे कृतार्थता न हि ।
धर्मरूपस्य कार्यस्य, ईशस्य न प्रयोजनम् ॥१९९॥
धर्माधर्मक्षयाद् मुक्तिः, इति सार्वत्रिकं वचः ।
पुण्यरूपोऽपि धर्मश्चेद् मुक्तस्तदेश्वरो न हि ॥२००॥
नादेयश्च चतुर्थोऽपि, क्रीडा कुतूहलः खलुः ।
बालस्य शोभते सोऽपि, ईश्वरे नैव युज्यते ॥२०१॥
बालो धूलिगृहादिं च, यथा करोति प्रावृषि ।

पश्चाद् भनक्ति तत्सर्वं, युज्यते तस्य तादृशम् २०२
अपि तु वीतरागस्य, ध्येयस्य परमेशितुः ।
क्रीडाकर्त्तुं न युज्येत, हास्यास्पदं महद् भवेत् २०३
निग्रहाऽनुग्रहौ तौ च, रागद्वेषस्वरूपकौ ।
दुष्टस्य निग्रहश्चैव, भक्तानुग्रह रूपकः ॥२०४॥
ईश्वरस्य इमे भक्ताः, इमे दुष्टाश्च नो कदा ।
रागद्वेषनिमित्तञ्च, तस्य नष्टं तु सर्वथा ॥२०५॥
निग्रहानुग्रहौ तौ च, स्यातां तत्र न सर्वथा ।
तत्पक्षोऽपि भवेन्नैव, सर्वदेति विचार्यताम् ॥२०६॥
षष्टादि नवपर्यन्ताः, युज्यन्ते पक्षका न हि ।
अनादि नित्य मन्तव्ये, सुखं तु सर्वदा भवेत् २०७
दुःखं कदापि नास्त्येव, दुःखनाशाय नो भवेत् ।
प्रयासः परमेशस्य, स्वान्ते सर्वं विचार्यताम् ॥२०८॥
सर्वदा सुखमीशस्य, सुखार्थं न परिश्रमः ।
प्रत्यवायोऽप्यज्ञान य, भवेन्न परमेशितुः ॥२०९॥
अतः सोऽपि भवेन्नैव, किमर्थं स प्रवर्तते ।
भविष्यत्प्रत्यवायस्य, सर्वे च कल्पना न हि ॥२१०॥
पक्षोऽपि दशमस्त्याज्यः, युक्ति युक्त्या न युज्यते ।

जगन्निर्माणकर्त्तव्ये, यदीशस्य स्वभावता ॥२११॥
तर्हि निवर्तने तस्माद् मन्यते किं प्रयोजनम् ।
किन्तु स्वयं हि ईशो वै, स्वभावेन करोति सः २१२।
मन्तव्यमिति चेशस्य, नित्यत्वव्यापकादिकम् ।
तद्विशेषण दातव्ये, फलं किंचिन्न सम्भवेत् ॥२१३॥
स्वभावेनैव सम्पूर्णजगच्चक्रं भ्रमत्यपि ।
इत्येवं जल्पनेनैव, दोषापत्तिर्न जायते ॥२१४॥
एतावच्च प्रयासोऽपि, कर्त्तृत्वाधिष्ठिते खलु ।
सर्वदा सेवनीयः स्यात्साक्षित्विनि हि चेश्वरे ।२१५
सर्वज्ञे वीतरागे च, दोषापत्तिर्न सर्वथा ।
दृश्यतां सुविवेकेन, कारणसमवायतः ॥ २१६ ॥
कार्यं सर्वं प्रजायेत, तत्तु ईशेन युज्यते ।
ध्येयावलम्बरूपेण, ईश्वरः सर्वथा मतः ॥ २१७॥
कर्मकालस्वभावानां, नियतस्योद्यमस्य वै ।
बाह्याभ्यन्तरसामग्र्या, कार्यञ्च मीलने मतम् ।२१८।
कर्मणां जडरूपत्वात्फलं कुतस्तदर्पयेत् ।
इति प्रश्नावकाशस्यात्केषाञ्चिन्मानसे यदा ॥२१९॥
लोहश्च लोहचुम्बश्च, दूरादाकर्षयेद्यथा ।

कृष्ट्वा नयति सामीप्ये, कर्मादिष्वपि तादृशम् २२०
रूपाकर्षकयन्त्रं[१] च, रूपाकृतिं तु कर्षयेत्
शब्दाकर्षकयन्त्रं[२] वै, सर्वशब्दादि जातिकम् ॥२२१॥
गृहीत्वा श्रावयेच्चैव, तथा कर्मादिकञ्च वै।
शुभाशुभफलादाने, शक्तिमत्तन्न किम्भवेत् ॥२२२॥
जडेष्वपि पदार्थेषु, शक्तेरनन्तता मता।
एकान्त नियमो नास्ति, जडः किञ्चित्करोति न २२३।
कस्याश्चिच्च युवत्याः, चित्रस्य परिदर्शनात्।
ब्रह्मचारी व्रताढ्यश्च, स्त्री चित्रेण विनाशयेत् ॥२२४॥
कस्मिंश्चिदपि प्रासादे, स्त्रियाश्चित्रं च विद्यते।
न स्थेयं ब्रह्मचारिणा, इत्याज्ञा पारमेश्वरी ॥२२५॥
यथा चित्रस्थ रूपस्य सामर्थ्यं स्वान्तचालने।
जडेषु किं न सामर्थ्यं, अस्तीति सुविचार्यताम् २२६
प्रसिद्ध शास्त्रगीतायां, पञ्चमाध्यायके खलु।
प्रोक्तं चतुर्दशे श्लोके, श्रूयतां सावधानतः ॥२२७॥
न कर्त्तृत्वं न कर्माणि, लोकस्य सृजति प्रभुः।
न कर्मफल संयोगः, स्वभावस्तु प्रवर्तते ॥२२८॥

१ कैमेरा २ फोनोग्राफादि

सर्वथा कर्मवादश्च, निषिद्धो जैनशासने ।
ते च मीमांसका ज्ञेयाः, सदा मिथ्यात्विनो मताः२२९
पञ्चकारणभावेन, कार्यं जैनेषु सम्मतम् ।
विना कारणसामग्रीं, कार्यं किंचिन्न सिध्यति ।२३०।
ईश्वरकर्तृवादिभिः, जगत्सर्वं विडम्बितम् ।
ईश्वरेच्छा च यादृशी, तादृक् कार्यं भविष्यति२३१
यस्य कस्यापि कार्यस्य, ईश्वरेच्छा नियामिका ।
इत्युक्त्वा सर्वजीवानां, पौरुषार्थं विनाशितम् २३२
किमर्थं पुरुषार्थो हि, कर्त्तव्यः केनचित्कदा ।
ईश्वरेच्छा विना नैव, कार्यं किञ्चित्प्रजायते ॥२३३॥
निः सत्त्वा उद्यमैर्हीना, ईशाकृद्वादिना कृताः ।
पञ्चकारणप्रोच्चानैः, प्रजाश्च सोद्यमी कृताः ॥२३४॥
ईशोऽपि सर्वशक्तिमानुत्पादयति प्रस्तरे ।
कमलं किं न तद्बुद्धि,वन्ध्यायाः सन्ततिं न किम्२३५
सोऽपि कारणसामग्र्या, निष्पादयति कृत्यकम् ।
अस्माभिरपि कथ्येत, कार्यं कारणपञ्चतः ॥२३६॥
युक्तियुक्त प्रवक्तॄणां, जैनानां दोषरोपणम् ।
ईशं जैना न मन्यन्ते, अतस्तेऽपि च नास्तिकाः२३७

वस्तुगत्या विचारे च, नास्तिकता तु तन्मते ।
जगत्कर्तृत्व शून्येऽपि, जगत्कर्तृत्व माननम् ॥२३८।
मिथ्या दोषप्रदानेन, कलङ्की कृत ईश्वरः ।
कलङ्कीश्वरमन्तृणामास्तिक्यं वद कीदृशम् ।२३९।
महामिथात्विनां तेषां, वाग्नियमो न युज्यते ।
जैनानां सत्यवादीनामन्यथा त्वं कथं वदेत् ।२४०।
ईश्वरकर्तृवक्तारः, नैयायिकादयः खलु ।
अन्ये भाटि गृहीतारः, षट्दर्शन बहिर्भूताः ॥२४१॥
प्रकृतिं सांख्यतो लात्वा, जीवमीशञ्च ह्यन्यतः ।
तत्त्वत्रितयमादाय, जाताश्चेमे समाजिनः ॥२४२॥
जैना बौद्धाश्च सांख्याश्च, मिमांसकास्तथैव च ।
जगत्कर्तृत्व रूपेण, मन्यन्ते चेश्वरं न हि ॥२४३॥
मिमांसकमते चैव, सर्वज्ञो नैव विद्यते ।
ईश्वरस्य तु मन्तव्ये, वार्ता तेषां मते न हि ।२४४।
वीतरागश्च सर्वज्ञः, सर्वदर्शी निरञ्जनः ।
जैनानामीश्वरो ज्ञेयः, अन्येषां न हि तादृशः ।२४५।
तादृगीशस्य मन्तृणां, जैनानां युक्तिवादिनाम् ।
ईश्वरो नास्ति चैतेषां, इति कथं प्रघोष्यते ॥२४६॥

मिथ्या कलङ्कदानेन, महत्पापं प्रजायते ।
सुज्ञास्तेषां प्रलापांश्च, शृण्वन्ति श्रवणे न हि॥२४७॥
मिथ्याप्रलाप जल्पाके, मिथ्यावेदानुयायिनि ।
जैना भावदयां चैव, चिन्तयन्ति मुहुर्मुहुः ॥२४८॥
सकषायीश्वरो येषां, यमहीनाश्च साधवः ।
दयारहितधर्मश्च, तेषां कियद् निगद्यते ॥२४९॥
ईश्वरकथितो ज्ञेयः, महाव्रती गुरुस्तथा ।
धर्मो दयाप्रपूर्णश्च, नान्यत्र परिप्राप्यते ॥२५०॥
आत्मादि परलोकादि, स्वर्गनरकवस्तूनाम् ।
धर्माधर्मादि मुक्तिश्च, शुद्धा जैनैः प्रदर्शिता ॥२५१॥
अस्त्यात्मा परलोकश्चेत्येवं येषां मते मतिः ।
त एव आस्तिका ज्ञेया अन्ये सर्वे च नास्तिकाः॥२५२॥
आस्तिकमुख्यजैनाश्च, भारतेषु मताः सदा ।
आस्तिकाभासकाश्चान्ये, ज्ञातव्या सुखकांक्षिणा२५३

इतिश्री शास्त्रविशारद जैनाचार्य जगद्विख्यात जङ्गम युगप्रधान सूरिचक्रचक्रवर्त्ति परामाराध्य पूज्यपाद गुरुदेव श्रीविजयधर्म-

सूरीश्वरशिष्येण न्यायविशारद
न्यायतीर्थोपाध्याय मंगलविजयेन
विरचिते आर्हतधर्म्मप्रदीपे
जगत्कर्त्तृत्व विशेषवर्णन
नामा एकादशम
प्रकाशः समाप्तः ॥



# ॥ अथद्वादशम प्रकाशः ॥

## वीतरागमूर्त्तिमण्डनप्रकारः

मूर्त्तिद्वारा च कल्याणं, साधयन्ति समे जनाः ।
मूर्त्तिः सकल कार्याणां, भवेत्परमसाधिका ॥ १ ॥
रागिमूर्त्ति समालोके, रागभावश्च जायते ।
द्वेषिमूर्त्ति समालोके, द्वेषभावश्च मानसे ॥ २ ॥
शान्तमूर्त्ति समालोके, त्यागिता प्रकटीयते ।
सार्वमूर्त्ति सुध्यानेन, द्वेषाभावस्तु सर्वथा ॥ ३ ॥
शुद्धालन्बनतः कार्यसिद्धिः शुद्धा प्रजायते ।
अशुद्धतश्च न शुद्धा, जायते नात्र संशयः ॥ ४ ॥
शुद्धालम्बनतश्चैव, आत्मशुद्धिः प्रजायते ।
शुद्धालम्बनरूपाय, वीतरागाय ते नमः ॥ ५ ॥
द्रव्यभावाभिधाऽऽकृत्या, ईशो ज्ञेयश्चतुर्विधः ।
नामसंज्ञाभिधा ज्ञेया, यथा च ऋषभादयः ॥ ६ ॥
आकृत्या प्रतिबिम्बं तत्, द्रव्येण कारणं मतम् ।
भूता जिना भविष्यन्ति,द्रव्यत्वेन प्रकीर्तिताः ॥७॥

तीर्थंकृन्नामकर्मत्वं, येषां चोदयवर्त्तिता ।
ते भाव जिनदेवा स्युः, इति सर्वं व्यवस्थितम् ॥८॥
देवाधिदेव सार्वस्य, मूर्त्तिं नो मन्यते कति ।
अन्येषामपि सर्वेषां, मूर्त्तिस्तैरपि मन्यते ॥ ९ ॥
यावत्कालीन संसारः तावत्कालाकृतिर्मता ।
मूर्त्तिं विना न केषाञ्चित्,कार्यसिद्धिश्च सम्भवेत्॥१०
यां शाखाञ्च समाश्रित्य, आरोहितुं प्रवर्तते ।
तां च्छेत्तुबर्त्तमानस्य, अधःपातो भवेद् ध्रुवम् ॥११॥
तथा ध्येयं समाश्रित्य, यो ध्यानेषु प्रवर्त्तते ।
ध्येयमूर्त्तिर्न मन्तॄणां,गतिः कीदृग्भविष्यति ॥१२॥
ईशमूर्त्तिं न मन्तारः, तेषां भावस्तु कीदृशः ।
हलाहलं विषं पीत्वा,तैलं पीबन्ति चोर्ध्वकम्[1] ॥१३॥
चर्च्यैते च प्रमाणेन, मूर्त्तिविषयमान्यता ।
युक्तिप्रमाणराहित्यं, नादेयं कस्यचिद्वचः ॥१४॥
केचिद्वदन्ति जाड्येन, मूर्त्तिर्वन्द्या कदापि न ।
यथा पर्वतपाषाणः, तथेयमपि भाव्यताम् ॥१५॥
ईश्वर इत्यभिख्यं च, स्मरणीयं न कर्हिचित् ।

१—तैलोपरि ।

रजोऽभिधानवत्तच्च, जडत्वाद्धेतुता मता ॥१६॥
जडत्वेन समानेऽपि, एका वन्द्या परा न हि ।
तत्र विनिगमं नास्ति, उत्तरं तु विधेहि भोः ॥१७॥
वाच्यवाचकसम्बन्धाद्वन्दनीयाऽभिधामता ।
घटशब्दाभिधाने च, घटस्योपस्थितिर्यथा ॥१८॥
तथेश इति शब्देन, ईशस्योपस्थितिस्तथा ।
अतोऽभिधा च मन्तव्या, मूर्त्तिर्मान्या न कर्हिचिद् ॥१६
हृद् ग्राह्यानैव तद्युक्तिः, सा मूर्त्यामपि तादृशी ।
स्थाप्यस्थापकसम्बन्धः, मूर्त्ति मूर्त्ति मतोरपि ॥२०॥
प्रतिबन्धस्य सद्भावाद्वन्द्या मूर्त्तिः कथं न भोः ।
पुरुषस्य च कस्यचित्सम्मील्य सचिवादिभिः ॥२१॥
क्रियते चाभिषेकैस्तैः, तदा राजेति गीयते ।
पुरुषत्व समानेऽपि, स राजाऽन्ये कथं न स्युः ॥२२॥
स्थापितो विधिना यैश्च, नृपस्तु तैर्मतस्तदा ।
यथा वा पुरुषः कोऽपि, विरक्तः संस्तुतो भवेत् ॥२३॥
यावत्पर्यन्तवेषो न साधोश्च परिधापितः ।
तावत्कालश्च सा व्यक्तिः, साधुत्वेन न पूज्यते ॥२४॥
यदा तेन धृतो वेषः, साधुत्वं न हि पालितम् ।

तथापि साधुबुध्यातं,वन्दन्ते ते जनाः कथम् ॥२५॥
यथाभिषिक्तराजादौ, राजत्व स्थापना कृता ।
यथा परिधृते वेषे, साधुत्वं स्थाप्यते जनैः ॥२६॥
यस्यां मूर्त्यां च यत्काले, प्रतिष्ठा विधिना कृता ।
मन्त्रेण स्थाप्यते देवः,वन्द्या मूर्त्तिस्तदा मता ॥२७॥
स्थाप्य स्थापक सम्बन्धाद्वन्द्या मूर्त्तिस्तथैव च ।
मूर्त्तिर्मूर्त्तिमतश्चैव, सम्बन्धः सदृशो मतः ॥२८॥
अतः पर्वतपाषाणः, वन्द्यो न सर्वथा मतः ।
मूर्त्तिर्वन्द्या जिनेन्द्रस्य, निर्विकारत्व-सूचिका ॥२९॥
ईशस्य मूर्त्ति नाम्नोश्च, जडत्वं सादृशं द्वयोः ।
एकं वन्द्यं परं नैव, वक्तव्यं कारणं त्वया ॥३०॥
सम्बन्धान्नामधेयञ्च, वन्द्यमित्यपि नोचितम् ।
स तु मूर्त्यां च सत्त्वेन,कथंनो वन्द्यते त्वया ॥३१॥
अतो वन्द्ये त्वया ते द्वे, त्याज्यते वा तथैव च ।
इति तर्कः सदैव स्यान्निषिद्धो लुम्पकैः कथम् ॥३२॥
मसिकूर्चं मुखे दत्त्वा, नगरद्वारसामीपे ।
पश्यस्व मूर्त्तिमन्तृंश्च, ईशमूर्त्तिनिषेधकान् ।३३।
अतः पापान्मुखं बध्वा, प्रायश्चित्त-गवेषकाः ।
दर्शयन्ति कथं स्वास्यं,लुम्पकाः पापपोषकाः ॥३४॥

सर्वत्र घोषणीयश्च, ज्ञाप्यश्च जनसम्मुखात् ।
तादृशपापकर्तॄणां, अत्रेदृशो गतिर्भवेत् ॥३५॥
मषिलिखितपत्राणां, कथं सूत्रं च कथ्यते ।
ईशवाणी च सूत्रं स्याद्गता भगवता सह ॥३६॥
पञ्चत्रिंशद् गुणैराढ्या, वाणी भगवतो मता ।
लिखितेषु च सूत्रेषु,एको गुणोऽपि नो भवेत् ॥३७॥
योजनगामिनी वाणी, सूत्रं तु तादृशं न हि ।
वाणीरूपं कथं प्रोच्य, प्रतारयसि धूर्तराट् ॥३८॥
स्थापना भगवद्वाण्याः, यदि सूत्रेऽस्ति प्रोच्यते ।
भगवत्स्थापना तर्हि, मूर्त्तौ कथं निषिध्यते ॥३९॥
स्थापना द्वय सादृश्ये एका मान्या परा न हि ।
भेदभावः कथं चैवं, प्रमाणं वद बालिश ॥ ४० ॥
अभावेन प्रमाणस्य, नाद्रीयते वचोऽपि तत् ।
शून्यचित्तमनुष्याणां, प्रमाणं विद्यते कथम् ॥४१॥
अस्माकमनुमानञ्च, युक्तिरपि प्रसिध्यति ।
आगमं च प्रमाणं स्यात्सुविदितं पदे पदे ॥४२॥
आगममूर्त्तिरूपत्वं, कथं तेन निषिध्यते ।
यदि निषिध्यते तर्हि, आगमं नैव कथ्यते ॥४३॥

तथापि जिन मूर्त्याश्च, पूजा कुत्र प्रदर्शिता ।
इति प्रष्टुं यदीच्छाचेत्तर्हि सूत्रं निगद्यते ॥४४॥
सूर्याभदेवपूजाया, वक्तव्ये राजप्रश्नीये ।
सप्तदशविधा पूजा, प्रकारो विस्तृतो मतः ॥४५॥
गत्वा सिद्धालये चैव, धूपं जिनवरान्ददे ।
जिनमूर्त्तिसमीपे तु, देवा वदन्ति भावतः ॥४६॥
भवन्मताऽभिप्रायेण, जिनेन्द्रास्तत्र सन्ति नो ।
केवलजिनबिम्बानि, उक्ताः जिनरवराः कथम् ॥४७॥
स्थापनां जिन संकाशां, मत्वा वदति तादृशम् ।
यदभिप्रायतः सा वाक्, घटते चान्यथा नहि ॥४८॥
त्वदभिप्रायतः केन, प्रकारेण न युज्यते ।
अतो मूर्त्तिश्च वन्द्यास्याद्युक्ति युक्त्याविचारणे ।४९।
अन्यथा जिनमूर्त्तीनामग्रे नमुत्थुणं कथम् ।
तिन्नाणं तारयाणं सः, पाठः पूर्णो न युज्यते ॥५०॥
विजयदेवप्रासङ्गे, जीवाभिगमसूत्रके ।
पूजा पाठःप्रभोमूर्[१]त्त्याः, विस्तृतेन निरूपितः ॥५१॥

१—प्रभोर्मूर्त्या अग्रे ।

ज्ञातासूत्रे द्रुपत्कन्या, विवाहसमयेऽपि वै।
मोहमायां परित्यज्य, जिनपूजा कृता शुभा ॥५२॥
वैवाहिके च जीवानां, कामरागप्रबोधके।
विषयाणाञ्च प्राबल्यं जायते सर्वसम्मतम् ॥५३॥
धर्मरागस्तु धर्मिणां, जीवानां हृदये भवेत्।
अन्येषां न भवत्येव, अनुभूतं समैस्तथा ॥५४॥
महासत्याश्च द्रौपद्याः, भावं पश्यत निर्मलम्।
वीतराग सपर्यायैः, जिनालये सूची भूता ॥५५॥
स्नानादिकां क्रियां कृत्वा, प्रतिमा परिमार्ष्टि सा।
अभिषेकं विधायोच्चैः, पूजाकर्त्तुं प्रवर्तते ॥५६॥
जीवाभिगमसूत्रे च, अधुनाऽपि विलोक्यताम्।
राजप्रश्नीय सूत्रेऽपि, योऽधिकारः प्रदर्शितः ॥५७॥
साक्षिरूपेण सम्पूर्णः, तस्यात्रापि विलोकनम्।
कथितं सर्वज्ञातव्यं, शंकास्थानं न विद्यते ॥५८॥
सर्वपूजाविधिं कृत्वा, भावस्तवः कृतस्तया।
नमुत्थुणं च तत्पार्श्वे, पठितं तत्र भावतः ॥५९॥
तांश्च मिथ्यात्विनीं चैव, केचिद्वदन्ति बालिशाः।
तद्वचः सर्वथाऽसत्यं, माननीयश्च सर्वदा ॥६०॥

यदि मिथ्यात्विनी सा स्यान्नमुत्थुणं कथं तदा।
न हि मिथ्यात्विनो जीवाः, जिनेन्द्राग्रे वदन्ति तम् ६१
तिन्नाणं तारयाणं च बुद्धाणं बोहयाणं वै।
मुत्ताणं मोयगाणं च, साऽवददिति भावतः ॥६२॥
यदि मिथ्यात्विनी सा चेदेतादृशं तदा वदेत्।
अर्थपुत्रत्व राज्यादि, भोगप्रदानको भव ॥६३॥
मोक्षाभिलाषिणी याश्चा, न तु भोगाभिलाषिणी।
कथं मिथ्यात्विनी सा स्यात् दृढ़ सम्यक्त्वधारिणी६४
मिथ्यात्विनीं च मन्तारः, ते मिथ्यादृष्टिनो मताः।
उत्सूत्रस्य प्ररूपित्वे, गमिष्यन्ति ह्यधोगतिम् ।६५।
यदि मिथ्यात्विनो सा चेन्नारदागमने सति।
उत्थिता न कथं सा भोः, सूत्रं गत्वा विलोकयताम् ६६
प्रोक्ता महासती सा वै शास्त्रे भगवता खलु।
कथं मिथ्यात्विनी सास्यत्प्रायश्चित्तं विधीयताम्।६७
भूमिपति सिद्धार्थेन, कल्पे पूजा कृता तथा।
सिद्धार्थः श्रावकश्चैव, आचाराङ्गे प्रदर्शितः ॥६८॥
शास्त्रेष्वेवं च संप्रोक्तं, विरोधोधार्यते कथम्।
सप्तमाङ्गेषु चानन्दश्रावको, वक्ति वै ध्रुवम् ॥६९॥

जिनेन्द्रस्य विना चैत्यं, वन्दनीयं न किञ्चन ।
श्रद्धानालापके चैवं, प्रतिज्ञातं सुनिश्चितम् ॥७०॥
जिनबिम्बं तु चैत्यं स्या, च्चैत्यं जिनसभातरुः ।
अनेकार्थेच[१] संप्रोक्ताः, चैत्यशब्देन दर्शिता ॥७१॥
प्रकरणादि प्रासङ्गा, च्छाब्दबोध विचारके ।
कर्त्तव्ये नैव दोषोऽस्ति, ज्ञातं सिन्धवमानय ॥७२॥
अन्यदेवस्य वन्द्यन्वे, अन्यत्र जिन बिम्बके ।
अवन्द्यत्व प्रतिज्ञा च, जिनबिबवन्द्यं विना ॥७३॥
पूज्येत न हि केनापि, प्रकारेणेति मे मतिः ।
जिनमूर्त्तिरवन्द्येति, नियमश्च विधिं विना ॥७४॥
विंशतौ शतकानां च, विद्याचारणसाधुभिः ।
पञ्चमाङ्गे च मूर्त्तीनां, वन्दनानमने कृते ॥७५॥
लब्धीनां स्फोरणं चैव, प्रमादाचरणं मतम् ।
प्रायश्चित्तं च तस्येर्या,न तु वन्दनकादीनाम् ॥७६॥
वन्दनानमने चैव, भक्ति रूपे च दर्शिते ।
उत्तराध्ययने भक्तेः, फलं चैवं प्रदर्शितम् ॥७७॥

---

१—अनेकार्थ संग्रहे ।

स्थानाङ्गे दशमेस्थाने, दशधा सत्यतामता।
स्थापना सत्यता तत्र, भगवद्भिर्निरूपिता ॥७८॥
स्थानाङ्गे तूर्यस्थाने च, जिनमूर्त्तिस्तु दर्शिता।
किमर्थं सत्यतालोपः, मृषोदितं कथं त्वया ॥७९॥
पदे पदे च सूत्रेषु, मूर्त्तिपाग प्रदर्शिताः।
सम्प्रति भूमिपालाद्यैः[1], जिनप्रासादलक्षकम् ॥८०॥
जिनबिम्बानि कोटिशः, निर्मापितानि भावुकैः।
अनेकधर्मकार्याणि, कृतानि धनसद्व्ययात् ॥८१॥
मूर्त्ति निषेधप्रासङ्गे, जैनाभासेन केनचित्।
दृष्टान्तं दत्तमेकं च, श्रूयतां सावधानतः ॥८२॥
मूर्त्तिपूजकजैनाय, मूर्त्तिनिषेद्धृ पुत्रिका।
दत्तास्वश्र्वावधूटी सा, गता जिन गृहे कदा ॥८३॥
जिन प्रासाद द्वारेषु, सिंहमूर्त्तिविलोकनात्।
भयाकुला च सा जाता, स्वश्रूमेवं ब्रवीतिसा ॥८४॥
मन्दिरे नावगच्छामि, सिंहं खादति सत्वरम्।
वधूवाचमिमां श्रुत्वा, स्वश्रूर्वदति भद्रिका ॥८५॥

---

1—कुमारपालवस्तुपाल प्रभृतिभिः।

प्रस्तरमूर्त्तिसिंहोऽयं, भक्षयेन्न कदाचन।
तर्हि प्रस्तरमूर्त्तिः सा,स्वश्रु भो किं ददातिवः ॥८६॥
मूर्त्तेर्जडस्वरूपायाः, पूजने किं प्रयोजनम्।
पूजयेज्जडरूपं चे, त्पर्वतस्तर्हि पूज्यताम् ॥८७॥
इति वधूवचोभिश्च, सर्वैस्त्यक्तं च पूजनम्।
स्थानकवासिजातं यत्, सर्वं च तत्कुटुम्बकम् ॥८८॥
ईशपूजनश्राद्धैश्च दत्तं, दृष्टान्त तादृशम्।
मूर्त्तिपूजक पुत्री च, दत्तामूर्त्तिविरोधिने ॥८९॥
सा स्वश्र्वा सहपूज्यस्य, वन्दनायैगताखलु।
वधूटी नूतनां दृष्ट्वा, केयं पृष्टा च साधुभिः ॥९०॥
अस्मत्पुत्रवधूर्ज्ञेया, मूर्त्तिपूजावलम्बिनी।
श्रुत्वा पूज्यैश्च सम्प्रोक्तं,सम्यक्त्वं गृह्यतांदृढम्॥९१॥
अत्र सम्यक्त्व शब्देन, ईशमूर्त्ति निषेधनम्।
कृतं पूज्यैश्च ज्ञातव्यं, स्वमूर्त्तिपरिपूजकैः ॥९२॥
संसारे च विना श्रद्धां, भ्रमन्ति बहवो जनाः।
हृदि विशुद्ध श्रद्धानं, अस्ति पूज्यं तु पृच्छति ॥९३॥
तव सम्यक्त्व स्वीकारे, कल्याणं मम किं भवेत्।
कथितं निश्चितं पूज्यैः, भवेदत्र न संशयः ॥९४॥

पूज्य शिक्षा प्रदानाय, सम्यक्त्वं स्वीकृतं तया ।
ईशपूजनश्रद्धा सा, स्वान्ते दृढा च रक्षिता ॥६५॥
केनापि नापगच्छेत्सा[1], आगच्छेन्नैव दानतः ।
अभव्याः किमुतिष्ठेयुः, ज्ञातं प्रलापमात्रकम् ॥६६॥
प्रत्यहं दर्शनं कर्त्तुं, समागच्छति स्थानके ।
तया सहापि पूज्यस्य,रागोजातो महान् हृदि ॥६७॥
चातुर्मासे च सम्पूर्णे, पूज्यैस्स्थानकं कृतम् ।
सर्वे ग्रामजनाश्चैव, सन्मानार्थं गता बहिः ॥६८॥
साऽपि विलावनार्थाय, वस्त्रादिकं निजं समं ।
गृहीत्वा सा गतोद्याने,मङ्गलं श्रावितं च तैः ॥६९॥
प्रत्यागच्छन्ति श्राद्धास्ते, श्रुत्वा च मङ्गलं खलु ।
नागच्छति वधूटी सा,पृष्टे वदतिकारणम् ॥१००॥
दर्शनं पूज्यसाधूनां, विनाकृत्वा न भुज्यते ।
प्रतिज्ञाकारिता पूज्यैः कथं ग्रहे व्रजामिभोः ॥१०१॥
कुर्वन्ति विहृतिं पूज्याः, किं कर्त्तव्यंमया तदा ।
गृहे तिष्ठामि श्राद्धाश्चे,द्भोजनंक्रियतेकथम् ॥१०२॥

---

१—श्रद्धा ।

विना च भोजनं देहः, कथञ्च मम स्थीयते ।
पूज्यैः साकं विहारञ्च,अतः करोमिनिश्चतम् ॥१०३॥
तिष्टन्तु चाथवा पूज्याः, नगरेचात्र सर्वदा ।
मम दर्शनसंलाभः, मीलिष्यति च नित्यशः ॥१०४॥
अतो व्याघ्रतटी न्यायः, किं क्रियते समागतः ।
विचार्य कथितं पूज्यैः; उपायश्चात्र विद्यते ॥१०५॥
कुंकुमभृत पात्रञ्च, शीघ्रमानीयतां त्वया ।
आर्द्रौ कृत्यचपादौद्वौ,स्थाप्येतेचेलकेमया ॥१०६॥
सद्यानीतं च वस्त्रंत, च्चारणन्यास संयुतम् ।
श्राविकायैच दत्तंतद्, देशना दानपूर्वकम् ॥१०७॥
अस्मद्दर्शनसादृश्यं, फलञ्चरणदर्शने ।
भविष्यतीति मन्तव्यं,श्रुतं सर्वैश्च श्रावकैः ॥१०८॥
तदा वधूश्च साऽवोचत्, सर्वं समक्षमीदृशम् ।
त्वयि साधुत्व सद्भावोऽस्ति,न वेतिन कथ्यते ॥१०६
आत्मीया साधुता चैव, सादृष्ट्या न विलोक्यते ।
अरूपा साधुता ज्ञेया,दृष्ट्याविलोक्यते कथम् ॥११०॥
पादन्याससमालोका[1], त्साधुदर्शन सादृशम् ।

१—समालोकनात् ।

यदा फलं लभेत्तर्हि, कथं मूर्त्तिर्निषिध्यते ॥१११॥
पादन्यासोऽपिमूर्त्तिस्या, द्वेषो मूर्त्ति-स्वरूपकः ।
स्वमूर्त्तिर्माननीया, चेदन्या कथंनिषिध्यते ॥११२॥
तव चरण न्यासेषु, तव मते न साधुता ।
कथं दर्शन प्राप्तिरियं, कार्यतेमायिना त्वया ॥११३॥
श्रूयतां भो जनावाक्यं, स्वमूर्त्तिपूजका इमे ।
ईशमूर्त्तिं न मन्तृणां,धूर्त्तताकीदृशीमता ॥११४॥
सर्वज्ञाज्ञापलापानां, उत्सूत्रभाषिणां सदा ।
फलमनन्तसंसारः, अन्यत्किमपिनो भवेत् ॥११५॥
सार्व्वसिद्धान्त वाक्यानाऽमेकाक्षरविलोपने ।
संसारानन्तता प्रोक्ता,किं ब्रुवे सूत्रलोपने ॥११६॥
पूजयति समान् मूर्त्त्या, मूर्त्त्या भुंक्ते महारसान् ।
सत्कारं लभते मूर्त्त्या, दर्शयेत्साधुताचवै ॥११७॥
यदि वेषं परित्यज्य, गृहि वेषं विधीयते ।
वन्दना व्यवहारश्च, न कुर्यात्कोऽपि तन्मते ॥११८॥
साधु बुध्या[1] च तं कोऽपि, वन्दनादि करोति न ।
आहारादिक सामग्रीं, ददाति कोऽपि नो कदा ११९

१—तंगृहिवेषधारिणम्

साधु वेषं च सन्मूर्त्तिं, मन्यते हृदये दृढम् ।
ईशमूर्त्तिं कथं तर्हि, निषिध्यते च मूर्खराट् ।१२०।
ज्ञापयेच्छब्द द्वाराचे, त्तदा मूर्त्तिः समागता ।
शब्दोमूर्त्तिः स्वरूपः सः, सातु कथं निषिध्यते १२१
जनैः शब्देन बुध्येत, मोक्ष ज्ञानं च शब्दतः ।
युद्धं च शब्दतश्चैव, शब्दत्किं कि न जायते १२२
शब्दपुद्गलरूपः सः, मूर्त्तिः स्यात्पुद्गलात्मिका ।
ज्ञान कारण मूर्त्तिश्चे, त्कथं मूर्त्तिं र्निषिध्यते १२३
मूर्त्तिरितोऽपि मन्तव्या, मूर्त्तिर्मान्या सदैव च !
ध्येय मूर्त्तिं समालम्ब्य, तरन्ति भव सागरम् ।१२४
लोंकालुम्पक शाहेन, गृहस्थलेखकेन वै ।
मूर्त्तिस्तु लोपिता तेन, दुर्भव्येन स्वच्छन्दिना ॥१२५॥
मूर्ख जनस्य संकाशे, दत्तं व्याख्यानकंच तैः ।
आलस्यं युग्गृहीणाञ्च, पातने का विलम्बता ।१२६।
सूत्राणां कति पाठाश्च, अमूल्यकेन लुम्पिता ।
कति सूत्राणि शाहेन, लोकेन वर्जितानि च ॥१२७॥
सन्तबालेन मूर्खेण, पाठानां परिवर्त्तनम् ।
कपोल कल्पितानाञ्च, सत्यपाठत्व दर्शनम् ॥१२८॥

आद्य गुरुश्च सस्त्रीकः, आरम्भेनैव संयुतः ।
ब्रह्मचारि विनेयाश्च, तेषां धर्मस्तु कीदृशः ॥१२६॥
मुखाच्छादन वस्त्रेण, निष्ठ्यूतस्यैव स्वादकाः ।
सद्बुद्धिश्चकथं तेषां, भवेदिति विचार्यताम् ।१३०।
आर्यसमाजिनः सर्वं मूर्त्तिं वदन्ति नोचिता ।
मूर्त्या जगति पाखण्डः, वर्धितः परिदृश्यते ॥१३१॥
प्रस्तर निर्मिता गावः, दुग्धं ददाति नो कदा ।
अदन्ति न तृणं चैव, मन्यन्ते गाः कथञ्चताः ।१३२
यदि ता गाश्च मन्यन्ते, दुग्धं तस्याश्च गृह्यताम् ।
तासां जडस्वरूपाणां, मानने किं फलं भवेत् ॥१३३॥
तथैव जडरूपायाः, मूर्त्या सिद्धिश्च का भवेत् ।
अतो मूर्त्तिर्न मन्तव्या, जने पाखण्डवर्धिका ।१३४
भवदीयञ्च वक्तव्यं, युक्ति युक्तं कदापि न ।
दृष्टान्तमपि प्रत्युत, मूर्त्ति सिद्धि प्रदायकम् ।१३५।
बालेन केन चिन्नैव, दृष्टा गौः पृष्ठमीदृशम् ।
कीदृशी गौर्भवत्येव, गोश्चित्रं[१] तेन दर्शितम् ।१३६।

१—अध्यापकेन

तद् दृष्ट्वा मानसे बोधः संस्कारः परिजायते।
व्यक्तिश्च सदृशीं दृष्ट्वा, संस्कारो द्बोधता भवेत्१३७
इयं गौरिति विज्ञेया, ज्ञानं जातं तदा हृदि।
गोश्चित्रेणाऽपि सत्यागौः, सुज्ञाता मानसे तदा१३८
गोश्चित्रं यदि दृष्टं नो, गो विज्ञानं कुतो भवेत्।
सत्य ज्ञानं भवेद्यस्मा, च्चित्रं तत्कारणं न किम्१३९
यदि मूर्त्तं न मन्येत, तिस्रः स्त्रियः समागताः।
माता पुत्री वधूश्चैव, स्वयाकृत्या च समानता१४०।
समीपे चैकस्या गत्वा, भक्ति भावः प्रदर्श्यते।
अन्या कांचिच्च दृष्ट्वा, स्त्रीं स्नेह रागः प्रवर्धते१४१
दृष्ट्वा पराश्च स्वश्चान्ते, काम रागः प्रजायते।
तिसृणां दर्शने तुल्ये, भावेषु भिन्नता कथम्।१४२।
यदि मूर्त्तिं न मन्येत, भेद भावः कुतो भवेत्।
स्थापनाऽतोऽपि मन्तव्या, तां विना कार्यता न वै१४३
मातृ बुद्धिः कृता यत्र, तत्रस्याद्भक्ति भावना।
पुत्री बुद्धि कृता यत्र, स्नेह रागः प्रवर्धते ॥१४४॥
धर्मपत्नी मदीयेयं, इति यत्रैव तन्मतिः।
यस्यां कृता च तत्रैव, कामरागः प्रजायते ॥१४५॥

आत्मा च न भवेन्माता, नपुत्री न वधूर्भवेत्[१] ।
न पुत्रो न पिता ज्ञेयः, सर्वं च स्थूल देहतः ॥१४६॥
विग्रहेवै समानेऽपि, पुत्र्यादि ज्ञानता कथं ।
यत्स्थापना कृता यस्यां, व्यवहारोऽपि स्यात्ततः१४७
जानीते मातरं मूर्त्या, मूर्त्या पुत्रीं प्रज्ञापयेत् ।
मूर्त्या वधूं च जानीया, न्मूर्त्या किं किं न सिध्यति
यदि मूर्त्तिं न मन्येत, मूल शंकर वाडवैः ।
गेरूणा रञ्जितं वस्त्रं, सन्यासि परिचायकम् ॥१४९॥
किमर्थं धारितं तेन, कथं हस्ते कमण्डलुः ।
दयानन्दः कथं नाम, तेनैव परिवर्त्तितम् ॥१५०॥
चित्रमये दयानन्दे, अवस्था भेद सूचकम् ।
नैकधा प्रति बिम्बानि, किमर्थं मुद्रितानि भोः १५१
क्रियते किमर्थं सर्वं, मूर्त्या वो न प्रयोजनम् ।
गृहिवेषं परित्यज्य, कथं जनान्प्रतारयेः ॥१५२॥
गुरुकुले च कालेजे, तच्चित्रं धारितं कथम् ।
विद्यार्थिनां समीपे च, भारत चित्र दर्शनम् ॥१५३॥

---

१-शरीराकृत्या च तस्यां मातृत्वादि बुद्धि कल्पना भवेत् !

कोटं बूटं पटलूनं, टोपादि परिधाय च ।
सन्यासीति च वक्तव्यं, जानातु जनता न वा ।१५४
निराकापरश्वरस्यापि, आकारः क्रियते कथम् ।
ईशमूर्त्तिरतो नैव, मन्तव्या इति मे मतिः ॥१५५॥
निराकारस्य चाकारः, भवद्भिरपि दृश्यते ।
अष्टानामष्ट निष्कासे, वद किमवशिष्यते ॥१५६॥
यदि वदेश्च नो किञ्चि,त्तदपि नैव बुध्यते ।
तदा बिन्दु स्वरूपोऽपि, आकारो दृश्यते कथम् १५७
निराकारस्य चाकारः, भवतेवं च दर्शितः ।
जीवानां प्रतिबोधाय, तथान्यैरपि दृश्यते ॥१५८॥
अस्मन्मते भवेन्नैव, निराकारश्च केवलः ।
निरञ्जनो निराकारः, सिद्धेशः परिकीर्त्तितः ।१५९।
निरञ्जनश्च साकारः, जीवन्मुक्तो निगद्यते ।
तस्य मूर्त्तिस्तु मान्यास्या, ध्यानार्थं परमात्मनः ।१६०
ध्येयं विना कथं ध्यानं, विना ध्यानेन कर्मणां ।
क्षयः कथं भवेच्चैव, कैवल्यं तद् विना न हि १६१
विना ज्ञानं कथं मुक्तिः, विना मुक्तिं भ्रमिः सदा ।
ततो ध्येयं च मन्यव्यं, येन सर्वं प्रसिध्यति ।१६२।

येषां मते निराकारः, केवलमेक ईश्वरः ।
तेषां ध्यानादिकं सर्वं, विनाध्येयं कथं भवेत् ।१६३
यथा किश्चिद्धनुर्धारी, समीपे ध्येय वस्तूनि ।
शरो हिलक्ष्य वेधार्थं, मुञ्चति स्वेष्ट सिद्धये ॥१६४॥
यदि साकार ध्येयं न, कुत्र शरः प्रमोचनम् ।
शरः क्रियासु नैष्फल्यं, धनुर्धारीषु जायते ॥१६५॥
यदि पार्श्वे शरो नो, ऽस्याद्विन्ध्याल्लक्ष्यं कथं तदा ।
लक्ष्य वेधन कार्याय, शरोऽपि चोपयुज्यते ॥१६६॥
तत्र नो चेद्धनुर्धारी, तदा किमपि नो भवेत् ।
अतस्त्रितय संयोगः, स्वेष्टकार्य समर्थकः ॥१६७॥
ध्याता ध्यानं तथा ध्येयं, जगति त्रितयं मतम् ।
अन्तरात्माचध्यातास्या, द्ध्यानं चैकाग्र सन्ततिः१६८
पिण्डस्थादिक ज्ञातव्यं, ध्येयं ध्यानं समिच्छता ।
ज्ञेयो ध्याता धनुर्धारी, अत्र ध्यानं शरः समम् १६९
लक्ष्यं ध्येयं तु विज्ञेयं, त्रिपुटी स्वेष्ट साधिका ।
विना ध्येयं स्वसामीप्ये, ध्यानं कस्य विधीयते १७०
अतो ध्यानस्य सिद्ध्यर्थं, ध्येयमूर्त्तिरुदाहृता ।
ध्येये शुद्ध स्वरूपे च, ध्यानं शुद्धं प्रजायते ॥१७१॥

वीतरागं स्मरेद्योगी, वीतरागत्वमश्नुते ।
सरागं ध्यायतस्तस्य, सरागत्वं सुनिश्चितम् ॥१७२॥
दयानन्देन दृष्टान्तं, दत्तामेकं तु श्रूयताम् ।
कस्याश्चिच्छिव मूर्त्याश्च, उपरि शिव रात्रिके१७३
केनचिद्मूषकेनापि, निहारस्तु कृतस्तदा ।
रात्रिश्चतेन तत्रैव, जागरता विलोकितः ॥१७४॥
तद्दृष्ट्वा तेन स्व स्वान्ते, एवं विधं विचारितम् ।
स्व रक्षायां न यः शक्तः, पर रक्षातु ततः कुतः१७५
अतो मूर्त्ति र्न मन्तव्या, इति मनसि निश्चितम् ।
ततो दीक्षां गृहीत्वा वै, निषिद्धं देव मन्दिरम् १७६
वने पर्वत स्थानेषु, महात्मा कश्चिदागतः ।
ध्यानमगोचरं तत्र, अकरोदात्मशुद्धये ॥१७७॥
तदा पक्षिण आगत्य, देहं तस्यातुदद्मुहुः ।
निहारश्च कृतस्तत्र, महात्मा मौनमास्थितः ॥१७८॥
तन्निषेद्धुं प्रयत्नं न, अकरोदपि कश्चन ।
अतःकिंसोऽसमर्थस्यात्,ज्ञातव्योध्यानमिच्छुभिः१७९
वीतरागे मनोलीनं, यस्य शुद्ध स्वरूपके ।
तस्य महात्मनः किंचिद्, देहस्य न प्रयोजनम् ॥१८०॥

देहं पतेद्दन्तु वा, कोऽपिकं वा प्रकुर्वतु ।
इति वुद्धिश्च यत्स्वान्ते, तस्य बाह्य निरर्थकम् ॥१८१।
तद्वदत्रापि ज्ञातव्यं, स्थापना रूपशङ्करे ।
असामर्थ्यं न चैतस्य, किन्तु ममत्व शून्यता ।१८२।
ध्यानावस्थस्तथा योगी, मूर्त्तिरूपो निगद्यते ।
चेष्टां कामपिनो कुर्या, द्ध्यानावस्थाविरोधिनी ।१८३।
तद्वदीश्वरमूर्त्तिं च, ध्यानार्थमवलम्बते ।
अतः सर्वं परित्यज्य, धर्मध्यानं विधीयताम् ।१८४।
मूर्त्तिं मूर्त्तिमतश्चैव, अभेदस्योपचारतः ।
मूर्त्तिमपि विरागां तां, मन्ये च ध्यानहेतवे ।१८५।
पर्वतस्थं यथातृण्यं, ज्वलद्दृष्ट्वावदेज्जनः ।
दहति पर्वतः पश्य, यथा स्रवतिकुण्डका ॥१८६॥
उपचारस्तु तद्वद्धि, अत्रापि व्यवहारतः ।
ईश्वरं पूजयाम्यहं, इतिमनसिमन्यते ॥१८७॥
स्तुतिः सर्वा विधीयेत, उद्दिश्य परमात्मनः ।
न प्रस्तर मयीं मूर्त्तिं, मुद्दिश्य क्रियते किमु ॥१८८।
यदि मूर्त्तिं समुद्दिश्य, पूजादि क्रियते मया ।
चैवंतदातु वाच्यं स्याद्धे ! मूर्त्ते ! प्रस्तरात्मिके ॥१८९

प्रस्तरं मकराणातः, आनीय शिल्पिभिः कृता ।
मनोहरे च बिम्बेन, दृश्यते मानसे मम ॥१६०॥
अतस्त्वां परिध्यायामि, अन्यथा न कदाचन ।
इत्येवं देव प्रासादे, गत्वा वाच्यं च सर्वदा ॥१६१॥
किन्तु कोऽपि न, कर्हिचिद्ब्रवीति हि कदाचन ।
परन्तु हे ! जगन्नाथ ! वीतराग शिवङ्कर !॥१६२॥
एवं वदन्ति सर्वे वै, गत्वा च जिनमन्दिरे ।
मोक्षार्थं क्रियते ध्यानं, मूर्त्ति पूजा कुतो मता ।१६३।
किन्तु सन्मूर्त्ति द्वारेण, ईश्वरोऽत्र प्रपूज्यते ।
ईश पूजाऽप्यतो ज्ञेया, भाव्यतां परमार्थतः ॥१६४॥
समाचारं यथा किञ्चिज्ज्ञापयितुं विदेशके ।
इच्छेत्तदा च किं द्वारा, ज्ञाप्यतेऽत्र स्थितो जनः ।१६५।
इति विचारे संजाते, मनस्येवं स्मृतं तदा ।
यन्त्र[1]द्वारा विना तारं, संदेशकंच प्रेष्यते ॥१६६॥
तथेश्वरस्य पूजादि, करणेच्छा गरीयसी ।
केन द्वारेण तन्येत, विचारो मानसे महान् ॥१६७॥

---

१---भाषायां रेडीओ इति गीयते ।

तदा हार्दिकसद्भावः, जातो जिन प्रासादके ।
स्तुत्यादि क्रियते गत्वा, वीतरागसमीपके ॥१९८॥
बुध्याऽऽकारं च लक्ष्यी कृत्येश्वरः परिपूज्यते ।
ईश पूजा ह्यतो ज्ञेया, वस्तुगत्या विचार्यताम् ॥१९९॥
किं चापरं हि दृष्टान्तं, लोकबोधायदीयते ।
ध्यानावस्था च कीदृक् स्याद्भावार्थेन निगद्यते ।२००।
यथा काचित्कुलाद्भ्रष्टा, दुराचाराय तत्परा ।
रात्रौ सङ्केतिते स्थाने, गमनार्थं समुत्सुका ॥२०१॥
गृहाद्गतवती तत्र; मध्यरात्रौ च निर्भया ।
मार्गे यवनप्रासादे, पादशाहेन भूषिते ॥२०२॥
खुदाध्यानेषु लग्नस्य, मनस्यन्यन्न किञ्चन ।
अन्यो मार्गस्तु नास्त्येव, यवनमन्दिरं[1] विना ॥२०३॥
पादशाहस्य पीठे सा, पादं दत्वा च गच्छति ।
पादशाहेन तत्काले, मनस्येवं विचारितम् ॥२०४॥
प्रत्यागमनकाले च, शिक्षादेया दृढा मया ।
स्वकार्यं च समाप्य सा, यदा गच्छति वै तदा२०५

१—मसजीते इति भाषायाम ।

पृच्छति हस्तमादाय, ममोपरि कथं त्वया ।
खुदाध्यानेषु लग्नस्य, पादं दत्वा द्रुतं गतम् ।२०६।
क्षन्तव्यो मम रोषो हि, श्रूयतां मेऽपि वाचिकम् ।
ध्यानं त्वदीयमीशो नो, किन्तु लोकेषणाकृते।२०७।
त्वद्ध्यानं यदि सत्यं चे, त्तदाकारस्वरूपके ।
तदा कथं स सङ्कल्पः, भवत्येवं विचार्यताम् ।२०८।
मम ध्यानंच कामेषु, लग्नं दृढं च सर्वथा ।
तव पीठेषु पादौ द्वौ, दत्वा च गमनं कृतम् ।२०९।
न ज्ञातः किं महाराजः, रङ्को वाऽन्योऽथवा खलु ।
यस्य मनोऽत्र यद्ध्याने, लग्नं कथं च ज्ञायते ।२१०।
तव ध्यानं न देवेषु, दोषाणाँ किन्तु दर्शने ।
अतो ज्ञातंच मे पीठे, पादौ दत्वा च गच्छति २११
पादशाहेन तद्वाक्यं, शिक्षा रूपेण मानितम् ।
बालादपि च सद्वाक्यं, ग्राह्यं सर्वं तु नैतिकम्।२१२।
तदुपकारं निजे स्वान्ते, मन्यते स मुहुर्मुहुः ।
दुराचारश्च सा त्यक्त्वा, पादशाहोपदेशतः ॥२१३॥
शुद्धा कुलवती जाता, परस्परश्च ज्ञानतः ।
अतो हि तस्य भावार्थः, उपनयेन प्रोच्यते ॥२१४॥

ध्यानावस्थासु चागत्य, करोति कोऽपि विघ्नकम् ।
ध्यानं तथापि नो, त्याज्यं प्राणैः कण्ठगतैरपि २१५।
सामान्यपुरुषस्यापि, ध्यानपद्धतिरीदृशी ।
सम्पूर्ण ध्यानमग्नस्य, योगिनः किमु कथ्यते ।२१६।
पूर्वेचाध्ययने काले, श्रुतमेकं कथानकम् ।
विदुषा कथितं चैव, तथा मया निगद्यते ॥२१७॥
वाराणस्याश्च नैकट्ये, गङ्गायाश्च समीपके ।
दयानन्दश्च तत्रापि, आकाशध्यानमातनोत्॥२१८।
ध्यानरसनिमग्नस्य, निकटे तस्य चागता ।
निद्रादेवी च तत्रैव, द्वे द्रास्यौ प्राहिणोत्तदा ॥२१९॥
आलसतन्द्रिका नाम्न्यौ, स्वकार्यं कुरुतस्तदा ।
आलस्याद्देहशैथिल्यं, तन्द्रा निद्रां तु ज्ञापयेत्।२२०।
निद्रा देव्या समागत्य, ध्यानं तदा विनाशितम् ।
धराशायी दयानन्दः, घौं घौं घ्राणं करोतिसः।२२१।
शब्दं कुर्वंश्च तत्काले, व्यात्तमुखोऽभवत्खलु ।
श्वाऽऽगत्य वृहतीं शंकां, मुखे कृत्वाशु गच्छति २२२
यदा जागर्ति स्वामी, स ध्यानं बिमुच्य सत्वरम् ।
लात्वा कमण्डलु दण्डे, आगतः स्वीय स्थानके ।२२३।

चिन्तयति निजे स्वान्ते, ध्यान कार्यं न सुन्दरम् ।
अतो ध्यानं न कर्त्तव्यं, मदीया मतिरीदृशी ।२२४।
स्वरक्षायां समर्थो न, परान् कथं स रक्षयेत् ।
अतः संन्यासिता त्याज्या, इति कथं न प्रोच्यते२२५
यदि सत्या च वार्तेयं, शङ्करस्यापि तादृशी ।
यदेयं नैवसत्या स्यात्सापि वार्ता च तादृशी ॥२२६॥
मन्दिराणांच केषाश्चिद्दृष्ट्वाऽनाचरणं बहु ।
यूकापतनत्रासेन, वस्त्रं किं तेन त्यज्यते ॥२२७॥
वीतरागप्रसादे च, शुभध्यानं भवेत्सदा ।
तद्भयात्सर्व प्रासादः, न त्यक्तव्यः कदाचन ॥२२८॥
कस्यचिद्दरिद्रस्य, वस्त्रेषु पतिता यूका ।
मुक्ति निदानकं ध्यानालयं कथं तु त्यज्यते ॥२२९॥
वस्त्राद्यूकां परित्यज्य, वस्त्रमाच्छादनं वरम् ।
यत्रानाऽचारता दृष्टा, सा त्यक्तव्या त्वया सदा२३०
वीतरागपरिज्ञानं, जायते द्विप्रकारतः ।
चरित्रपठनेनैव, मूर्त्तिदर्शनतस्तथा ॥२३१॥
सर्वज्ञ साधनेनैव, वीतरागस्तु दर्शितः ।
येषां वांचि विरोधो न, तत्र सर्वज्ञता मता ॥२३२॥

पूर्वापर विरोधस्तु, यस्यागमे न दृश्यते ।
तदागमं तु विज्ञेयं, सर्वज्ञपरिभाषितम् ॥२३३॥

प्रोक्तमुपाध्यायकृताष्टके :—

शासनात्त्राणशक्तेश्च, बुधैः शास्त्रं निरूपितम् ॥
वचनं वीतरागस्य, तत्तु नान्यस्य कस्यचित् ॥२३४॥
ईशाचरित्र ज्ञानञ्च, तत एव प्रजायते ।
आचाराङ्गादिसूत्रेषु, आवश्यकीय वृत्तिके ॥२३५॥
तच्च जैनागमं ज्ञेयं, शास्त्रं सर्वज्ञभाषितम् ।
कषच्छेद सुतापैश्च, मतं सर्वं परीक्षितम् ॥२३६॥
त्रिषष्टिचरिते चैव, अन्यागमेषु ज्ञायताम् ।
चरित्रपठनेनैव, सर्वज्ञः परिज्ञायते ॥२३७॥
मूर्त्या च वीतरागत्वं, दृश्यते चानुमानतः ।
प्रत्यक्षदर्शनेनैव, भवेदनुमितिर्दृढा ॥२३८॥
सम्बन्धस्त्वङ्गनायाश्च, येषामङ्केषु दृश्यते ।
तेन रागानुमानञ्च, क्रियते ज्ञानहेतवे ॥२३९
मन्तव्या रागिणश्चेमे, अङ्गनायाश्च योगतः ।
यत्र यत्र स सम्बन्धः,तत्र रागो विलोक्यते॥२४०॥
यथाऽयं शिवदत्तश्च,तथा कृष्णादयो मताः ।

तेषां स्त्रीणाञ्च सम्बन्धः, पूर्वमेव प्रदर्शितः ॥२४१॥
ज्ञातव्या द्वेषिणश्चेमे, हस्ते शस्त्रस्य योगतः ।
यत्र शस्त्रस्य सम्बन्धः, तत्र द्वेषोऽपि सम्मतः२४२
यथेमे युद्धकर्त्तारः, तथा कृष्णादयो मताः ।
तेषांशस्त्रस्यसम्बन्धः,गत्वामूर्त्यां विलोक्यताम्२४३
ज्ञातव्योऽयञ्च पूर्णो, न हस्तस्थ जपमालतः ।
यदि सम्पूर्णज्ञानी,चेत्किमर्था जपमालिका ॥२४४॥
अपूर्णः परिपूर्णार्थं, ध्यायते जपमालया ।
तन्निमित्तेन चालपज्ञे, ध्यानकारणता भवेत् ॥२४५॥
यदि सोऽपि प्रपूर्णः, स्यात्किमर्थं ध्यानतां भजेत् ।
ध्यानकरणतो ज्ञेयः, अपूर्णः सर्वथा खलु ॥२४६॥
प्रोक्तं चान्यत्र—

रागोऽङ्गना सङ्गमतोऽनुमेयः,
द्वेषो द्विषद्दारणहेतिगम्यः ।
मोहकुवृत्तागमदोषसाध्यः,
न यस्य एवं स एव चार्हन् ॥२४७॥

यस्या मूर्त्याश्च हस्तादौ, शस्त्र त्रिशूलकादीनाम् ।
सर्वथा नास्ति सम्बन्धः,सा मूर्त्तिर्वीतरागिणी ।२४८।

यस्याश्चाङ्केषु दाराणां, सम्बन्धो नास्ति सर्वथा ।
वीतरागत्व सद्भावं, सा मूर्त्तिः परिदर्शयेत् ॥२४६॥
यस्या मूर्त्तेः समीपस्थ, कमण्डलूस्तु सूचयेत् ।
अशौचेन प्रपूर्णत्वं, ज्ञापयेन्नात्रसंशयः ॥२५०॥
यस्या हस्ते च मालास्यात्तया तु प्रतिबोधयेत् ।
सर्वथा ऽपूर्णताचैव, न तु सर्वज्ञतां कदा ॥२५१॥
अतो यस्यां शस्त्रादीनां, सम्बन्धो न कदाचन ।
भक्तानां तारणेच्छा न, दुष्टानां नैव निग्रहे ॥२५२॥
सर्वजन्तुषु सर्वत्र, समभावश्च सर्वथा ।
भक्तेषु दुष्ट जीवेषु,रागद्वेषो न कर्हिचित् ॥२५३॥
इमे परे मदीया न, येषां च नैव भावना ।
समभावश्च सर्वेषु, वीतरागः स ज्ञायते ॥२५४॥
प्रोक्तं योग शास्त्रेः—

बलं जगद्ध्वंसन रक्षण क्षमं कृपा,
च सा सङ्गमके कृतागसि ।
इतीव संचिन्त्य विमुच्य मानसं,
रुषैवरोषस्तव नाथ निर्ययौ ॥२५५॥

जगति मूर्त्तिद्वारैव, ईशपूजाविधायिनः ।

अवेक्ष्य द्रोहिणां चैव, सङ्ख्यायाः स्वल्पता मता ॥२५६॥
अनादि काल पूजायाः, निषेधका अर्वाचीनाः ।
यदि पूजा न प्राच्या, स्यान्निषिद्धा वादिभिः कथम् २५७
आधुनिकनिषेद्धृणां, यथा च ढुंढकादीनां ।
युक्तिशून्य विचारस्य, आदरो न विधीयते ॥२५८॥
तन्मतेऽज्ञानिनोजीवा, गृहस्थाः कति चागताः ।
कल्पित्व नूतवेषं च, भ्रमन्ति लुम्पका जनाः ॥२५९॥
यत्राज्ञानस्य बाहुल्यं, तत्र तेषां प्रचारता ।
शास्त्राचार बहिर्भूता, आचरणा च दृश्यते ॥२६०॥
रात्रौ जलवियोगेन, अशौचं तु पदे पदे ।
लघु वृहद्वृद्धिशङ्कायां, जातायां किं वितन्यते ॥२६१॥
पिशाचसदृशो वेषः, विरुद्धः शास्त्रतः सदा ।
महामिथ्यात्विनो ज्ञेया, लुम्पका दोषपोषकाः ॥२६२॥
युक्तियुक्त्या प्रसिद्धा सा, पूजा कल्याणकारिणी ।
कथं तस्या निषेधं ते, कुर्वन्ति लुम्पकाजनाः ॥२६३॥
वीतराग-सपर्यायाः, फलं मोक्षो निगद्यते ।
तस्या निषेधकर्त्तॄणां, फलं संसारवर्धनम् ॥२६४॥
लुम्पकविषये नैव, इच्छा तु लेखने भवेत् ।

अमुलखर्षि सौभाग्यचन्द्रास्ते हेतवो मताः॥२६५॥
स्वयं नष्टा परांश्चैव, नाशयति च सर्वथा।
ततस्तेषां च शिक्षायै,लिखितं बिन्दुमात्रकम्॥२६६॥

दिगम्बरीय पूर्व पक्षः—

नग्नाटा ईशमूर्त्तिं च, मन्यन्ते दृढ़भावतः।
पूजाऽऽकार विधानादौ,तेषां विभिन्न मान्यता॥२६७॥
यादृशो जिन देहस्य, आकारश्च दिगम्बरे।
तादृशाकारतस्तुल्या, मूर्त्ति जैनेश्वरी मता॥२६८॥
आकारस्य विभेदे च, भावेषु भिन्नता भवेत्।
अत आकारतस्तुल्या,मूर्त्तिरपि विधाप्यताम्॥२६९॥
यथा भगवतो देहः दृश्यते नग्न रूपतः।
नग्नरूपैव सा मूर्त्तिः, मन्तव्या सर्वथा मता॥२७०॥
भगवद्गुह्यचिह्नं च, स्पष्टमेव विलोक्यते।
तथा खड्गासनी मूर्त्यां,गुह्यचिह्नं च कार्यताम्॥२७१॥
एतादृग्यदि मन्येत, तदास्मद्भिन्नता न हि।
अन्यथा खलु कर्त्तव्ये,शास्त्रार्थश्च विधीयते॥२७२॥

उत्तर पक्ष :—

अस्योत्तरं समीचीनं, प्रयच्छामि सुयुक्तितः।

यदिचेश्वर नाग्न्यं च,भवतां दृढ़ सम्मतम् ॥२७३॥
सर्वथा तत्र तेनैव[1], सदा मूर्त्तिस्तु कार्यताम् ।
एकदेश समीकारे, अन्यत्र विषमं कथम् ॥२७४॥
भगवच्चक्षुषोःकाली, कीकी शुक्ला च डोलिका।
श्यामस्निग्धा शुभा,पक्ष्म केशराजिः सुशोभना॥२७५॥
ओष्ठौ बिम्बसमौ प्रोक्तौ, हस्तपादेषु रक्तता ।
तलौतथाविधातव्यौ,केशाश्च श्याम स्निग्धकाः॥२७६।
सकेशस्तनतामूर्त्त्यां, केशाश्च गुह्य स्थानके ।
स्नसाः कथं न तन्यन्ते;प्रतिमासु त्वया तथा ॥२७७॥
एतत्सर्वं परित्यज्य, चिह्नमेवं कथंकृतम् ।
क्रियते यदि चिह्नं,चेत्तदाऽन्यदपिकार्यताम्॥२७८॥
यदि सर्वं न तन्येत, कथं चिह्नेषु चाग्रहः ।
चिह्नस्य दर्शनेनैव, भावना कामुकी भवेत् ॥२७९॥
वीतरागाश्चनो लिङ्गं,निष्कारय यान्ति सर्वदा ।
दीक्षाकाले च तत्स्कन्धे, देवदूष्यं च स्थापितम्॥२८०
देवेशेनेति मन्तव्ये, कथं नग्ना भवेयुस्ते ।
देवदूष्येन वै मूर्च्छा, परिग्रहो न कथ्यते ॥२८१॥

---

[1]—रूपेण ।

येन राज्यादिकं सर्वं, त्यक्तं च क्षणमात्रतः ।
तस्मिश्च वीतरागे वै,मोह सम्भावना कथम्।२८२।
यावत्समयपर्यन्तं, तत्तिष्ठेत्तत्र ज्ञायताम् ।
सवस्त्रत्वं जिनेन्द्रेषु, अपयाने न वस्त्रता ॥२८३॥
यथाऽऽहारनिहारौ च, चर्मदृस्टावगोचरौ ।
तथा चेश्वर नाग्न्यत्वं, अन्यैरपि न दृश्यते ॥२८४॥
मूर्त्यां नग्नत्वरूपं च, स्पष्टरूपेण लोक्यते ।
विरहिणां तु तद् दृष्ट्वा,दुर्भावना च मानसे[1] ॥२८५॥
अतएव च नग्नाटैः, स्त्रीणांमोक्षो निषेधितः ।
तासां त्रैकालिकं लिङ्ग, दर्शनमनिवारितम् ॥२८६॥
प्रातःकाले गुरोर्लिङ्ग, मध्याह्ने देवलिङ्गकम् ।
विभावर्यां पतेर्लिङ्गं पश्यन्ति प्रेमभावतः ॥२८७॥
लिङ्गदर्शनतस्तासां, तद्भावो हृदि जायते ।
मोक्षाधिकारता तासां,स्वप्नेऽपि नहि तन्मते॥२८८॥
अतो नाग्न्यं परित्यज्य, वीतरागाकृतिस्तथा ।
तादृग्मूर्त्तिर्विधातव्या,दृष्टृणां ध्यानपोषिका॥२८९॥

१—जायते ।

श्वेताम्बरीय जैनेषु, मूर्त्तिस्तादृक् च दृश्यते ।
श्यामभ्रूकुटिस्निग्धत्व, सूक्ष्मौ च पक्ष्मलौतथा॥२६०॥
वीतरागस्य पूजायाः, विधौ तेषाञ्चभिन्नता ।
साऽपि प्रसङ्गप्रस्तावे, कथ्यते बोधहेतवे ॥२६१॥
दिगम्बरा द्विधा ज्ञेया, मूर्त्तिपूजकनिन्दका ।
तोतातारणपन्थिनः,मन्यन्ते नैव मूर्त्तिकाम् ॥२६२॥
किन्तु शास्त्रञ्च मन्यन्ते,शास्त्राणां मन्दिरं तथा ।
तेषामग्रे प्रदीपादिक्रिया, सर्वाविधीयते ॥२६३॥
मूर्त्तिं ये एव मन्यन्ते, तेऽपिद्विधाउदाहृताः ।
विंशतिपथिकाः, केचिन्त्रयोदशात्वपन्थिनः ॥२६४॥
जलाद्यष्टविधापूजा, विंशतिपन्थिभिर्मता ।
आर्द्रवस्त्रेण मार्जित्वं[१],तेरापन्थिषु सम्मतम् ॥२६५॥
जलचन्दनपुष्पादि, यजे स्वाहेति भावतः ।
उदित्वासर्वनीरादि, मूर्त्त्यग्रेषु च ढौक्यते ॥२६६॥
विंशतिपन्थिभिः सर्वैः, पूजा तादृग्विधीयते ।
तेरापन्थिजनाश्चैव, वदन्त्यन्यत्करोतिन ॥२६७॥

---

१—परिमार्जनंप्रोच्छनं क्रियतेतत् ।

केनापि श्रेष्ठिना चैव, कंचिज्जनं निमन्त्र्यवै ।
प्रोक्तमद्य गृहे मे च,मिष्टान्नं परिभुज्यताम् ।२९८।
यदा गृहे च भुक्त्यर्थं, आगतः सज्जनस्तदा ।
मृण्मयगोलकं सम्यक्केनचित्परिवेशितम् ॥२९९॥
तद्दृष्ट्वा तेन सम्प्रोक्तं, किमिदं ढौकितं त्वया ।
तेनोक्तं मोदकं,सम्यक्खाद्यतां शुभभावतः॥३००॥
तथैवात्र प्रभूणाश्च अग्रे गत्वा च प्रोच्यते ।
यजामहे च मिष्टान्नं[1],प्रोक्त्वा दत्ते च ह्यन्यकम्।३०१।
नालिकेरफलं च्छित्वा, सूक्ष्मखण्डो विधीयते ।
कुंकुमरागरक्तं च, कृत्वा पुष्पेण ढौक्यते ॥३०२॥
पुष्पवुध्या ददाने च, मृषावादोऽत्र जायते ।
अथवा तन्दुलान् रक्त्वा, दीयते पुष्परूपतः ।३०३।
पुष्पवुध्या च रक्तानां तन्दुलादि प्रदापने ।
उपहासं प्रभोः कृत्वा,कस्यां गत्यां च गम्यते ।३०४।
उपयोगेन धर्मोऽपि, क्रियातः कर्मबध्यते ।
परिणामेन बन्धोऽपि,जायतेऽत्रापि ज्ञायताम् ।३०५।

---

१—नैवेद्यंयजामहे स्वाहा ।

लविङ्गादि प्रभूणाश्च, ढौकने, किंफलं भवेद् ।
वातरोगश्च जातो न, येनोपशमता भवेत् ॥३०६॥
किं बुध्या ढौकते तच्च, तादृशं च स्फुटंवद ।
कल्पितानि च शास्त्राणि,तवेति मन्यते मया।३०७।
सत्यप्रकाशपत्रे च, युक्तियुक्त्या विचारितम् ।
अतस्ततोऽपि ज्ञातव्यं,सत्यजैनत्वकांक्षिणा ॥३०८॥
तथैव धूपदीपाक्षत, नैवेद्यफलादिषु ।
मृषावादप्रकारश्च, सर्वत्र परिचिन्त्यताम् ॥३०९॥
पञ्चकल्याणकादौ च, क्रियन्ते च समाः क्रियाः ।
तस्या निरन्तरंकार्ये,दोष दृष्टिः कुतोभवेद्॥३१०॥
कल्याणकक्षणे चैव, नाटकं परितन्यते ।
रामलीलासमं ज्ञेयं, दृश्यते तच्चलेशतः ॥३११॥
देवलोकात्परिच्युत्य, मातृगर्भेऽवतीर्यते ।
एषा ख्यातिश्च सर्वत्र ,नग्नाटानां न तादृशी ॥३१२
तेषां तु देवलोकाच्च, परिच्युत्य प्रभुस्तदा ।
अवतरति पेटायां, गर्भं पेटा तु धारयेत् ॥३१३॥
जडस्वरूपपेटायां येषां मातृत्वभावना ।
तेषांमते पितुश्चैव, किं जडो न निगद्यते ॥३१४॥

पेटा माता भवेद्यस्य, तस्य पिता तु को भवेत् ।
अत्र विचारकर्त्तव्ये, वैलक्षण्यं तु सम्भवेत् ॥३१५॥
कुत्र चित्केनचिच्चैव, श्रुतं तादृग्न चेदृशम् ।
प्रभुर्वा जडपेटासु, गर्भत्वेनावतीर्यते ॥३१६॥
गर्भाधानादिकाः सर्वाः, क्रियास्तत्रेन्द्रकादिभि ।
स्वीयमाचारमागत्य,कृत्वाऽगच्छच्च स्थानके॥३१७
जडमातापितृभ्यां वै, उत्पत्तिश्च प्रभोर्यदा ।
मन्यते हृदयं तेषां, जडस्वरूपमेवहि ॥३१८॥
जन्माविर्भावता तस्मा,ज्जन्मादिकाः समाः क्रियाः।
देवा देव्यश्च सम्मील्य,प्रभुं नीत्वा सुदर्शने ॥३१९॥
गत्वाऽभिषेकमुख्यां च, क्रियां तत्रैव कुर्वंति ।
पश्चाद्राजादिकैः सर्वैः, जन्मोत्सवः प्रतन्यते ॥३२०॥
ततो वैवाहिकं कृत्यं, सर्वं सर्वैश्चतन्यते ।
ततो राज्याभिषेकं च, क्रियते शृणु भावतः ।३२१।
सिंहासने च राज्ञोवै, पुत्तलं परिधार्यते ।
तं राजानं समे मत्वा,याचन्ते न्यायमार्गताम्॥३२२॥
भूत्वा कश्चिदधिष्ठाता, न्यायं ददाति सार्विकम् ।
अन्ये सर्वे च सत्यत्वं,उक्त्वा ददतितालिकाम् ॥३२३।

केचित्तत्रैव नृत्यन्ति, गायन्ति केऽपि सज्जनाः ।
नाटकं केऽपि कुर्वन्ति, हावभावपुरःसरम् ॥३२४॥
काल्पनिकाः समे देवाः, लोकान्तिकाश्चशास्वतम् ।
कुर्वन्ति स्वीयमाचारं, वदन्ति प्रभु सम्मुखे ॥३२५॥
जयनन्देति पूर्वश्च, जयभद्रेति घोषणाम् ।
कुर्वन्ति च प्रभो तीर्थं, प्रवर्त्तय वदन्ति ते॥३२६॥
जगज्जीव प्रबोधाय दीक्षां, गृहाण तीर्थप ।
इत्येवं सर्वेसम्मील्य,कुर्वन्ति याचनां तदा ॥३२७॥
नृदेवेशैश्च सम्मील्य, दीक्षोत्सवो विधीयते ।
अनेकराजपुत्रैश्च, दीक्षा तैः सह गृह्यते ॥३२८॥
दीक्षां लात्वा रथारोहं, कृत्वा विहरणं भवेत् ।
रथे संस्थाप्य नग्नाटैः,विहारः कार्यते विभोः ॥३२९॥
दीक्षां श्वेताम्बरे प्राप्य, पद्भ्यां विहरणं सदा ।
नतु रथेषु संस्थाप्य, विहारः कार्यते कदा ॥३३०॥
कौचित्तु पितरौ भूत्वा, दत्तश्चाहारशुद्धकम् ।
गृहीत्वा प्रभुराहारं, गच्छन्त्यन्यत्र स्थानके ॥३३१॥
प्रभूणां कल्पनाऽन्यस्यां,व्यक्तौ यदा विधीयते ।
तां व्यक्तिं जगदीशंच,मत्वा क्रिया वितन्यते ॥३३२॥

दीक्षा स्वीकरणात्पश्चाद्रथं, कदापि नारोहद् ।
रथयात्रा किमुद्दिश्य,ईशस्य क्रियते च भोः ॥३३३॥
दीक्षाग्रहणकार्याय, रथमारुह्य गच्छति ।
नग्नो भूत्वा तदातत्र, न रथाऽरोहणं कृतम् ॥३३४॥
रथाऽऽरोहोऽपि यत्काले, वस्त्रालंकारसंयुतः ।
तदा तत्र न नग्नत्वं, अधुना नग्नता कथम् ॥३३५॥
भवन्मतेऽपि दीक्षां वै, आदाय त्याजितं समम् ।
प्रागवस्थासु नैवं, तन्मुञ्चति परमेश्वरः ॥३३६॥
कया भावनया गन्त्रीं, आरोहयेत्प्रभुं तदा ।
त्यागावस्थासु, स्यन्दनारोहणं नैव युज्यते ॥३३७॥
अत्यागभाव कालेषु, न नाग्नै रथरोहणम् ।
रथारोहोऽपि केनापि, प्रकारेण न युज्यते ॥३३८॥
वदन्ति केऽपि नग्नाटा, त्वन्मन्दिरं न सुन्दरम् ।
वीतरागत्वसद्भावः, दर्शकं नैव विद्यते ॥३३९॥
तदपि नैव युज्येत, मन्दिरं तस्य नो भवेत् ।
वीतरागा अनगाराः, चागारैर्रहिता सदा ॥३४०॥
इदं शीतलनाथस्य, महावीरप्रभो रिदम् ।
इदं श्रीशान्तिनाथस्य,इदं चन्द्रप्रभोश्चभोः॥३४१॥

एवं च वीतरागाणां, गृहाणि क्रियन्ते त्वया ।
क्व भवन्ति अनागाराः,गृहे च विद्यमानके ॥३४२॥
अनागारेषु सागारभावोऽपि नैव युज्यते ।
सागारिता गृहेणैव, तदाऽनगारता न वै ॥३४३॥
जिनगृहं कथं तर्हि, निर्माप्यते दिगम्बरैः ।
वीतरागगृहं नैव, युज्यते युक्तियुक्ततः ॥३४४॥
अस्मन्मते तु तादृक् च, दोषावकाशता न हि ।
पञ्चकल्याणकादीनां, आरोपस्य च सम्भवात्॥३४५॥
भक्ति भाव विधानाय, स्थापना तत्र तन्यते ।
बीतरागत्वमेकं च केवलं, तु भवन्मते ॥३४६॥
भक्तिभाव विधानाय, भवद्भिर्यदि मन्यते ।
तदाऽन्येषां कथं, दोषाऽऽरोपणं क्रियते त्वया॥३४७॥
अतस्तादृश कर्त्तव्ये, दोषलेशो न युज्यते ।
केवल वीतरागीयां, दशां यो मन्यते सदा ॥३४८॥
तेषांमते न युज्येत, जिनगृहविधापनम् ।
तथैव रथयात्रादि, युज्यते न कदाचन ॥३४९॥
चन्दनपुष्पपूजायां, नैवेद्य धूप दीपके ।
फलाऽऽरात्रिक कर्त्तव्ये,मृषावादो महान्भवेद् ।३५०।

चन्दनादिकपूजायाः, अभावे ज्ञापनं तथा ।
मिथ्यारोपस्य सद्भावे, गतिः कीदृग्भविष्यति॥३५१॥
नैक पैटासु मातृत्वरूपेण, कल्पना कृता ।
कुत्रचिच्च कदाचिच्च, दृष्टं केन न तादृशम् ॥३५२॥
नाभिराजादि भूपानां,राज्ञीपेटा न सम्भवेद् ।
किमुद्दिश्य च नग्नाटैः, तादृशी कल्पना कृता॥३५३॥
गर्भापहरणं चैव, श्वेताम्बरैर्न गोपितम् ।
आश्चर्यं मन्यते तत्र,नग्नाटैश्च विनिन्दितम् ॥३५४॥
नूतनशास्त्रकर्त्तव्ये काले, निष्कासितं च तैः ।
प्राचीनशास्त्रमन्तृभिः, श्वेताम्बरैर्न गोपितम् ॥३५५॥
अधुना कुशला वैद्याः, कुर्वन्ति तादृशीं क्रियाम् ।
देवानां तादृशे कार्यें, कर्त्तव्ये किमुचित्रता ॥३५६॥
पेटास्वनेकमातृत्व, पितृत्वेनैव कल्पिते ।
मत्तव्येऽपि न लज्जा,स्यादजितादिजैनस्यवै ॥३५७॥
बहु दोषाश्च नग्नाटे, इदानीमपि दृश्यते ।
तथापि परकीयांश्च, दोषां दृष्ट्वा च रज्यते ॥३५८॥
अदुष्टे दोषितारोपः, झटिति तेन तन्यते ।
दिगम्बरेण शास्त्रे च, श्वेताम्बरस्य सर्वदा ॥३५९॥

तेषां मते च, साधूनामाचारः प्रणिगद्यते ।
दिशावस्त्रं च येषां, ते दिगम्बरास्तु कीर्त्तिताः।३६०।
दिगम्बरा गृहस्था नो, वस्त्राणां धारणे सति ।
क्षुल्लकैलकब्रह्मत्वचारिणो, न दिगम्बराः ॥३६१॥
विंशतिः किन्तु संख्यानां, मुनीनां गदिताः खलु ।
ते च दिगम्बराः स्युर्वै, अन्ये च नामधारिणः ॥३६२॥
भवन्ति मुनयो नग्नाः केचिच्चलन्ति पादतः ।
केचिच्च धूम्रयन्त्रेषु,आरुह्य यान्ति ते जनाः॥३६३॥
जय कीर्त्यादि साधुश्च, पद्भ्यां विहृत्यचागतः ।
बलिवर्द्दिगन्त्र्यौ च, गृहस्थाःपञ्चविंशतिः ॥३६४॥
श्राविकासप्तसङ्ख्याकाः अन्येच श्रावका मताः ।
तैः सह शुभ यात्रायै, सम्मेताचल आगतः ॥३६५॥
कमण्डलु मयूराणां, पिच्छानां गुच्छकं तथा ।
विग्रहमानकं चैव, स्थूलं बृहत्कटासनम् ॥३६६॥
धान्यानां तृणमाच्छाद्य, उपरि च कटासनम् ।
सघनवस्त्रकुट्यां च, शयनं जयकीर्तीनाम् ॥३६७॥
सगृहं दीपकं चैव, रात्रौ पार्श्वे च धारयेत् ।
अग्निकायस्य संस्पर्शः, रात्रौ तैर्न निषेधितः॥३६८॥

शौचार्थं जल याञ्चा च, तै रात्रावपि साधुभिः ।
कमण्डलूं प्रपूर्यैव, जलमानीय स्थाप्यते ॥३६९॥
सायङ्काले समार्यं च, क्रियते तैश्च साधुभिः ।
प्रातःकालेऽपि तादृक् च, तन्यते सुखमिच्छुभिः॥३७०।
विचारोऽत्रैव कर्त्तव्यः, दीक्षाकाले कृतश्चकिम् ।
चारित्राणाञ्च पञ्चानां, मध्ये किं स्वीकृतं तदा ॥३७१॥
यावज्जीवञ्च तत्किंवा, किंवा चेत्वरकालिकम् ।
प्रोच्यते चेत्वरं कालं, गृहिणां तर्हि कीदृशम् ॥३७२॥
इत्वरीयं गृहस्थानां, साधूनामपि तादृशम् ।
गृहि मुनिषु भेदो न, भवदीयमते मतः ॥३७३॥
यावज्जीवञ्च कथ्येत, गृहीतं च समायकम् ।
तर्हि सायं प्रभाते च, समायं क्रियते कथम् ॥३७४॥
द्वि सन्ध्यायां च, षडावश्यकं तु करणं मतम् ।
सम्मूर्छिमेषु तादृक्सा, प्रणालिः प्रपलायिता ॥३७५॥
व्युच्छिन्ने जिन, कल्पेऽपिजिनकल्पित्व कल्पना ।
द्विकालं प्रतिक्रान्तिश्च, द्विकालं प्रतिलेखनम् ॥३७६॥

---

१—वितन्यते २—सामायिकं क्रियते ।

प्रत्याख्यानञ्च कर्त्तव्यं, पारणं तस्य भावतः।
सप्तवारं च चैत्यस्य, वन्दनं चैत्यवन्दनम् ॥३७७॥
सप्तकृत्वश्च स्वाध्यायः, निर्जरायै विधीयते।
रात्रौ स्वाध्याय ध्यानं, च संस्तारकीय पौरुषी।३७८।
क्रियाकाण्डं महच्चात्र, श्वेताम्बरे निरूपितम्।
सूक्ष्मजीवस्य रक्षायै, मुखवस्त्रस्य धारणम् ॥३७९॥
सावद्यवाचिकं पापं, साधूनामन्यथा लगेत्।
धर्मोपकरणं यच्च, शास्त्रेषु प्रतिपादितम् ॥३८०॥
तत्सर्वं यमरक्षायै, यथा पिच्छी कमण्डलूः।
कटासनं तृणाद्यञ्च, पटकुटी तथैव च ॥३८१॥
धर्मोपकरणाभावे, धर्मोपकरणं मतम्।
दीपादिकञ्च सावद्यं, साधुभिः सेव्यते कथम् ॥३८२॥
सेव्यते यदि तैश्चैव, तदा ते साधवः कथम्।
यदि शौचक्रियां कृत्वा, तत्रागच्छति साधुराट् ३८३
कमण्डलू जलेनैव, क्षालयत्यास्यमुख्यकम्।
हस्तपादादिकं सर्वं, क्षालितं मन्यते शुभम्[१] ॥३८४।
उष्णजलस्य नो कालं, जानन्ति साधवस्तथा।

१—शुद्धं।

आहारविधि प्रस्तावे, तेषां विचित्रता खलु ॥३८५।
अभिग्रहो गृहे यस्मिन्, साधूनां पूर्यते तदा ।
तद्गृहस्वामिनी काचित्स्त्री,चागच्छतिसत्वरम् ।३८६।
प्रक्षाल्य हस्तपादौ च, भोजनार्थं निमन्त्रयेत् ।
उत्थितः सन् मुनिस्तत्र, गृह्णाति किल भोजनम् ।३८७
ग्रासं कृत्वा ददत्येव,स्त्री भोजयेच्छनैः शनैः ।
गरिष्टाहारमादत्तो, किञ्चिद् वत्वरूपकम् ॥३८८॥
मार्गे च भक्त लोकेभ्य, आहारः क्रियते सदा ।
उच्छिष्टं सर्वं देहं स्त्री, आर्द्र वस्त्रेण मार्जयेत् ॥३८९॥
एतां सर्वां क्रियां चैव,स्त्री करोति हि तन्मते ।
कल्पित जिनकल्पानां, अवस्थां पश्य कीदृशीम् ।३९०
दिगम्बराः क्व नग्नाटाः, क्वजि न कल्पित-साधवः ॥
महाशक्तिधराश्चैते, दृष्टिवादस्य धारकाः ॥३९१॥
समुद्रवारि हस्ते च, येषां माति न संशयः ।
शासन भारयोग्यं च,शिष्यं सम्पाद्य भावतः ।३९२
सर्वशिष्यस्य सामीप्ये,तेन-शिक्षा चदीयते ।
द्वादशवर्ष पर्यन्तं, सूत्रमध्यापयेद्गुरुः ॥३९३॥
पश्चाद्द्वादशवर्षान्तं, ददाति चार्थवाचनाम् ।

द्वादश वर्षपर्यन्तं, विहरेत्साधुना सह ॥३९४॥
तत आचार्यपदवीं; च प्रदाय जिनकल्पयेत् ।
एकरात्रिश्च ग्रामेषु, नगरे पञ्च रात्रिकम् ॥३९५॥
सर्वदा मौनमास्थाय, स्वाध्यायः परितन्यते ।
नव्यं शिष्यं च नो, कुर्यात् ग्रन्थ निर्मापनं नहि ३९६
न च व्याख्यानकारित्वं, ईर्याया भेदनं न हि ॥
यदि षण्मासपर्यन्तं, आहारो नैव मील्यते ॥३९७॥
तथापि शमभावेन, आत्मानं भावयेत्सदा ।
वने पर्वतकोणेषु, श्मशाने शून्यमन्दिरे ॥३९८॥
एकान्त स्थानके कुत्र, मौनंध्यानं समाचरेत् ।
एतादृग्जिनकल्पिनामाचारः क्वातिदुष्करः ॥३९९॥
क्व कल्पितेषु नग्नेषु, आचार इति भाव्यताम् ।
क्व पर्वतगुरुर्मेरुः, क्व वल्मिकश्च वन्यकः ॥४००॥
क्व च भास्करसद्भासः, क्व च खद्योतजातयः ।
हस्ति शरीर सम्भारः, उह्यते हस्तिना सदा ॥४०१॥
गर्दभजातिना नैव, तद्भार उह्यते कदा ।
कपोल कल्पिताचारः, भवन्मते तु विद्यते ॥४०२॥
पारंपर्यागताचारः, सम्भवेन्न कदाचन ।

क्षुल्लकैलक वर्णित्व, कल्पना नूतनी कृता ॥४०३
शास्त्रे नामावलिनास्ति, कुतस्तादृक्च कल्पना ।
वस्त्रादिकं न द्वे कच्छे, क्षुल्लकैः परिधार्यते ॥४०४॥
एलकस्यापि द्वे कच्छे, नान्यं च भवतः कदा।
आचारं वर्णिनां चैव, न जानाति मुनिस्तथा॥४०५॥
आचारो ब्रह्मचारिणां कथितस्तेन साधुना ।
षडावश्यक कर्त्तव्यं, साधूनां नैव विद्यते ॥४०६॥
प्रतिलेखनिका नास्ति, समित्यानाञ्च का कथा।
काल्पनिकमुनीनां च, आचारऽऽगमनं कुतः ॥४०७॥
क्रिया विधिविधानादि, सर्वं काल्पनिकं मतम् ।
श्वेताम्बरीय तीर्थेषु, गत्वा युद्धं वितन्यते ॥४०८॥
येन केन प्रकारेण, स्वसत्वं परिस्थाप्यते ।
मक्षितारंग तीर्थेषु, धुलेवा शौरिनामके ॥४०९॥
महावीरे च पापायां, राजगृह्यादितीर्थके ।
चम्पापूर्यां च सम्मेते, वाराणस्यां तथैव च ॥४१०॥
रूप्यकं कोटिसंख्यानां, न्यायालये व्ययं भवेत् ।
मांसाशिपोषणं कार्यं, जैनानां नैव युज्यते ॥४११॥
अधुनापि च तीर्थेषु, क्लेशं कर्त्तुं च तत्पराः ।

बीतरागस्य भक्तानां, रागद्वेष प्रधानता ॥४१२॥
जलादग्निः समुत्थितः, तादृशो न्याय आगतः।
कषाय शान्तिमिच्छूनां, कषायस्य प्रधानता ॥४१३॥
सुखशान्त्यै क्व स्थानेषु, गन्तव्यं वद बालिश।
कषायक्षय कर्त्तव्ये, वस्त्राणां विघ्नता मता ॥४१४॥
चारित्रोपगृहाणां च, रक्षणे च कषायता।
वस्त्राणां त्याजने चापि, कषायो नैव त्याजितः॥४१५॥
तेषामज्ञानभाजांवै, नाग्न्ये फलं न सम्भवेत्।
कषाय कारणं वस्त्रं, मत्वा नग्ना धरातले ॥४१६॥
विहरन्तीति बुद्ध्यापि, त्याजिता न कषायता।
किन्तु कषाय बृद्धिश्च, नग्नाटेषु च दृश्यते ॥४१७॥
न हि सम्यक्त्व लेशोऽपि मुनिपंडितव्यक्तिषु।
बाबूपार्टिषु काचिच्च, मन्दता केषु दृश्यते ॥४१८॥
व्यर्थकोलाहलं कृत्वा, ते मीलत्यपितेषु वै।
मूर्त्तिपूजा प्रसङ्गे च, प्रासङ्गिकं च वर्णितम् ॥४१९॥
अजितानां चग्रन्थावै, अत्र वर्णनकारणम्।
न हि द्वेषत्वसद्भावः, किन्तु यथा स्वरूपकम्॥४२०॥
यादृग्दृष्टं श्रुतं यस्मा, त्तादृशमत्र वर्णितम्।

केवलिकवलाहारः, स्त्रीशूद्रमुक्तिवर्णनम् ॥४२१॥
यथायोग्यं च चर्च्यैत, अन्यदपि प्रसङ्गजम् ।
अथमूर्त्ति प्रस्तावेषु, काचिद्विशेषता मता ॥४२२॥
द्वेधा श्वेताम्बरे मूर्त्तिः प्रोक्ता शास्त्रानुसारतः ।
विशुद्धजिनकल्पं च, आश्रित्य तादृशीमता ॥४२३॥
स्थविरकल्पसद्भावे, मन्यते नहि तादृशी ।
व्यवहारोऽपिलोकोत्तरो, गृह्यते सुयोगतः ॥४२४॥
एकतो निश्चयो ज्ञेयः, व्यवहारोऽपि चान्यतः ।
नयद्वयानुसारेण, व्यवस्थाजैनशासने ॥४२५॥
रथयात्रादिकं सर्वं, व्यवहारेणयुज्यते ।
केवलं निश्चयं चैव, मन्यन्ते ये भवादृशाः ॥४२६॥
तेऽपि मिथ्यात्विनो,ज्ञेया व्यवहारस्य लोपनात् ।
नयद्वयीं समाश्रित्य, कार्यं कुर्वन्ति ये जनाः ।४२७॥
ते जैनशासने मान्याः, अन्ये शासन बाह्यकाः ।
दिगम्बरीयशास्त्राणां, आचाराणां[1] तथैवच ॥४२८॥
कवलाहारा भुक्तीनां, विचारेच्छा प्रजायते ।
विशेषावश्यग्रन्थीय, टीका प्रभृति ग्रन्थके ॥४२९॥

---

१—गृहस्थ साधूनामाचाराणां ।

बहुस्पष्टत्व रूपेण, सर्वं तत्र विचारितम् ।
बालचन्द्रकृते ग्रन्थे, सत्यप्रकाशमासिके ॥४३०॥
अन्यसाधुजनेनापि, तत्रैव चर्चितं खलु ।
तत्त्वाख्याने च ग्रन्थे वै, ग्रन्थकारेण चिन्तितम्॥४३१॥
अन्यप्रकरणे शिष्टं, वक्ष्ये युक्त्यनुसारतः ।
तत्सर्वं परिज्ञातव्यं विशुद्ध धर्मकांक्षिभिः ॥४३२॥

॥ इति शास्त्रविशारद जैनाचार्य जगद्गुरु शासन प्रभावक विद्यासाहित्यधर्म्मोद्धारक जंगम युग प्रधान समाराधितसूरिमंत्र पूज्यापाद गुरुदेव श्रीविजयधर्म सूरीश्वर चरणारविन्देषु भृङ्गायमाणेन न्याय विशारदन्याय तीर्थोपाध्याय मङ्गल विजयेन विरचिते योग प्रदीप प्रकरणे मूर्त्ति द्वारा परमात्मपूजा प्रकरणवर्णननामाद्वादश प्रकाशः समाप्तः ॥

## ॥ अथत्रयोदशम प्रकाशः ॥

### स्वरोदय निरूपणं

अजोऽकलोऽविनाशी यः, यः समता सरित्पतिः ।
निष्कलङ्को विशुद्धश्च, पातुवः श्रीजिनाधीशः ॥१॥
निरञ्जनश्च नैर्गुण्यः, सगुणो निर्मलः सदा ।
निर्भयो निरहङ्कारः, निर्ग्रन्थो जगदीश्वरः ॥२॥
जन्मजरात्वरोगादि, क्लेशकर्मबहिर्मुखम् ।
प्रातिहार्य समायुक्तः, सर्वज्ञः परमेश्वरः ॥३॥
पार्श्वेश जिनदेवानां, मूर्त्तिः कल्याणकारिणी ।
सम्मेताचलप्रासादे, स्थितां वन्दे निरन्तरम् ॥४॥
कालज्ञान प्रभावेन, आगमस्यानुसारतः ।
हृदिगुरुकृपां धृत्वा, स्वरज्ञानं निरूप्यते ॥५॥
सर्वत्रैवोपयुज्येत, धर्मकार्येऽपरे तथा ।
अतस्तदपि प्रोच्येत, मयाज्ञानानुसारतः ॥६॥
अत्यन्तस्थिरचित्तेन, ज्ञायते च स्वरोदयम् ।
ततः शुभाशुभं कार्यं, भाविलाभस्य सूचकम् ॥७॥

शरीरे नाडिकाः सन्ति, अनेका गुणधारिकाः ।
तासुतिस्रः प्रधानाःस्युः,कथ्यन्ते चाभिधाः खलु ॥८॥
इङ्गलापिङ्गले चैव, सुषुम्ना च तृतीयका ।
विभिन्नाश्च गुणास्तासां, कथ्यन्ते सुखहेतवे ॥६॥
भवति भ्रकुटी चक्रे, प्रकाशः प्राणवायुनाम् ।
बङ्कनाड्याश्च मार्गेण, नाभौ निवसनं भवेत् ॥१०॥
नाभिप्रदेश सञ्चारा, दक्षिणं इङ्गलागृहम् ।
वामतः पिङ्गलास्थानं, द्वयोर्मध्ये तृतीयकम् ॥११॥
वामस्वरस्य सञ्चाराच्चन्द्रोदयं विज्ञायताम् ।
यदा दक्षिणसञ्चारः, तदा सूर्यो निगद्यते ॥१२॥
निशाकरः सुकार्याय, दुष्कार्याय रविः पुनः ।
एवं विधे च कर्त्तव्ये, जायते सुखशांतिता ॥१३॥
द्विस्वरस्यैव सञ्चारः, समकाले यदा भवेत् ।
तृतीया नाडिका ज्ञेया, कार्ये हानिर्भवेत्तदा ॥१४॥
चन्द्रस्वरस्य सञ्चारे, स्थिरकार्यं दृढं भवेत् ।
सूर्यस्वरस्य सञ्चारे, चरकार्यं सुयोगतः ॥१५॥
कृष्णपक्षपतिस्सूर्यः, शुक्लपक्षपतिस्तथा ।
चन्द्रश्च परिज्ञातव्यः,लात्वा तिथिविभागकम् ॥१६॥

कर्त्तव्यकार्यकर्त्तव्ये, तत्रैव लाभता भवेत् ।
कृष्णपक्षेषु चाद्यास्ताः,तिथितिसश्चसंमताः ॥१७॥
तत्पश्चाच्चन्द्रस्था ज्ञेया, तिस्रश्च तिथयः खलु ।
ततः सूर्यस्य ज्ञातव्याः चन्द्रस्यापि ततो मता॥१८॥
एवं रीत्या च पक्षान्तपर्यन्तं परिज्ञायताम् ।
शुक्लपक्षस्य रीतिश्च, कथ्यते सुखहेतवे ॥१९॥
शुद्धपक्षेषु चाद्यास्ताः, चन्द्रस्य तिथियो मताः ।
ततः सूर्यस्य चन्द्स्य,ज्ञातव्याः स्युश्च भावतः॥२०॥
भोमशनिश्चरादित्य, वाराणां च रविः पतिः ।
सोम बुध गुरूणां च, शुक्राणां चन्द्रमा पतिः॥२१॥
एवं रीत्या च ऋक्षाणां, पति विषय भावनम् ।
पश्चात्कार्यस्य कर्त्तव्ये,लाभस्तु बहुलो भवेत् ॥२२॥
कृष्णपक्ष तिथीनामारम्भे, सूर्यस्वरो भवेत् ।
तत्पक्षः सुखकारी, स्यात्प्रवीणस्य न संशयः ॥२३॥
शुक्लपक्ष तिथौ प्रातः, चन्द्रस्वरोदयो भवेत् ।
तदा पक्षः स शान्तित्वा,ऽऽधायकः परिज्ञायताम्॥२४॥
चन्द्रतिथौ स्वरश्चन्द्रः, सूर्ये सूर्य उदाहृतः ।
वहेद्यदि तदाकार्ये, पुष्टिः सुखं च जायते ॥२५॥

चन्द्रतिथौ स्वरः सूर्यः, यदि प्रकाश्यते तदा ।
कायपीडा च संक्लेशः, वित्तनाशश्च जायते ॥२६॥
सूर्यतिथिदिने प्रातः, चन्द्रस्वरश्च ज्ञायते ।
राजभयादि संक्लेशः,स्वान्ते चञ्चलता भवेत्॥२७॥
प्रतिपदि द्विपक्षाणां, सुषुम्नायाः स्वरो भवेत् ।
न लाभो हानिता नैव, भवेदत्र न संशयः ॥२८॥
सिंह वृषभ वृश्चिकाः,कुम्भश्चैताश्च राशयः ।
चन्द्रस्वरस्य विज्ञेया, कथ्यन्ते च पुना रवेः ॥२९॥
अन्यथा कार्यकर्त्तव्ये, हानिर्भवति सर्वथा ॥३०॥
कर्क मकर तूलाश्च, मेष एताश्च राशयः ।
तत्सूर्य योगसद्भावे, चरकार्यं प्रशान्तिदम् ॥३१॥
मीनमिथुनकन्याश्च, धनमेताश्च राशयः ।
द्विस्वाभावाश्च विज्ञेयाः, कार्ये हानिप्रदा मताः॥३२॥
चन्द्र सूर्यस्य ये मासाः, स्वरशास्त्रे प्रकाशिताः ।
पृथग्रूपेण विज्ञेयाः, राशिवर्गित भास्करात् ॥३३॥
कोऽपि प्रश्न विधानाय, आगतः शुभभावतः ।
पृच्छकश्च दिशायाश्च, विचारः खलु कथ्यते ॥३४॥

सम्मुखे वामके चोर्ध्वं, द्विविस्थते नैव पृच्छयते ।
तदा तु चन्द्रयोगश्चे,त्कार्यसिद्धौ न संशयः ॥३५॥
दक्षिणस्यामधश्चैव, पश्चिमायां स्थितेन वै ।
पृच्छयते सूर्य, योगश्चेत्कार्य सिद्धिर्भवेद्धुवम्॥३६॥
वामेतरे च स्थित्वा वै, सूर्यस्वरेषु पृच्छयते ।
लग्नवारतिथेर्योगे, मीलने कार्यता भवेत् ॥३७॥
वामेतरे च स्थित्वानु, प्रश्नः प्रासङ्गिको भवेत् ।
पूर्णश्चन्द्रः स्वरस्तत्र, कार्यसिद्धिस्तु जायते ॥३८॥
वामेतरे च स्थित्वा वै, चन्द्रस्वरेण पृच्छयते ।
रवि तत्त्वतिथिर्वारान्विना, कार्यं भवेत्कथम् ॥३९॥
अधः पश्चात्स्थितः कोपि, प्रश्नश्चागत्य पृच्छयते।
उदयश्चन्द्रतायाश्चेत्फलं, किञ्चिन्न जायते ॥४०॥
स्थित्वा वामेतरे भागे, सूर्यस्वरेण पृच्छयते ।
चन्द्रयोगं विना तस्य, कार्यसिद्धिर्न सम्भवेत् ॥४१॥
सन्मुखोर्ध्वदिशां स्थित्वा, सूर्यस्वरेण पृच्छयते ।
चन्द्रयोगं विना तस्य, कार्यसिद्धिर्भवेन्नहि ॥४२॥
समाक्षराणि चन्द्रस्य, विषमानि रवेः सदा ।
तेषां सङ्ख्या विधानाय, पद्धतिः परिदृश्यते ॥४३॥

चतुःषडष्ट द्विः सप्तः दशाद्वादश स्युस्तथा ।
समाक्षराणि ज्ञायन्तां, चन्द्रस्य[1] हि तदानि च ॥४४॥
एक त्रिपञ्चसप्तत्वं, नवैकादशसंख्यका ।
अक्षराणां च ज्ञातव्याः, विषमरूपयोगतः ॥४५॥
सूर्ययोगस्य ज्ञेयानि, विषमान्यक्षराणि च ।
स्वरं प्रश्नाक्षरं चैव, विज्ञाय निर्णयः खलु ॥४६॥
सर्वलौकिककार्याणि, त्यक्त्वा ध्याने दृढो भवेत् ।
श्रवणमननादीनां, करणे स्वरज्ञानता ॥४७॥
प्राणायामं तु योगाङ्ग, स्थिरचित्तेन साधयेत् ।
प्रथमभूमिकाः तस्य, स्वरोदयस्तु ज्ञायताम् ॥४८॥
प्राणायामविचारश्च, कठिनः सर्वदा मतः ।
द्वौ भेदौ तस्य विज्ञेयौ, निश्चय व्यवहारजौ ॥४९॥
स्वरूपे च स्वरूपेण, लीनो निश्चयतो भवेत् ।
सञ्चरेच्च यथाश्रेणि, सयोगी कुशलो मतः ॥५०॥
क्षपकोपशमे श्रेणी, कथिते जैन शासने ।
तयोः कालाद्यभावेन, साधना नैव विद्यते ॥५१॥

१—चन्द्रस्वरस्य ।

प्रत्यहं ध्यानताऽभ्यासे, मनः स्थैर्यं तु चेद्भवेत् ।
तदाऽनुभव लेशं च, अद्य प्राप्नोति कश्चन ॥५२॥
स्वानुभवस्य लेशेन, कठिनं कर्म नश्यति ।
अल्पभवे स भव्यात्मा,सिध्यति नात्र संशयः॥५३॥
व्यवहारानुसारेण, ध्यानभेदो न कथ्यते ।
पृथक्पृथक्स्वरूपेण, कथने ग्रन्थवृद्धिता ॥५४॥
अष्टौ भेदाश्च योगस्य, प्राणायामश्चतुर्थकः ।
तस्य सप्तप्रभेदाः स्युः, सकलसिद्धिदायकाः ॥५५॥
रेचकपूरके ज्ञेये, कुम्भकश्च तृतीयकः ।
शान्तिकसमते ज्ञेये, एकता लीनता तथा ॥५६॥
द्रव्यभावप्रभेदेन, रेचकादेश्च भिन्नता ।
देहस्थाशुद्धवायूनां, निष्कासने तु रेचकः[१] ॥५७॥
हिंसाऽसत्यादि पापानां, कषायाणां तथैव च ।
दुर्गुणानाञ्च निष्कासे,रेचको भावतो मतः ॥५८॥
शुद्धवायुप्रवेशेन, पूरको द्रव्यतः किल ।
दयासत्यादि भावानां, क्षमामार्दववस्तूनाम् ॥५९॥

---

१—रेचको द्रव्यतोभवेद् ।

सर्वोत्तमगुणानां च, प्रवेशो भावपूरकः ।
दुर्गुणानां च निष्कासे, गुणानां च प्रवेशने ॥६०॥
सर्वथा गुणवत्त्वं स्या, त्कदाचिद्दैव योगतः ।
वायुस्थिरत्व कर्त्तव्ये, कुम्भको द्रव्यतो मतः ॥६१॥
वैराग्याभ्यासद्वारेण, गुणस्थैर्यं यदा भवेत् ।
भावकुम्भकता तत्र, अन्यथा नाममात्रतः ॥६२॥
वायूनां च प्रवेशेन, कश्चात्मनि गुणो भवेत् ।
पुद्गलरूपता वायोः, आत्मनि च निरूपता ॥६३॥
द्वयोश्चनैव सम्बन्धः, केनापि रूपतो भवेत् ।
अतः कथं द्वयोश्चैवं, मीलनं परिसम्भवेत् ॥६४॥
किमुद्दिश्य च वायूनां, प्रोक्तात्मशुद्धिहेतुता ।
शङ्कायाश्च समाधानं, प्रोच्यते जैनशास्त्रतः ॥६५॥
जैनेतरीय—शास्त्रेषु, समाधानं न विद्यते ।
विचारः सूक्ष्मश्चैव, कृतः केनापि नो कदा ॥६६॥
द्रव्यरेचकवायूनां, देहे सम्बन्धता मता ।
वायुशुद्धप्रवेशेन, शरीरे स्वस्थता भवेत् ॥६७॥
आसनादिक योगाङ्गं, विना शरीरयोगतः ।
कदापि सम्भवेन्नैव, अतः स्वस्थत्व सिद्धये ॥६८॥

साधनता च वायूनामतः, कारणात्सम्मता ।
धर्मसाधनदेहस्य, स्वास्थ्यं चैव ततो भवेत् ॥६९॥
स्वस्थशरीरसम्बन्धा, दुर्गुणानाञ्च त्याजने ।
शीघ्रं मनः प्रवर्त्तेत; प्राणायामस्तु भावतः ॥७०॥
जायते नैव सन्देहः; आत्मशुद्धेश्च साधने ।
गुणानां पूरणे चैव, दुर्गुणानाञ्च त्याजने ॥७१॥
सर्वगुणमयश्चैव, आत्मा योगेन जायते ।
अतोहि रेचकादीनां, परम्परा च हेतुता ॥७२॥
भावतः प्राणयामस्य, हेतुता चात्मशुद्धिके ।
द्रव्यतो रेचकादीनां, देहशुद्धौ च हेतुता ॥७३॥
गुणानामेकताऽऽदाने, एकता परिजायते ।
निजयोगे च तल्लीने, लीनता परिकथ्यते ॥७४॥
लीनदशा बहिर्भावा, त्समाधित्वस्वरूपके ।
निश्चयतः स जीवात्मा, स्वामी शिवपुरस्य वै ॥७५॥
स्वरख्याति स्थिरी भावे, स्वल्पकं कर्षणं न वै ।
मूलबन्धे दृढी भावे, बीजसञ्चारता भवेत् ॥७६॥
देहे पञ्चापि वाताःस्युः, प्राणसमान नामकौ ।
अपानोदान व्यानाश्च, ज्ञातव्या गुरुयोगतः ॥७७॥

आसुप्तेरामृतेः कालं, नयेत्स्वाध्याय योगके।
इषन्नावसरो देयः, कषायभावचिन्तने ॥१४४॥
त एव पुरुषाः श्लाघ्याः, स्वाध्यायध्यानतत्पराः।
अपूर्वां निर्जरां चैव कुर्वन्ति ये च सर्वदा ॥१४५॥
सूत्राणां पौरुषी चाद्या, द्वितिया चार्थ पौरुषी।
चतुर्थी[1] पौरुषी चान्त्या, रात्रावपि तथैव च ॥१४६॥
एवं रीत्या च कर्त्तव्यः, स्वाध्यायश्चैव नित्यशः।
ततश्चैव मनः स्थैर्यं, जायते ज्ञानध्यानतः ॥१४७॥
मालकैशिक ग्रामादि, पवित्र रागेण संयुतैः।
मञ्जुलघोष नादेन, द्वात्रिंशद्दोषशून्यतः ॥१४८॥
अष्टगुण युतेनैव, नासिकान्यस्य दृष्टिकैः।
स्थिरबन्धं समाश्रित्य, स्वाध्यश्च विधीयताम्।१४९॥
एतादृक् कार्यकर्त्तव्ये, आगच्छति दिनं कदा।
तादृक स्वाध्याय कर्त्तारः, धन्यास्ते पुरुषा मताः।१५०।

॥ तपः स्वरूपनिरूपणम् ॥

कर्मतापनशक्तं यत्, तत्तपः परिकीर्त्तितम्।
वक्तव्यं ज्ञानरूपं हि, क्षायोपशमिकं च तत् ॥१५१॥

---

१—पश्चाच्चरमा पौरुष्या अभिधानं चतुर्थी पौरुषी।

बाह्याभ्यन्तरभेदेन, द्विविधं प्रणिगद्यते ।
शक्तमाऽऽभ्यन्तरं ज्ञेयं, बाह्यं च तस्य पोषकम् ।१५२
बाह्यं कारणरूपं तत्कार्यमाऽऽभ्यन्तरं मतम् ।
कृत्स्नकारणयोगेन, कार्यं भवति तत्क्षणे ॥१५३॥
नव्यकर्मागमो नैव, पुराणकर्मशाटनम् ।
शुष्के कर्मरसे जाते, निःस्नेहं तेन जन्यते ॥१५४॥
तस्यापि लक्षणं ज्ञेयं, तपसो जैनशास्त्रतः ।
एतादृक् तपसः कार्यं, आत्मशुद्धिः प्रजायते ।१५५।
अनशनावमौदर्यं, वृत्तिसंक्षेपणं तथा ।
कायक्लेशरसत्यागौ, संलीनतेति बाह्यकम् ।१५६।
अशनं भोजनं ज्ञेयमन्नादिप्रविभेदजम् ।
पानं जलादि विज्ञेयं, खाद्यं दुग्धादि वस्तुजम् १५७
मुखशुद्धिनिमित्तं यत्स्वाद्यं एलादि वस्तुकम् ।
एतच्चतुर्विधाहारत्यागो यत्र विधीयते ॥१५८॥
आहारत्यागरूपं हि, अनशनं निगद्यते ।
द्विविधं तत्र विज्ञेयं, इत्वरं प्रथमं मतम् ॥१५९॥
यावत्कथिकरूपं हि, द्वितीयं परिकीर्त्तितम् ।

अमुककालपर्यन्तमाहारत्यागमित्वरम् ॥ १६० ॥
यावज्जीवं च सर्वेषामाहाराणां च त्याजनम्[1] ।
यावत्कथिकरूपं तद्विज्ञेयं जैनशासनात् ॥ १६१ ॥
पादोपगमनाद्यं च, ह्यनशनं द्वितीयकम् ।
व्यवहारोऽपि तत्रैव, अनशनस्य कथ्यते ॥ १६२ ॥
चतुर्थषष्ठभक्तादि, त्यागरूपं हि चेत्वरम् ।
आहारत्यागरूपाश्च, नियमा इत्वरे मताः ॥१६३॥
न्यूनाहारे च कर्त्तव्ये, ऊनोदर्यं निगद्यते ।
जघन्यमध्यमोत्कृष्टभेदेन त्रिविधं मतम् ॥१६४॥
यावत्प्रमाणभोज्यं हि, मुखे सुखेन क्षिप्यते ।
कवलं तत्र विज्ञेयं, भेदेन प्रणिगद्यते ॥ १६५ ॥
द्वात्रिंशत्कवलानां वै, आहारः पुरुषे मतः ।
अष्टाविंशतिका ज्ञेया, स्त्रीणां च कवलास्तथा ॥१६६
अष्टकावलिका हारे, अवमौदर्यकं परम् ।
द्वादशकवले चैव, उपार्धं परिकीर्त्तितम् ॥१६७॥
द्वात्रिंशत्कवलानां वै, एकेनापि च नूनकम् ।
जघन्यं तच्च विज्ञेयं, नूनोदर्यं चिकीर्षता ॥१६८॥

१—तत् सर्वाहारत्यागरूपम् ।

सामीप्येनेकवस्तूनां, कृतं च ढौकनं यदा ।
लालसा परिहाराय, परित्यागश्च तन्यते ॥ १६९ ॥
केषाञ्चित्तत्रवस्तूनां, हार्दिकशुभभावतः ।
वृत्तिसंक्षेपनामाख्यं, तत्तपः परिकीर्त्तितम् ॥१७०॥
वस्तुगत्या विचारेषु, इच्छारोधस्तपोमतम् ।
यस्य कस्यापि वस्तुनः, त्यागेच्छा तप उच्यते ॥१७१
मधु मद्यं च मांसं च, नवनीतं चतुर्विधम् ।
अभक्ष्यंसर्वदा ज्ञेयं, महाविकृति रूपकम् ॥१७२
दुग्धं दधि घृतं चैव, तैलं च तलितं तथा ।
गुडं च विकृतिश्चैव, षडेताः परिकीर्त्तिताः ॥१७३
अभक्ष्यविकृतीनां च, त्यागस्तु सर्वथा मतः ।
षण्णां मध्येऽपिनैमित्तं, समाश्रित्य च कुत्रचित् १७४
कासांचिद्विकृतीनां च, त्यागश्च क्रियते यदा ।
रसपरित्यागरूपं तत्तदा च तप उच्यते ॥ १७५ ॥
गर्हितजन संपात, राहित्ये दूरदृक् पथि ।
विबाधा रहिते स्थाने, शय्यासननिषेवनम् ॥१७६॥
आगमोक्तप्रमाणेन, वीरासनादि कायिकम् ।
तत्कष्टसहनेनैव, कायक्लेशं निगद्यते ॥ १७७॥

लोचादिकं च सर्वं वै, कष्टं तत्र समीक्ष्यताम् ।
तत्सर्वं चैव ज्ञातव्यं, कायक्लेशेषु सम्मतम् ॥१७८॥
शून्ये गृहे च देवालये च पर्वतगह्वरे ।
इत्यादि शुभस्थाने वै, शान्तिभावविधायके ।१७९।
ज्ञान दर्शन चारित्र तपो वीर्य प्रवृद्धये ।
संकोचित शरीरेण, स्थातव्ये लीनता मता ।१८०।

॥ बाह्यतपसि पूर्वपक्षः ॥

दुःखरूपोपवासादि, तपो वक्तुं न शक्यते ।
मर्मोदयस्वरूपं वै वेदनीये च सम्मतम् ॥ १८१ ॥
मोक्षस्य कारणं नैव, अतस्तपो न कथ्यते ।
औदयिकस्वरूपं च, असाता जनकं मतम् ।१८२।
यथा गोमहिषीणां वै, क्षुधादि द्वारतो दुःखम् ।
तथोपवासकर्त्तव्ये नृणां क्षुधादितस्तथा ॥१८३॥
वेदनीयोदयेनैव, तादृशी दुःखता भवेत् ।
बाह्यं तपः कथं तत्स्याच्छुभभावेन चिन्त्यताम् ।१८४
उपवासादि द्वारेण, उत्पन्नां दुःखभावनाम् ।
तत् सहने तपःस्वी स्यादपराद्धं परेण किम् १८५।

विशेषदुःखसोढव्ये, तपस्वी च ततोऽधिकः ।
एतादृशि च मन्तव्ये, अत्यन्त दुःखि नारकाः १८६
महातपस्विनस्तेऽपि, आर्त्त रौद्रादि संयुताः ।
शान्तिसाम्राज्यसद्भावाः, योगिनश्चातपस्विनः १८७
इति विचित्र भावो हि, जगति सर्वदा भवेत् ।
अतो विचार्य वक्तव्यं, भवभीरुजनेन वै ॥१८८॥

॥ उत्तरपक्षः ॥

तपो दुःखस्वरूपं नो, जिनेन्द्रशासने मतम् ।
आगमानुमतेनैव, तपोरूपं निगद्यते ॥ १८९ ॥
तपस्तदेव कर्त्तव्यं दुर्ध्यानं येन नो भवेत् ।
इन्द्रियाणां च नो हानिः, योगानां वै तथैव च १९०
देहपीड़ा भवेन्नैव, धर्मध्यानस्य वृद्धिता ।
यतो येनैव जायेत, तत्तपो जैनशासने ॥ १९१ ॥
केशलोचादिकार्याणामुपवासादिवस्तूनाम् ।
अतः को बुद्धिशाली वै, तपसि दुःखतां वदेत् १९२
यथैव रोगिणां चैव, रोगाणां प्रतिकारके ।
औषधशस्त्रप्रायोग्ये, किञ्चिद्दुःखं च जायते ॥१९३॥

भाव्यारोग्यस्य सद्भावे, तद् दुःखं नैव मन्यते ।
तथाऽत्र कर्मरोगाणां, प्रतिकारे च भाव्यताम् ।१६४।
महौषधं तपो रूपमत्रैव परिचिन्त्यताम् ।
दुःखानामवकाशो न, धर्मध्यानस्य वृद्धिता ॥१६५॥
सद्भावनां विना नैव, तपः कर्त्तुं च शक्यते ।
पूर्वपुण्योदयेनैव, तपसि भावना भवेत् ॥१६६॥
अनन्तकालचक्राणां, संसारे भ्रान्तिकारणम् ।
कर्मजन्यं च दुःखं तदार्त्तरौद्रादि रूपकम् ॥१६७॥
तच्च तपः प्रभावेन, सर्वथा प्रणिनश्यति ।
अव्याबाधसुखं चैव, प्राप्यते तेन सर्वदा ॥ १६८॥
भावरोगविनाशेषु, समर्थं कारणं तपः ।
तत् कथं दुःखरूपं वै, मन्यते सुखमिच्छता ।१६९।
देहारोग्यं च तेनैव, जायते दृढयोगतः ।
असाध्यं संसृतौ नास्ति, यत्तपसा न सिध्यति २००
यथैव रोगिणां रोगान्, दूरीकर्त्तुं चिकीर्षता ।
कटुकौषधपाने च, कर्त्तव्ये पीडनं भवेत् ॥२०१॥
व्याधीनां चैव केषाञ्चिच्छस्त्रतः च्छेदनादिना ।
प्रतिकारे च कर्त्तव्ये, दुःखं तेषां च जायते ॥२०२॥

तथापि तन्न स्वान्तेहि धार्यते सुखमिच्छता ।
तथात्र भावरोगाणां दूरीकर्त्तुं चिकीर्षता ॥२०३॥
उपवासादि कर्त्तव्ये नैव दुःखं विगण्यते ।
अतो न दुःखरूपं तत् किन्तु औषधरूपकम् ॥२०४॥
अत्र समाधिरूपं तद्धर्मध्याननिबन्धनम् ।
दुःखलेशो भवेन्नैव महाशान्तिविधायकम् ॥२०५॥
यथेष्टकार्यसंसिद्धौ दुःखं वणिग् न मन्यते ।
तथात्र शिवसंसिद्धौ कथं दुःखं तु मन्यते ॥२०६॥
तपः कर्मोदयं नैव इति दृढं प्रमन्यताम् ।
कर्मोदयफलं चैव संसारभ्रमणं मतम् ॥२०७॥
कषायोदयभावो हि मोक्षस्य प्रतिबन्धकः ।
तेषां क्षयस्वरूपं तत् कारणं तस्य कथ्यते ॥२०८॥
तपसा कर्मवैनाशः तत् कथं प्रतिबन्धकम् ।
प्रतिबन्धकरूपं हि कारणं नैव कथ्यते ॥२०९॥
विशिष्टज्ञानसंवेगशमसारमिदं तपः ।
क्षायोपशमिकं ज्ञेयं इति दृढं सुनिश्चितम् ॥२१०॥
बाह्यतपो विधानेन शरीरे लाघवं भजेत् ।
धातूनां शोषणे-नैव नेन्द्रियोन्मादता पुनः ॥२११॥

अनालस्यं क्रिया कार्ये प्रमादः परिणश्यति ।
अप्रमत्तत्वभावोहि आगच्छति च तत्क्षणे ॥२१२॥
इन्द्रियोन्मादताभावः मनः स्थैर्यप्रभावतः ।
मनोऽपि स्थिरतां याति तपो वैराग्यभावतः ॥२१३॥
कर्मदहनसामर्थ्यमत्यन्तं यत्र विद्यते ।
आभ्यन्तरतपस्तच्च कीर्त्तितं जैनशासने ॥२१४॥
षड्विधं तच्च विज्ञेयं प्रायश्चित्तादि भेदतः ।
क्रमेण तस्य सारूप्यं कथ्यते शुद्धभावतः ॥२१५॥
यानि व्रतानि साधूनां गृहीतानि च सन्निधौ ।
तत्र प्रमादद्वारा हि दोषाणामुद्भवो भवेत् ॥२१६॥
तेषां संशोधनं येन प्रकारेणैव तन्यते ।
प्रायश्चित्तं च तज्ज्ञेयं जैनशास्त्रानुसारतः ॥२१७॥
तच्च दशविधं ज्ञेयं आलोचनादि भेदतः ।
तेषामपिस्वरूपं वै कथ्यते जैनशासनात् ॥२१८॥
भावविशुद्धिपूर्वेण गुरूणां च समीपके ।
निवेदनं हि दोषाणामालोचनं च तद्भवेत् ॥२१९॥
कृत पापस्य पश्चात्तापेन निर्वतनं ततः ।
यथा वै नव्यदोषाणां न लग्ने सावधानता ॥२२०॥

तत्प्रतिक्रमणं चैव, कर्त्तव्यं शुभभावतः ।
तदुभयस्य सारूप्यं, लक्षणात्प्रतिपाद्यते ॥२२१॥
गुरूणां निकटे दोषप्रकाशपूर्वकं यथा ।
कृतपापनिवृत्यर्थं, मिथ्या दुष्कृतयाचना ॥२२२॥
तदुभयाभिधानं च प्रायश्चित्तं निगद्यते ।
विवेकनामधेयं च प्रायश्चितं ततः परम् ॥२२३॥
अन्नपानोपधीनां च शय्या-साधन वस्तूनाम् ।
शुद्धाशुद्धविचारो वै प्रायश्चितं विवेककम् ॥२२४॥
आहोस्विदन्नपानानामकल्प्यानां प्रमादतः ;
कृतं चेद्ग्रहणं तेषां कार्यस्त्यागश्च शीघ्रतः ॥२२५॥
अकल्प्यान्नकादीनामौपकरणवस्तूनाम् ।
उपयोगेन सञ्चिन्त्य निरोधः प्रविधीयताम् ॥२२६॥
पुनर्दैहिक वाचां च व्यपाराणां च सर्वथा ।
व्युत्सर्गे च कृते चैव प्रायश्चित्तं हि सम्मतम् ॥२२७॥
महाव्रते प्रतिज्ञाते दिनादिकेऽमुके तथा ।
मासे वर्षे च सञ्जाते तेषां मध्येऽमुकस्य च ॥२२८॥
अमुकदिनमासानां छेदनेच्छेदनाभिधम् ।
प्रायश्चित्तं च विज्ञेयं प्रायश्चित्तं चिकीर्षता ॥२२९॥

यस्य साधोश्च यादृक्षाः दोषा लग्नाश्च भावतः ।
प्रमादसेविनस्तादृग् दोषाणां चैव ज्ञानतः ॥२३०॥
पूर्वं ज्ञात्वा च पश्चाद्धै दीक्षापर्यायकस्य च ।
ह्रासकरणसद्भावे छेदरूपं च तन्मतम् ॥२३१॥
षड्विकृतिपरित्यागे निर्विकृतिकनामना ।
तत्राचाम्लोपवासादौ तपःकार्यं च तन्मतम् ॥२३२
दूषितानां मुनीनां च दोषणां च प्रमाणतः ।
पक्षमासं च पर्यन्तं वर्षादिकं तथैव च ॥२३३॥
संसर्गत्यागपूर्वेण सर्वथा दूरवर्जनम् ।
प्रायश्चित्तं च तज्ज्ञेयं परिहाराऽभिधानकम् ॥२३४॥
ब्रह्मचर्य-यमानां च विनाशकारि साधूनाम् ।
पुनर्महाव्रतानां चारोपणे चोपस्थापनम् ॥२३५॥
मूलच्छेदे कथंचिच्च ऐक्यं तत्परिकीर्त्तिते ।
अंशतः छेदनेनैव छेदाभिधानकं मतम् ॥२३६॥
दीक्षापर्यायकाख्यानां सर्वथा-छेदने सति ।
मूलाभिधानकं चैव प्रायश्चित्तं च सम्मतम् ॥२३७॥
अनवस्थाप्य पारांचिकयोर्नैव च भिन्नता ।
अङ्ककालपर्यन्तं अनारोपो महाव्रते ॥२३८॥

उपस्थापनकाख्ये च प्रायश्चित्ते च सर्वथा ।
तयोरन्तरभावेन पृथग् नैव तु गण्यते ॥२३९॥
अष्टकर्मविनाशे च आभ्यन्तरं निमित्तकम् ।
विनयाख्यं च मन्तव्यं तपो विनयकांक्षिणा ॥२४०
तद्धै चतुर्विधं ज्ञेयं ज्ञानादीनां विभेदतः ।
तेषां स्वरूपकं चैव कथ्यते सुखहेतवे ॥२४१॥
बहुमानस्य पूर्वेण ज्ञानेन सुकृतार्जनम् ।
नवीन कर्मणां बन्धः नो भवेद्धर्तनं तथा ॥२४२॥
तादृशज्ञानशिक्षायाः अभ्यासः सर्वथा मतः ।
स ज्ञानविनयो ज्ञेयः ज्ञानविनयमिच्छता ॥२४३॥
यथार्थतत्त्वरूपाणां सार्वकथित वस्तूनाम् ।
श्रद्धातश्चलयमानं न शङ्काद्युद्भवने सति ॥२४४॥
कृत्वा संशोधनं चैव, निःशङ्कितादिमान् भवेत् ।
एतादृक्कार्यकर्त्तव्ये दर्शनविनयः कृतः ॥२४५॥
सामायिकादिपञ्चानां, चारित्राणां च मध्यके ।
यत्र कुत्रापि चारित्रे, समाधिर्मानसे भवेत् ॥२४६॥
तस्यापि विधिपूर्वेण, पालनं शुभभावतः ।
सत्या प्ररूपणा तत्र, चारित्रविनये मता ॥२४७॥

सम्यग्दर्शनज्ञानादि, गुणाधिकेषु भावतः ।
अभ्युत्थानाऽऽसनानां च प्रदाने वन्दनादीनाम् ॥२४८
भक्तिभावे न कर्त्तव्ये विनय उपचारतः ।
वैयावृत्यस्वरूपं च, शास्त्रोक्तं प्रतिपाद्यते ॥२४६॥
आचारप्रदानेन, षट् त्रिंशद्गुणाऽयुतः ।
आचार्य कथितः शास्त्रे, वैयावृत्त्यं च भावतः ॥२५०
एकादशांगशास्त्राणामुपाङ्गानां तथैव च ।
प्रकीर्णादिकशास्त्राणां पाठने पठने तथा ॥२५१॥
उपाध्यायः समाख्यातः, यद्गुणाः पंचविंशतिः ।
उपाध्यायश्च तद्युक्तः, कथितो जैनशासने ॥२५२॥
उग्रतपः प्रकर्त्तव्ये, तपस्वी कथितो मतः ।
क्षमादिगुणयुक्तश्च, सर्वत्रैव निरीहता ॥ २५३ ॥
चारित्राचारशिक्षाणां, प्राप्तेच्छा शुभयोगतः ।
येषां जाता च ते सर्वे, शैक्षकाः परिकीर्त्तिताः ॥२५४
नवदीक्षितशिष्याणां, चारित्राचारदानतः ।
संपादने च ज्ञानादौ, शिष्यश्च भावतो मतः ॥२५५॥
रोगपीडित साधुश्च, सग्लानः परिकीर्त्तितः ।
दीक्षाचार्यस्य चैकस्य, शिष्याणां परिवारकः ॥२५६

कुलमिति समाख्यातं, गणश्च प्रतिपाद्यते ।
स्थविरसंततीनां च, मर्यादा गण उच्यते ॥२५७॥
तथाऽनेक कुलानां च, समुदायो गणो मतः ।
विभिन्नाचार्यवर्याणां, शिष्याश्चैव परस्परम् ॥२५८
सहाध्यायित्व संसाध्य, समान वाचनादिषु ।
सम्मील्य ज्ञानगोष्टीनां, करणेऽपि गणो मतः ॥२५९
सर्वज्ञशासनं चैव यैश्च स्वान्ते सुस्वीकृतम् ।
तेषां च समुदायो वै, संघशब्देन गण्यते ॥२६०॥
मूलोत्तर गुणैश्चैव, सम्पन्नाः समनोज्ञकाः ।
ज्ञानदर्शनचारित्रगुणैश्च येतु सादृशाः ॥२६१॥
आचार्यादि दशानां वै साधूनां च महात्मनाम् ।
वस्त्रान्नपानवस्तूनामुपाश्रयादिकस्य च ॥२६२॥
संस्तारकादि सामग्री, रूपस्यैव प्रदानकम् ।
शुश्रूषौषधवस्तूनां, दुर्गाटवीषु लङ्घने ॥२६३
येषां चारित्रयोग्यानां, साधनानां प्रदानकम् ।
वैयावृत्त्यं च तज्ज्ञेयं, भक्तिभावविधानतः ॥२६४॥
स्वाध्यायस्य स्वरूपं वै, यथा शक्त्या निरूपितम् ।
व्युत्सर्गस्य स्वरूपं हि, कथ्यते शुभयोगतः ॥२६५॥

शास्त्रोक्तविधिपूर्वेण, अन्नवसनकादीनाम् ।
संसक्तकादि वस्तूनां, त्यागे व्युत्सर्गता किल ॥२६६॥
द्विविधं तच्च विज्ञेयं, बाह्याभ्यन्तर भेदतः ।
तस्य शुद्धस्वरूपं च, कथ्यते जैनशासनात् ॥२६७॥
आयुष्यकर्मणां नाशं, समीपे च समागतम् ।
ज्ञात्वौघिकौपग्राह्यानामुपाधि विग्रहादीनाम् ॥२६८॥
बाह्यवस्तुस्वरूपाणां त्याजने बाह्यरूपकम् ।
कामक्रोधमदानां च हर्षलोभादिवस्तूनाम् ॥२६९॥
त्यागाभ्यन्तरो ज्ञेयः व्युत्सर्गः शास्त्रयोगतः ।
प्रकारान्तररूपेण, द्वौ भेदौ चापि कीर्त्तितौ ॥२७०
द्रव्यभावस्वरूपौ च, सम्मतौ जैनशासने ।
द्रव्यव्युत्सर्गरूपस्य, चतुर्भेदाः प्रकीर्त्तिताः ॥२७१॥
जिनकल्पप्रतिज्ञाते, गच्छस्य परित्यागतः ।
गणव्युत्सर्गता ज्ञेया, द्रव्यतः परिकीर्त्तिता ॥२७२॥
अनशनादि कर्त्तव्ये, कायचेष्टा सुत्यागतः ।
कायव्युत्सर्गता ज्ञेया, धर्मभावप्रवृद्धितः ॥२७३॥
जिनकल्पप्रतिज्ञाते, सर्वज्ञाऽऽज्ञानुसारतः ।
उपधीनां च संत्यागे, व्युत्सर्ग उपधेर्मतः ॥२७४॥

गृहीताऽशुद्धभोज्यानां, आहाराणां च त्यागतः ।
आहारत्याग व्युत्सर्गः, कथितो जिनभानुभिः ।२७५।
भावव्युत्सर्गता चैव, कथिता त्रिप्रकारतः ।
कषायत्यागरूपो हि व्युत्सर्गः परिकीर्त्तितः ॥२७६॥
मिथ्यात्वादिकबन्धानां, भवभ्रान्तिप्रदायिनाम् ।
तेषां सर्वप्रकारेण, त्यागे च भवत्यागता ॥२७७॥
कर्मबन्धनहेतूनां, सर्वथा त्यागभावतः ।
कर्मव्युत्सर्गता ज्ञेया, भावतः प्रतिपादनात् ॥२७८॥
बुभुक्षुरिह संसारे मुमुक्षुरपि दृश्यते ।
भोगे मोक्षे निराकांक्षी, विरलो हि महाशयः ॥२७९
संहनन[1]नोत्तमानां च, अन्यतमत्वधारिणाम् ।
योगिनां चैकतत्त्वे वै, चलचित्तनिरोधनः ॥ २८०॥
मानसस्थैर्य कर्त्तव्ये, चिन्ता निरोध उच्यते ।
तादृश स्थिरचित्तस्य, एकस्मिंश्च पदार्थके ॥२८१॥
स्वरूपप्रविचाराय, स्वान्तस्य विनियोजने ।
ध्यानस्वरूपता ज्ञेया, वीतरागानुयायिभिः ॥२८२॥

---

१—प्रथम द्वितीय तृतीय संहननानां मध्ये ।

ध्यानभेदप्रभेदानां, रूपं योगांगसप्तमे ।
विस्तृतरूप भावेन, वक्ष्यते शुद्धदृष्टितः ॥२८३॥
बाह्याभ्यन्तरभेदेन, तपसा मलसंक्षयः ।
ततः कायेन्द्रियादीनां, स्वाधीनता प्रजायते ॥२८४॥
ईश्वर द्रव्यपर्यायगुणेषु योगयोजनम् ।
सर्वथा चिन्तनं तेषु, ईश्वर प्रणिधानता ॥२८५॥
ईश्वरप्रणिधानेन, चित्तस्य सुसमाधिता ।
प्रसन्नमानसे चैव, किं किं कार्यं न सिध्यति ॥२८६॥
चतुर्निक्षेपरूपेषु ईशेषु च पुनः पुनः ।
प्रणिधानं च कर्त्तव्यं, भावशुद्धिं चिकीर्षता ॥२८७॥
ईशास्य लाषिणी नेत्रे, ईशोपास्ति करौ मम ।
तग्दुणश्रोतृणी श्रोत्रे, भवतो मम सर्वदा ॥२८८॥
पूर्वोक्त नियमाश्चैव, पालनीयाश्च सर्वथा ।
तान् विना च कथं योगमार्गाग्रे च प्रवीणता ॥२८९
महाव्रतं धृतं येन, नियमे तस्य योग्यता ।
तां योग्यतां च संपाद्य, अग्रे सुखेन गम्यताम् ॥२९०
नितरां संयमाश्चैव, नियमाः परिकीर्त्तिताः ।
तत्पतिपादनेनैव, द्वितीयांगं निरूपितम् ॥२९१॥

कामिनां प्रार्थना सैव, योगिनां च समीपके ।
युक्तिपूर्वेण संवादः, एतद्रूपो निगद्यते ॥२६२॥

॥ अज्ञानी ॥

संसारसागरे बन्धो, सद्विचारशिरोमणे ।
सुगन्धिपुष्पवाञ्छा चेत्पुष्पमालां गृहाण ! भो ॥२६३
चंपककेतकीनां च, सुगन्धिपुष्पगुम्फिता ।
अत उत्कटगन्धिः सा, प्रेमोपहार भावना ॥२६४॥
अवश्य प्रेमसद्भावे, उपहारं करोमि त्वाम् ।
मद् भक्तिरसप्रेम्णैव, गृहाण ! मा विलम्बय ॥२६५

॥ ज्ञानी ॥

घ्राणेन्द्रिये निरीहे मे, तव याञ्चा च निष्फल ।
योगिनि निःस्पृहे चैव, सर्वा पृथ्वी वशं वदा ॥२६६
घ्राणं नेच्छति सद्गन्धं, दुर्गन्धं चापि नेच्छति ।
सुगन्धेतरभावेषु, वर्तते समभावता ॥ २६७॥

॥ अज्ञानी ॥

विषादपरिहाराय, स्वादुभोज्यं समीहता ।
द्राक्षा मिष्टान्न सर्वं वै आनयामि च शीघ्रतः ॥२६८

मदीया प्रार्थना चैषा, स्वीकार्या मानसे सदा ।
अपरा नैव वाञ्छा मे, सत्यं वदामि सर्वथा ॥२९९

॥ ज्ञानी ॥

रसना लुब्धता हीना, समुद्रममृतायते ।
सम्पूर्णरससामग्री, समागच्छति सत्वरम् ॥३००॥
प्रेमभावो भवेन्नैव, यत्र कुत्रापि वस्तुनि ।
रागरूपः स विज्ञेयः, रागो बन्धनकारकः ॥३०१॥

॥ अज्ञानी ॥

स्वदेशस्थेन सम्पूर्ण विदेशि नाटकादीनाम् ।
द्रष्टुमिच्छा च स्वान्ते चेदाज्ञापय तदा प्रभो ॥३०२
तत्रत्य सर्ववस्तूनां, करोमि उपढौकनम् ।
मदीया प्रार्थना सा वै, स्वीकार्या प्रेमभावतः ॥३०३

॥ ज्ञानी ॥

सर्वस्तुषु निर्लिप्ते नेत्रे च सर्वदा मम ।
दर्शने कौतुकं नैव, केषांचिदपि वस्तूनाम् ॥३०४॥
सर्वनाटकरूपं हि, संसारे प्रतिभासते ।
अपरनाटकानां वै, दर्शनेच्छा कथं भवेत् ॥३०५॥

माता पिता च भ्रात्रादि, भगिनी कलत्रादीनाम् ।
जीवेनानन्तवारं हि, संसारे वसता कृतम् ॥३०६॥
दृष्टं तज्ज्ञानिना सर्वं, एकैकानन्तवारकम् ।
पुत्रः पितृ तया चैव, पिता पुत्रस्वरूपतः ॥३०७॥
माता कलत्र संजाता, कलत्रं मातृरूपताम् ।
स्वकीयं नाटकं त्यक्त्वा,पश्यामि चापरं कथम्॥३०८
अतः सर्वं च तत्त्यक्त्वा, द्रक्ष्यामि स्वगुणान् सदा ।
पुद्गलद्रव्यरूपाणां, दर्शने का विडम्बना ॥३०९॥

॥ अज्ञानी ॥

ग्रीष्मतापार्दितेनैव, देहे पीडा प्रजायते ।
तदा तत्परिहाराय, वायुं करोमि शीतलम् ॥३१०॥

॥ ज्ञानी ॥

भोगविलासशून्या मे, त्वचा भवति सर्वदा ।
सर्वदा शीतला सैव,वायोश्च न प्रयोजनम् ॥३११॥
मिथ्यावायुश्च सर्वत्र, वाति वै सर्वजन्तुषु ।
श्रद्धाधनं च सर्वेषां, लात्वा नश्यति सत्वरम् ॥३१२॥
अन्यत्सर्वं धनं चैव, मीलति सर्वजन्तूनाम् ।
श्रद्धाधनं तु सर्वज्ञधर्मं विना न प्राप्यते ॥३१३॥

अतो विभिन्नवस्तूनां, वाञ्छा कार्या कदापि नो।
सर्वज्ञशासनं प्राप्तुं, यततां सर्वदा खलु ॥३१४॥

॥ अज्ञानी ॥

विनोदकारिगीतानां, श्रवणेच्छा गरीयसी।
श्रीकृष्णमन्दिरे गत्वा, रासलीला च श्रूयताम् ॥३१५
गोपीनां सुन्दरं गीतं, शृङ्गारपरिपूर्णजम्।
नर्तनं सुखदं चैव, हावभावविधायकम् ॥३१६॥
श्रुतं न येन तद्गीतं, तस्य जन्मनिरर्थकम्।
हारितं खलु संसारे, अजागलस्तनादिवद् ॥३१७॥

॥ ज्ञानी ॥

शृङ्गारपोषकं वाक्यं; श्रुती श्रोतुं च नेच्छतः।
अश्लीलकामरागानां, पोषकं भवपोषकम् ॥३१८॥
विभित्सशब्दगीते वै, कल्याणं यदि स्यात्तदा।
विदूषकानां च भट्टानां, प्रथमं परिजायते ॥३१९॥
कामिना काम तृप्त्यर्थं प्रपञ्चस्तादृशः कृतः।
स्वयं नष्टा परांश्चैव, नाशयति च धूर्तराट् ॥३२०॥
योगिनां निकटे चैव, तद्वक्तुं नैव युज्यते।
वेश्या भांडजनाग्रेषु, रासलीला विधीयताम् ॥३२१॥

एककेन्द्रिय द्वारेण, मधुपमीनहस्तिनः ।
पतङ्गहरिणाश्चैव, प्राणान् जहति सत्वरम् ॥३२२॥
पञ्चेन्द्रियसमासक्ताः, रासलीला विधायकाः ।
धर्माभिधानमात्रेण, अधर्मं पोषयन्ति ते ॥३२३॥
यथा देवी समीपे च, धर्माभिधानमात्रतः ।
जन्तु-बलि प्रदानेन, तथाऽत्र परिभाव्यताम् ॥३२४॥[1]
यदि प्रभुषु भक्तिश्चेद्वैराग्य जनकं तदा ।
गीतगानं च कर्त्तव्यं, सर्वदा सुसमाधिना ॥३२५॥
अध्यात्मभावना यत्र, भवभयनिवारिणी ।
जायते तादृशं गीतं, गेयं तु सर्वदा मतम् ॥३२६॥
इन्द्रियविषयासक्ताः, कामिनः सुखवामिनः ।
चक्रिणो ब्रह्मदत्ताश्च, रावणादि नृपास्तथा ॥३२७॥
परस्त्रीलम्पटाः केचिद्यवना-भवपोषकाः ।
विगता ऋद्धयस्तेऽपि, याताश्च नरकावनिं ॥३२८॥
कुष्ट विनष्ट देहा वै, प्रमेहैः पूतिगन्धिकाः ।
दुःखदौर्भाग्यसंयुक्ताः, लुण्टाकाः पापपोषकाः ।३२९

१—यथा देवीभक्ता अजा बलिदानेनानर्थं कुर्वन्ति तथाऽत्र परिभाव्यताम् ।

सर्वे नरकगन्तारः अन्ये सहायदायकाः ।
अधर्मस्य फलं तादृक्, मीलति नात्र संशयः ॥३३०॥
मार्गे गृहे च यान्तीनां लुण्टाकाश्च परस्त्रीणाम् ।
मर्यादा भङ्गकर्तृ णां, का गतिर्भाविनी वद॥३३१॥
अधुना भारते तादृक् अनर्थं बहु जायते ।
तासां च शीलरक्षायाः, कर्त्ता सुगतिभाग् भवेत।३३२।
धन्यास्ते पुरुषा ज्ञेयाः, विषयैश्च पराङ्मुखाः ।
इन्द्रियमनसां चैव, सर्वथा दमनोत्सुकाः ॥३३३॥
सुदर्शनातिमुक्ताश्च, धन्यशालिभद्रादिकाः ।
चन्दनासुलसासोताः, श्लाघ्याश्च तादृशाःजनाः।३३४
प्राणान्तकष्टसम्प्राप्ते, भवेयुर्नेन्द्रियाधीनाः ।
परीक्षा हाटके चैव, पूज्यते नैव लोहके ॥३३५॥
रासलीलेश्वरे नास्ति, यदि च रासलीलया ।
वर्त्तते क्रीडनेच्छा चेत्तदा स बालसादृशः ॥३३६॥
सामान्ययोगिनां चैव, नेन्द्रियेषु विडम्बना ।
कथमीश्वररूपस्य, इन्द्रियेषु विडम्बना ॥३३७॥
योगाङ्के रासलीलायाः, संवादः परिदर्शितः ।
तां दृष्ट्वा विषये तस्य,आलोचना कृता मया ।३३८।
इन्द्रियाणां स्वरूपं च, द्रव्यभावप्रभेदकम् ।
शब्दादि विषयाणां च, प्रोक्तं रूपं प्रसङ्गतः। ।३३९

सकारणोच्यमानानां, प्रस्तावः समुपस्थितः ।
तत्प्रतिपादनं चात्र, आवश्यकं निगद्यते ॥३४०॥
काचित्स्वरूपता तेषां, जैनतत्त्वप्रदीपके ।
दर्शिता दर्शयिष्यामि,अस्य द्वितीय भागके ॥३४१
दमनमिन्द्रियाणां च, तपसां हि फलं महत् ।
नेन्द्रियाणि च दम्यन्ते, साधारणैर्जनैर्खलु ॥३४२॥
तादृशं दमनं चैव योगिनां परिकीर्त्तितम् ।
भोगिनां विद्यते नैव, संवादेन प्रदर्शितम् ॥३४३
योगिनो ज्ञानिशब्देन, भोगिनोऽज्ञानि नामतः ।
विज्ञेयाश्चात्र संवादे, त्यागात्यागसमर्थके ॥३४४
योगिनो भोगत्यागेन, यास्यन्ति परमां गतिम् ।
भोगिनो भोगभावेन,प्राप्स्यन्ति चाधमांगतिम्।३४५
इन्द्रियाणां जयेनैव योगिनः परिकीर्त्तिताः ।
इन्द्रियविषयासक्ताद्भोगिनः परिभाषिताः ।३४६।

॥ इतिश्री शास्त्रविशारदजैनाचार्यजङ्गमयुगप्रधान
सूरिचक्रचक्रवर्त्ति-शासनसम्राट्-परमाराध्य-विश्व
वन्द्य म्हेसाणा-वाराणसी-पालिताणा-ओसिया
मधुमती-शिवपुरी-लीम्बडी-आग्रा-प्रभृत्यनेक
स्थानेपाठशाला-गुरुकुल-अनाथालय-बोर्डीङ्ग
पाटडी-वीरमगाम-आग्राप्रभृति स्थानेषु

पुस्तकालय-जर्मनी-इटली-फ्रांस-चामेरिका
जेकोसलावी-लन्दन-भारत प्रभृत्यने-
कदेशेषु विद्वज्जनसमुदायानां
शङ्कासमाधानकारक-साहित्य सम-
र्पकानेकतीर्थधर्म साहित्योद्धारक
दरभङ्गा काशि जोधपुर उदयपुर
भावनगर जीर्णदुर्गलीम्बडी
वांकानेरप्रभृतिनरेशोपदेशक
पूज्यपादाचार्यवर्य श्री-
विजयधर्मसूरीश्वरशिष्येण
न्यायविशारदन्यायती-
र्थोपाध्याय मङ्गलविज-
येन विरचिते आर्ह
द्धर्मप्रदीपे योगाङ्ग
नियमाख्य द्वितीया-
ङ्गवर्णननामा चतु-
र्दशतमःप्रकाशः
समाप्तः ॥

# तृतीयं योगाङ्गमासनाख्यं निरूप्यते

सम्मेतशैलतीर्थस्थं, त्रिलोकी वृन्द वन्दितम् ॥
प्रभु श्री पार्श्वदेवेशं, नमामि स्वान्तशुद्धये ॥१॥
आसनानां स्वरूपं च, ध्यानोपयोगी सर्वदा ।
विनासनं च सद्ध्यानं, क्रियते नैव योगिभिः ॥२॥
आसनानामनेकानि, विद्यन्ते योगशासने ।
नामाकृति स्वरूपाणि, निरूपितानि योगतः ॥३॥
पद्मसिद्धे समं चैव, आत्मसंयम भावुकैः ।
योग्यासने नियोक्तव्यं, ध्यानकर्त्तुं च पौरुषैः ॥४॥
एषु त्रयेषु मध्ये च केनचिदासनेन वै ।
शरीरे स्थिरता येन, जायते तन्निषेव्यताम् ॥५॥
मेरुदण्डसमं चैव, मस्तकं परिकीर्त्तितम् ।
ग्रीवा तयोश्च सारल्यं, कर्त्तव्यं सर्वदा मतम् ॥६॥
दृष्टिश्च नासिकाग्रे स्यादथवा च भ्रू मध्यके ।

ध्यानिना रक्षितव्या च, ध्यानकाले हि सर्वदा ॥७॥
आलस्य परिहाराय, सावधानो भवेत्तथा ।
चक्षुः सम्मील्य स्थातव्यं, यथा सुखेन स्थीयते ॥८॥
दीर्घकालिकपर्यन्ते, स्थेये बाधा च नो भवेत् ।
तादृशासनबन्धेन, आसनाभ्यासता मता ॥९॥
कायचेष्टासु शैथिल्यं स्वाभाविक स्वरूपतः ।
योगासनाय कर्त्तव्यं, बलात्कारेण नो कदा ॥१०॥
अनन्तज्ञानि देवेशे, मनसस्तन्मये तथा ।
आसनस्य भवेत्सिद्धिः, तत्रैव परिभाव्यताम् ॥११॥
एकप्रहरपर्यन्तं, स्थातव्ये नैव क्लिष्टता ।
अचलैकासनेनैव, लघुकालस्तु ज्ञायताम् ॥१२॥
परस्मिन् दीर्घता ज्ञेया, आसनसिद्धिमिच्छता ।
आसनसिद्धि भावेषु द्वन्द्वबाधा च नो भवेत् ॥१३॥

॥ पद्मासनस्वरूपम् ॥

पादं च दक्षिणं पूर्वं, दक्षिणजंघके खलु ।
आनीय वामजंघायाः, उपरि तस्य मोचनम् ॥१४॥
घुण्टनमस्य पेट्टस्य, वामभागस्य कोणके ।
यथा स्पृशेत्तथैवं च, कर्त्तव्यं सुखहेतवे ॥१५॥

तथैव वामपादं वै आनीय वामजंघतः ।
दक्षिणस्यां च जंघायां, उपरि परिस्थाप्यताम् ॥१६॥
तस्यैव घुण्टनं पेट्टदक्षिणभागकोणके ।
यथा स्पृशेत्तथैवं हि कर्त्तव्यं सुप्रयत्नतः ॥१७॥
पद्बन्धश्च ज्ञेयः सः पश्चाच्च हस्तयोर्द्वयोः ।
स्वस्तिकासनरूपेण, घुण्टनोपरि मोचनम् ॥१८॥
नासाग्रदृष्टिदानेन, अधोभागविकोचतः[१] ।
यदासनं च कर्त्तव्यं, तद्धि पद्मासनं मतम् ॥१९॥
( कुलकम् )

॥ सिद्धासन स्वरूपम् ॥

वामपादस्य तस्यैव, आनीय चैव जंघके ।
गुदोपस्थेन्द्रियाणां, वै मध्येऽनेन प्रकारतः ॥२०॥
स्थापनं तस्य तत्रैव, वामपाद तलोऽपि हि ।
दक्षिणपादजंघां च, यथा स्पृशति किंचन ॥२१॥
तथा दक्षिणपादं च, आनीय तस्य जंघके ।
गुह्येन्द्रियोपरिष्टाच्च, अनेनैव प्रकारतः ॥२२॥
रक्षणीयश्च तस्यैव, दक्षिणपादस्याङ्गुलिः ।

---

१ संकोचतः

वामपादस्य घुण्ट्यां वै जंघायां मध्यके तथा ॥२३॥
यथा गच्छेत्तथा कार्यं पश्चात्तथा प्रकारतः ॥
वामपादस्य चाङ्गुलेः दक्षिणपादघुण्टके ॥२४॥
यथा मध्ये च जंघायां सुप्रयत्नेन मोचनम् ।
उपस्थेन्द्रियतायाश्च, अण्डकोशस्य दक्षिणे ॥२५॥
मोचनं सुप्रयत्नेन, कृते जालंधरो मतः ।
तत्क्रमादासने सिद्धिः, सिद्धासनं प्रकीर्त्तितम् ॥२६॥
॥ कुलकम् ॥

## समासनस्वरूपम् ॥

वामपादं तथानीय, कामं जंघैकतश्च हि ॥
तद्घुण्टिके च लिंगे च जंघास्थि मध्यके तथा ॥२७
ततो दक्षिणपादं च, आनीय तस्य जंघके ।
वामपादस्य घुण्ट्यां वै, जंघायाश्चोर्ध्वभागके॥२८
यथा स्पृशेत्तथा कार्यं, पश्चात्तत्रैव मोचनम् ।
वामपादांगुलीनां च, दक्षिणपादपिण्डके ॥२९॥
जंघायाश्च तथा मध्ये, मोचनं सुखपूर्वकम् ।
हस्तनेत्रे च सर्वत्र, स्वस्तिकासनसादृशे ॥३०॥
अभिधानं च तस्यैव, समासनत्वनामकम् ।

योगशास्त्रेषु ज्ञातव्यं, योगाभ्यासं चिकीर्षता ॥३१॥
॥ कुलकम् ॥

## ॥ वज्रासनस्वरूपम् ॥

जैनशास्त्रानुसारेण, आसनोक्तत्वपूर्वकम् ।
ध्यानसंक्षेपरूपत्वं, प्रोच्यते शुद्धबुद्धितः ॥३२॥
छद्मस्थयोगिनां स्वान्तस्थिरतारूपध्यानकम् ।
एकमुहूर्त्तपर्यन्तं, तिष्ठति सुखपूर्वकम् ॥३३॥
तद्ध्यानमत्र विज्ञेयं, द्विविधं धर्मशुक्लतः ।
मोक्षकारणकं तच्च परे संसारवर्धके ॥३४॥
दुर्गतिगर्त्तपातेन, आर्त्तरौद्राख्य ध्यानके ।
दुर्ध्याने परिज्ञातव्ये, वक्ष्ये तेषां स्वरूपके ॥३५॥
तथा मुहूर्त्तकालाच्च, पश्चाच्चिन्तनरूपकम् ॥
तिष्ठेद्ध्यानान्तरं तत्र, बह्वर्थसंक्रमाच्च वै ॥३६॥
दैर्घकालिकपर्यन्तं, चास्ति ध्यान परम्परा ।
अतो मुहूर्त्त कालाच्च, ऊर्ध्वं ध्यानान्तरं मतम् ॥३७॥
धर्मध्यानोपकाराय, यथाऽऽसनं प्रयुज्यते ।
तथा मैत्र्यादिरूपाणां, भावनानां प्रयोगता ॥३८॥
केऽपि पापं न कुर्वन्तु, नो भवेद्दुःखितो जनः ।

सर्वकल्याणभागी स्याद् मुक्तिं याति जगत्तथा॥३९॥
केनाऽपि सह वैरादि, कार्यं स्वप्नेऽपि नो कदा।
तादृशी भावना येषां,तेषां मैत्रीसदा भवेत् ॥४०॥
सर्वदोषविनाशानां, वस्तुतत्त्वावलोकिनाम्।
निन्दापरांमुखानां च,स्वश्लाघा परिवर्जिनाम् ॥४१॥
सर्वदा गुणरत्नानामिच्छूनां धर्मध्यानिनाम्।
मुनिमत्तङ्गजानां च, गुणानामनुरागता ॥४२॥
यस्य स्वान्ते सदा तिष्ठेत्तस्य प्रमोदभावना।
सर्वदा परिज्ञातव्या, मोक्षदूति समा मता ॥४३॥
धर्मार्थकाममोक्षाणां येषामेकोऽपि नो भवेत्।
स दीनः परिज्ञातव्यः, पुरुषार्थप्रहीणकः॥४४॥
आर्त्तः पीडितरूपः स्याद् द्रव्यभावप्रभेदतः।
सप्तधाभययुक्तस्तु, सभीतः परिकीर्त्तितः ॥४५॥
एतादृशेषु दीनेषु, आर्त्तेषु त्राणकांक्षिषु।
प्रतिकारीय बुद्धिर्या, कारुण्यं गीयतां सदा ॥४६॥
क्रूरकर्मादिकर्तॄणां, देवगुर्वादि निन्दिनाम्।
स्वश्लाघातुष्टचित्तानां, परगुणापलापिनाम् ॥४७॥
सर्वदा निर्दयानां च, पापपोषकवृत्तीनाम्।

तादृशां दुष्टजीवानां, विना माध्यस्थ भावनाम् ।४८
अन्यो-पापस्तु नास्त्येव, अतो माध्यस्थ भावना ।
कर्त्तव्या सर्वदा शान्तचितेन सुखकांक्षिणा ॥४६॥
एतादृग्भावना द्वारा, त्रुटिता ध्यानसन्ततेः ।
संघातुमपि शक्तः स्यात्परिणामविशुद्धितः ॥५०॥
योगिनाऽऽसनतां जित्वा, ध्यानमार्गस्य सिद्धये ।
तीर्थपर्वतस्थानादौ, विशुद्धे यत्र कुत्रचित् ॥५१॥
तत्रैकान्तं समाश्रित्य, ध्यानाय योगिना सदा ।
आसनाऽभ्यासता कार्या, सर्वदा सुखमिच्छुना॥५२॥
जैनदर्शनानुसारेणासनविशुद्धरूपकम् ।
शास्त्राणि च समालोक्य, मया किञ्चित्प्रकाश्यते॥५३
पर्यङ्कासननामाख्यं, वीरवज्रासने तथा ।
अब्जभद्रासने चैव, दण्डासनं तथैव च ॥५४॥
उत्कटिकासनं ज्ञेयं, गोदोहासनता तथा ।
कायोत्सर्गासनं चैव, इत्याद्यासननामकम् ॥५५॥
जंघाद्वयस्य चाधस्ताद्भागस्य चरणोपरि ।
कर्त्तव्ये नाभिपर्यन्ते, दक्षिणवामहस्तकौ ॥५६॥
उपरिस्थापनीयौ तौ, तत्र यदासनं भवेत् ।

तत्पर्यङ्कासनं ज्ञेयमन्यत्सर्वं निरूप्यते ॥५७॥
यत्र वै वामपादश्च, दक्षिणजंघकोपरि ।
तथा दक्षिणपादस्तु, वामजंघासु धारयेत् ॥५८॥
एवं कार्ये च कर्त्तव्ये, यदासनं प्रजायते ।
तदासनं तु विज्ञेयं, वीरासनाभिधानकम् ॥५९॥
पूर्वोक्तेन प्रकारेण, वीरासने कृते सति ।
पृष्टभागे च वज्रवदाकृतिमत्करेण च ॥६०॥
यत्रासने द्विपादांगुष्टकौ च परिग्राह्यकौ ।
तदासनं तु विज्ञेयं, वज्रासनाभिधानकम् ॥६१॥
क्षमायां पादरक्षा च, कार्या सिंहासने तथा ।
उपविश्य ततः पश्चादपनयो विधीयताम् ॥६२॥
तादृशकार्यकर्त्तव्ये, अवस्थितिश्च यादृशी ।
तादृशीमपि केचिच्च, वीरासनं वदन्ति च ॥६३॥
वीरासनस्य मन्तव्ये, मतान्तरं प्रदर्श्यते ।
यत्पतञ्जलिना प्रोक्तं, तदपि प्रतिपाद्यते ॥६४॥
आसनादुत्थिते चैव, क्षमायामेकपादकम् ।
द्वितीयं घुण्टिपर्यन्तं,कुष्ट्वोपरि तु स्थापयेत् ॥६५॥
तादृक्पादरक्षातश्च, यदासनं प्रकाश्यते ।

वीरासनाभिधं तच्च, विज्ञेयं तु मतान्तरे ॥६६॥
एकस्याश्चैव जङ्घायाः, परस्यां मध्यभागके ।
संश्लेषो यत्र जायेत तद्धि पद्मासनं मतम् ॥६७॥
मुष्कस्याग्रविभागेषु, पादद्वितलभागकौ ।
सम्पुटाकारकौ कृत्वा, हस्ताभ्यां तत्र तन्यताम् ।६८।
कच्छपिका च कर्त्तव्या एवं कार्ये च तत्क्षणे ।
यदासनं प्रजायेत तद्धि भद्रासनं भवेत् ॥६९॥
यत्रोपविश्य संयुक्ताङ्गुल्यश्च गुल्फकैः सह ।
तथा पृष्ठ्याश्च संश्लिष्टाः, द्विजङ्घके द्विपादकैः ।७०
प्रसारितौ च कर्त्तव्यौ तदोत्कटिकमासनम् ।
तथा पादतलाभ्यां च पृष्ठ्याश्च त्याजने सति ७१
गोदोहिकासनं चैव ज्ञेयमासनवेदिना ।
द्विभुजावायती कृत्य ऊर्ध्वं स्थितश्च तिष्ठति ॥७२॥
अवस्थितषु देहेषु, अपेक्षा रहितो भवेत् ।
कायोत्सर्गाभिधं चैव, चासनं प्रणिगद्यते ॥७३॥
यत्रासने च कर्त्तव्ये, मनस्थैर्यं प्रजायते ।
तदासनं तु विज्ञेयं ध्यानसिद्धिं चिकीर्षता ॥७४॥
प्रोक्तं योगशास्त्रे :—

स्याज्जंघयोरधो भागे पादोपरि कृते सति ।
पर्यङ्को नाभिगोत्तान, दक्षिणोत्तरपाणिकः ॥७५॥
वामोऽङ्घ्रिर्दक्षिणोरूध्वं, वामोरूपरि दक्षिणः ।
क्रियते यत्र तद्वीरोचितं वीरासनं स्मृतम् ॥७६॥
पृष्टे वज्राकृती भूते दोर्भ्यां वीरासने सति ।
गृह्णीयात्पादयोर्यत्राङ्गुष्टौ वज्रासनं तु तत् ॥७७॥
सिंहासनाधिरूढस्यासनापनयने सति ।
तथैवावस्थितिर्या ता मन्ये वीरासनं विदुः ॥७८॥
जङ्घाया मध्यभागे तु, संश्लेषो यत्र जंघया ।
पद्मासनमिति प्रोक्तं, तदासनविचक्षणैः ॥७९॥
संपुटी कृत्य मुष्काग्रे, तलपादौ तथोपरि ।
पाणिकच्छपिकां कुर्याद्यत्र भद्रासनं तु तत् ॥८०॥
श्लिष्टाङ्गुली श्लिष्टगुल्फौ, भूश्लिष्टोरू प्रसारयेत् ।
यत्रोपविश्य पादौ तत् दण्डासनमुदीरितम् ॥८१॥
आयासेन सदा मुक्तः, घ्राणाग्रे नेत्रतां न्यसेत् ।
सम्मील्य चौष्टकौ द्वौ च, प्रसन्नमुखतां भजेत् ८२
पूर्वोत्तरदिशायां च, मुखं कृत्वाऽप्रमादवान् ।
ध्यानकर्त्ता तु योगीन्द्रः, ध्यानार्थमुद्यतो भवेत् ।८३

काष्टाग्निसमबोधस्तु, अत्र दृष्ट्यां प्रजायते ।
क्षेपो न विद्यते चात्र आसनसाधनोद्यतः ॥८४॥
श्रवणेच्छा दृढा ज्ञेया, सर्वदा तत्र तत्परः ।
तारुण्यसुखसंयुक्ता, स्त्रिया सह समन्वितः ।८५।
यथा सुरस्य सङ्गीतं, श्रोतुमिच्छा प्रजायते ।
ततोऽपि शुद्धतत्त्वानि, श्रोतुमिच्छा बलीयसी ।८६।
यथा शयित राजानः, शृण्वन्ति धर्मवार्त्तिकाम् ।
प्रमत्तासनश्रोतव्ये, धर्मेऽनादरता भवेत् ॥८७॥
श्रोतुमिच्छा तु सा नैव, कथ्यते गुरुयोगतः ।
प्रत्युत धर्महानिः स्यादतोऽप्रमत्ततां भज ॥८८॥
यथैव शास्त्रश्रोतव्ये, मानसं परिरज्यते ।
विकसितं शरीरं स्याच्छ्रवणे चैकतानता ॥८९॥
सर्वकार्यं च संत्यज्य, श्रवणे सम्मुखः सदा ।
तादृक् श्रोतृत्व युक्तं स्यात्तत्वश्रवणकालिके ॥९०॥
विनेच्छां गुणगानं च कर्त्तुं नैवं तु युज्यते ।
बधिराग्रे च शङ्खध्ममन्धाग्रे दर्पणं यथा ॥९१॥
तथैव निर्गुणानां च, पार्श्वे धर्मकथा मता ।
अतो निर्गुणतां त्यक्त्वा सगुणत्वं समाश्रय ।९२।

प्रायोऽत्र विघ्नता नैव, धर्महेतौ प्रजायते ।
अनाचारपरीहारात्साधनं प्रतिपद्यते ॥९३॥
येषां पूर्णा च सामग्री तेषां कार्ये तु पूर्णता ।
पूर्णसाधनभावाय, प्रयत्नः प्रविधीयताम् ॥९४॥
स्थिरबन्धस्वरूपत्वमासनमत्र सम्मतम् ।
स्थिरासने च सद्ध्यानं स्थिररूपेण जायते ॥९५॥
येषामासनसिद्धिः स्यात्प्राणायामादिके तथा ।
योगाङ्गे प्रवृत्तिस्तेषामस्खलिता प्रजायते ॥९६॥
यमनियमरूपे च योगाङ्गे शुद्धपालिते ।
तेषामासनसंसिद्धिः भवति सर्वदा शुभा ॥९७॥
धन्यास्ते पुरुषा ज्ञेया सेवन्ते ये च स्वासनम् ।
धर्महेतुः सदा चैवं ते नराः सुखभागिनः ९८॥

इति श्री शास्त्रविशारद जैनाचार्य जगद्गुरु
विश्ववन्द्य श्रीविजयधर्मसूरीश्वर शिष्येण
न्यायविशारद न्यायतीर्थोपाध्याय
मङ्गलविजयेन विरचिते योग
प्रदीपे तृतीययोगाङ्गासन
वर्णननामा पञ्चदशम
प्रकाशः समाप्तः ॥

# प्राणायामस्वरूपवर्णनम्

वीतरागं जगन्नाथं सर्वज्ञं शुद्धरूपकम् ।
निष्कलङ्कं जगद्ध्येयं वंदे तं वीरस्वामिनम् ॥१॥
वाराणस्यां च यज्जाता कल्याणकचतुष्टयी ।
यस्योपदेशसामग्रीं प्राप्य तरन्ति सागरम् ॥२॥
येनापकारबुद्धीनां कमठादि दुरात्मानाम् ।
घोरोपसर्गकर्तॄणां चोपरि करुणा कृता ॥३॥
घ्राणविवरपर्यन्तं, जलधूलिविमिश्रितम् ।
तादृग् जलं च वर्षन्तं, कमठं तारयन्ति ये ॥४॥
तं पार्श्वा-धीशदेवेशं, नत्वा जगदुद्धारकम् ।
स्वगुरुं हृदि संस्थाप्य, प्राणायामो वितन्यते ॥५॥
ध्यानस्य परिसिद्ध्यर्थं, प्राणायामः प्रकीर्तितः ।
तं विना चित्तवाय्वोश्च, जयं कर्त्तुं न शक्यते ॥६॥
यत्र स्वान्तं मरुत्तत्र, यत्रानिलस्ततोमनः ।
क्षीरनीरसमोऽनयोः, सम्बन्धस्तत्र सम्मतः ॥७॥
एकस्यैव विनाशे च, द्वितीयं परिनश्यति ।
एकस्यैव स्थितौ चैव, द्वितीयं परितिष्ठति ॥८॥

तयोर्द्वयोर्विनाशे च, इन्द्रियबुद्धिनाशनम् ।
ततो मोक्षः प्रजायेत, इति सर्वं व्यवस्थितम् ॥९॥
श्वासोच्छ्वासगतीनां च, निरोधे प्राणयामता ।
रेचकपूरकाभ्यां च, कुम्भकेनैव त्रैविधम् ॥१०॥
कैश्चिदाचार्यवर्यैश्च, प्रत्याहारश्च शान्तता ।
उत्तराधरभेदेन, चत्वारः परिकीर्त्तिताः ॥११॥
अतः सर्वस्य सांकल्ये[1], भेदा सप्तभवन्तिवै ।
कोष्ठादतिप्रत्यत्नेन, मुखनासाग्ररन्ध्रतः ॥१२॥
वायूनां बाह्यक्षेपे च, रेचकः परिकीर्त्तितः ।
वायुमाकृष्य चापानद्वारपर्यन्तपूरणम् ॥१३॥
पूरकः स समाख्यातः, स्थिरीकारे तु कुम्भकः ।
एतत्त्रयप्रवातानां, बाह्यत्वं प्रतिपाद्यते ॥१४॥
एकस्मात्स्थानतः कृष्ट्वा, अन्यस्थाने च रक्षणम् ।
प्रत्याहारः समाख्यातः शान्तता सर्वसंमता ।१५।
तालुघ्राणास्य द्वारा च, यो वायुः प्रविरुध्यते ।
स शान्तः परिज्ञातव्यः, उत्तरस्तु निरूप्यते ॥१६॥
वायुमापीय चोर्ध्वांशे, चाकृष्य हृदयादिके ।

---

१ तत्र सर्वभिक्तयर्थोऽत्र सु प्रत्ययोज्ञेयः　　　　१ संकलने

स्थाने धारणरूपत्वं, उत्तरः समधीयते ॥१७॥
ततो विपर्ययरूपेण, वायूनां प्रविधारणम् ।
अधरः स समाख्यातः, कीर्त्तितं वायुसप्तकम् ।१८।
रेचकवायुकर्त्तव्ये, रोगाणां च कफात्मनाम् ।
विनाशो जायते तस्मात्पूरकेनैव पुष्टिता ॥१९॥
व्याधीनां परिनाशश्च, कुम्भकेनैव तन्यते ।
हृत्पद्मप्रविकाशं च, नश्येदान्तरग्रन्थिता ॥२०॥
बलस्थिरत्व वस्तूनां, वृद्धिस्तु सर्वथा भवेत् ।
प्रत्याहारेण कान्तीनां, बलानां च प्रवृद्धिता ॥२१॥
शान्त्या च दोषशान्तिः स्यादुत्तराधरवायूनाम् ।
सेवनात्कुम्भकानां च, स्थिरता सर्वतो मुखी ॥२२॥
स्थानवर्ण क्रियार्थानां, ज्ञायकः शुद्धताजुषः ।
प्राणायामस्य द्वारेण, प्राणापानसमानके ॥२३॥
उदानव्यानवायूनां, जयं कर्त्तुं च शक्यते ।
प्राणवायुश्च नासाग्रे, हृन्नाभिचरणान्तके ॥२४॥
तत्रैव सर्वदा ज्ञेयः, हरिद्वर्णेन संयुतः ।
गमागमस्य[१] व्यापर्त्तेः, धारणेन विजीयते ॥२५॥

१ गमनागमनव्यापारस्य

प्राणादि स्थानयोगेन, कृत्वा च रेचकं पुनः ।
तथा च पूरकं कृत्वा, व्याप्रियेते गमागमौ ॥२६॥
तथा कुम्भकद्वारेण, धार्यते च पुनः पुनः ।
अपानः कृष्णवर्णः स्याद्गुलस्यानु चैव नाडिगः ॥२७॥
चरणपृष्ठभागेषु, गुदायां च स्थितः सदा ।
स्वकीय स्थान योगेन, कृत्वा च रेचकं पुनः ॥२८॥
तथैव पूरकं कृत्वा, जयं कर्त्तुं च शक्यते ।
समानः शुक्लवर्णः स्यान्नाभिहृत्सर्वसन्धिगः ।२९।
स्वकीयस्थानयोगेन, कृत्वा च रेचकं पुनः ।
तथैव पूरकं कृत्वा, विजेतुं शक्यते सदा ॥३०॥
उदानो रक्तवर्णः स्याद् हृत्कण्ठतालु भ्रू स्थितः ।
तथा मस्तकगो ज्ञेयः गमागमनियोगतः ॥३१॥
सर्वथा वशवर्त्तीस्यादुदानस्तादृशो मतः ।
प्राणाकर्षणयोगेन, हृदयादौ च स्थाप्यते ॥३२॥
बलपूर्वेण तस्यैव, आकर्षणं विधीयताम् ।
आकृष्योपरिरुध्वा च, वशीकर्त्तुं च शक्यते ।३३।
सर्वत्वचितुव्यानः स्याद्वर्णैरिन्द्रधनुः समः ।
प्रसारणैश्च संकोचैः, क्रमेण कुम्भके कृते ॥३४॥

प्रसारणैश्च संकोचैः क्रमेण कुम्भके कृते ॥३४॥
जपं कर्त्तुं च शक्येत इति सर्वं विचार्यताम् ।
प्राणापान समानानामुदानव्यानवायूनाम् ॥३५॥
क्रमेण बीजरूपाणि, तेषां ध्यानाय सन्ति वै ।
स्वरोदयप्रकाशे च, तत्स्वरूपं निरूपितम् ॥३६॥
प्राणवायोर्जयेनैव, जठराग्नेश्च शक्तता ।
दीर्घश्वासस्य वायूनां, जयो देहेषु लाघवम् ॥३७॥
समानापानजेतव्ये, क्षतभङ्गादिरोहणम् ।
जठराग्नौ प्रदीप्तिः स्यान्मांसस्य स्वल्पता भवेत् ।३८।
तथा व्याधिः विनाशः स्यात्तयोश्च विजये सति ।
उदानवायुजेतव्ये उत्क्रान्ति जलकर्दमे ॥३९॥
अबाधा सर्वदा ज्ञेया, व्यानस्य विजये तथा ।
शीतोष्णस्य न पीडा स्यात्कान्तिर्निरोगता सदा ४०
अनेनैव प्रकारेण, प्राणादीनां जये कृते ।
कृत्वाभ्यासं मनःस्थैर्यमभ्यासं सर्वदा भजेत् ॥४१॥
उपरोक्तासने स्थित्वा, पादाङ्गुष्ठान्तकं तथा ।
शनैः शनैश्च वायूनां, कर्त्तव्यं रेचनं पुनः ॥४२॥
पूर्यतां वाममार्गेण, प्रथमं मनसा सह ।
पादाङ्गुष्ठेषु रुध्वा च, रुध्यात्पादतले ततः ॥४३॥

ततः पार्ष्णिविभागेषु, जंघायां गुल्फके तथा ।
उर्वोर्जानुनि पायुस्थे, लिङ्गे नाभौ च तुन्दके ॥४४॥
हृदये कण्ठस्थाने च, जिह्वायां तालुस्थानके ।
नासिकाग्रविभागे च, नेत्रे भ्रू मस्तके तथा ॥४५॥
ततोऽनेन प्रकारेण, शिरसि धार्यतां पुनः ।
ततो रश्मि क्रमेणैव, वायुना सह धारणे ॥४६॥
एकस्थानात्परस्मिंश्च, स्थाने नीत्वा च वायूनाम् ।
ततश्च ब्रह्मरंध्रेषु ततोऽपि नाभिपङ्कजे ॥४७॥
नीत्वा विरेचनं कृत्वा, ततः पश्चाच्च तन्यताम् ।
विरेचने क्रमोऽयं तु दर्शितो योगमार्गतः ॥४८॥
पादांगुष्ठादि स्थानेषु, जंघायां जानुनोस्तथा ।
उर्वोर्गुदा विभागे च, लिंगे च धारणे कृते ॥४९॥
ततः शीघ्रगतिर्भूयाद् बलं च प्रतिपद्यते ।
नाभौ धारणकर्त्तव्ये, ज्वरादिकं विनाशयेत् ॥५०॥
जठरे धारणेनैव, देहशुद्धिस्तु जायते ।
हृदये धारणेनैव, शुद्धं ज्ञानं प्रजायते ॥५१॥
कूर्मनाड़ीषु धर्त्तव्ये, रोगजरे विनाशयेत् ।
कण्ठे च धारणेनैव, क्षुधातृषे विनश्यतः ॥५२॥

जिह्वाग्रे धारणेनैव, रसज्ञानं प्रजायते।
नेत्रयोर्धारणेनैव, रूपज्ञानं प्रजन्यते ॥५३॥
मस्तके धारणेनैव, नाशयेन्मस्तकव्यथाम्।
तथा क्रोधस्य शान्तिश्च, जायते नात्र संशयः।५४।
ब्रह्मरन्ध्रेषु धर्त्तव्ये, सिद्धस्य दर्शनं भवेत्।
अनेनैव पकारेण, धारणाऽभ्यासतां भजेत् ॥५५॥
ततः प्रवनचेष्टायाः, निःसन्देहे कृते सति।
सिधिप्रधानहेतूनां, ज्ञानार्थमुद्यतोभवेत् ॥५६॥
नाभिसंचारभावस्य, निष्कासने कृते सति।
हृद्गतिं कारयित्वा च, द्वादशान्ते च धारणे ॥५७॥
ततः पवनस्थानानि जानीते स्थानयोगतः।
तस्य संचारस्थानस्य, गतिज्ञानस्य योगतः ॥५८॥
अभ्यासस्यैव योगेन, शुभाशुभ फलोदयात्।
तद्युक्तकालभावस्य, आयुषो ज्ञानता भवेत् ॥५६॥
ततोऽपि योगिना चैव, स्वान्तस्य वायुना सह।
शनैः शनैश्च कृष्ट्वा च हृत्पद्मेषु नियन्त्रयेत् ॥६०
तादृकार्ये च कर्त्तव्ये, अविद्या परिनश्यति।
विषयेच्छा विनाशेन, विकल्पांश्च विनाशयेत् ।६१।

ज्ञानं हृदि च जायेत, प्राणायामविधापने ।
तत्र चित्ते स्थिरे जाते वायोः क्व मण्डले गतिः ॥६२॥
कुत्र सङ्क्रमवैश्रामो, नाडी च कीदृशी भवेत् ।
इत्यादि सर्ववार्त्तानां, ज्ञानं च सुलभं भवेत् ॥६३॥
नासिका विवरे भौमं, वारुण वायव्ये तथा ।
आग्नेयकाभिधानानि, मन्यते मण्डलानि च ॥६४॥
मण्डले तत्र भौमं च, पृथिव्या बीजपूर्णकम् ।
वज्रचिह्नेन संयुक्तं, तप्त सुवर्णबिम्बकम् ॥६५॥
वारुणाक्षरलाञ्छितं, चन्द्रसमानकान्तिकम् ।
अमृतनिर्झरैः सान्द्रं, ज्ञेयं वारुणमण्डलम् ॥६६॥
स्निग्धसाञ्जनसंकाशमभ्रसदृशकान्तिकम् ।
अत्यन्तवृत्तबिन्दुना युक्तं दुर्लक्ष्यवायुना ॥६७॥
आक्रान्तं चञ्चलं चैव ज्ञेयं वायव्यमण्डलम् ।
चतुर्थमण्डलस्यापि, स्वरूपं प्रतिपाद्यते ॥६८॥
ऊर्ध्वज्वालासमायुक्तं भयंकरं त्रिकोनकम् ।
स्वस्तिकेनैव संयुक्तं फुल्लिंगसमपिङ्गलम् ॥६९॥
तथा तद् बीजसंयुक्तं ज्ञेयकाग्नेयमण्डलम् ।
एतानि मण्डलान्येवं, ज्ञातव्यानि मनीषिभिः ॥७०॥

अभ्यासस्यैव द्वारेण, पूर्वोक्त मण्डलानि च ।
स्वयमेव च ज्ञेयानि, आत्मना चात्मज्ञानतः ॥७१॥
तच्चतुर्मण्डले चैव, क्रमतो भ्रमद्वायूनाम् ।
चतुष्प्रकाररूपेण, ज्ञानं कार्यं च सर्वदा ॥७२॥
पीतवर्णस्य द्वारेण, भृत्वा च घ्राणछिद्रकम् ।
शनैः शनैश्च सञ्चारि, कोणाष्टाङ्गुलमानतः ।७३।
पुरन्दरत्व वातेन, नाम्ना सर्वत्र गीयते ।
श्वेतशीतलनीचैश्च, भागे शीघ्रं च गच्छति ॥७४॥
द्वादशाङ्गुलमानेन, वरुणो वायुको भवेत् ।
शीतोष्णकृष्णतिर्यक् च निरन्तरं च गम्यते ॥७५॥
षडङ्गुलप्रमाणैश्च, संचारे पवनाभिधः ।
बालसूर्यसमाज्योतिरत्युष्णश्चतुरङ्गुलः ॥७६॥
आवर्त्तयुक्तता तत्र, ऊर्ध्वं संचारिवायुकः ।
दहनाभिधता ज्ञेया, सर्वत्र सर्वयोगिभिः ॥७७॥
स्तम्भनादिककार्येषु उत्तमश्च पुरन्दरः ।
सर्वोत्तमेषु कार्येषु, वरुणः परिज्ञायते ॥७८॥
मलीने चंचले कार्ये, पवनः परिकीर्त्तितः ।
तथा वश्यादि कार्येषु, वह्निश्च परिभाषितः ॥७९॥

छत्रचामरहस्त्यश्वाः, ज्ञेयानि च पुरन्दरात् ।
आरामराज्यसमग्री, अभीष्टफलवस्तूनि ॥८०॥
राज्यादि सुखसम्पूर्णं, पुत्रस्वजनबन्धुकम् ।
सरसवस्तु संयोगं, सूचयेद्वरुणः सदा ॥८१॥
पवनसेवनेनैव, कृषिसेवादि कार्यकम् ।
शीघ्रं नश्यति मृत्युं च, सूचयेन्नात्र संशयः ॥८२
भयकलहवैरादि, त्रासश्च परिजायते ।
ततस्तत्सेवनं त्याज्यं, तादृग्योगं चिकीर्षता ॥८३॥
दहनसेवनेनैव, दाहभयौ च शोकता ।
रोगदुःखादि विघ्नानां, श्रेणिं विनाशतां भजेत् ८४
पूर्वोक्त सर्ववायुश्च, चन्द्रसूर्यस्य मार्गतः ।
मण्डलेच प्रवेशे तु, शुभकारी भवेत्सदा ॥८५॥
निष्कासे विपरीतं स्यात्प्रवेशे जीववायुता ।
निष्काश समये चैव, मृत्युवायुश्च ज्ञायताम् ॥८६॥
चन्द्रमार्गप्रवेशे च, इन्द्रवरुणवायुकौ ।
सर्वसिद्धिप्रदातारौ, विज्ञेयौ वायुवेदिना ॥ ८७॥
सूर्यमार्गात्प्रवेशे च, निष्क्रमणे तथैव च ।

पवनदहनौ वायूदक्षिणमार्गगच्छतः ।
विनाशककरौ ज्ञेयौ, अन्यमार्गे च मध्यमौ ॥८६
इङ्गलपिंगले चैव, सुषुम्ना नाडिका मता ।
तासां क्रमेण स्थानानि, चन्द्रसूर्यशिवानि च ॥६०
तासु च वामनाडी तु, सर्वदा सर्व गात्रके ।
अमृतवर्षिणी ज्ञेया, अमृतं बिभृती सदा ॥६१॥
अभीष्टफलसूच्या सा विज्ञेया वामनाडिका ।
दक्षिणनाडिसंचारः, अनिष्टफलसूचकः ॥६२॥
संहारकारिका साऽपि, विज्ञेया नाडिवेदिना ।
सुषुम्ना संचलन्ती सा, सिद्धिमोक्षप्रदायिनी ॥६३
अभ्युदयादि कार्येषु, वामनाडी प्रशंसिका ।
संभोगाहारयुद्धादि दीसकार्येषु दक्षिणा ॥६४॥
प्रभाते शुक्लपक्षे च, वाम नाडी शुभा मता ।
कृष्णपक्षे च दक्षिणा, नाडी शुभफला सदा ॥६५
पूर्वोक्तपक्षसर्वेषु, त्रिषु त्रिषु दिनेषु च ।
चन्द्रसूर्योदयौ ज्ञेयौ, शुभफलप्रदानकौ ॥६६॥
वायुश्चन्द्रसमाश्रित्य, उदयं यदि गच्छति ।
अस्त[illegible] कालं. सर्यें परिसमाप्नयात ॥६७॥

तदा स शुभकारीस्यात्सूर्येषु चोदयस्तथा ।
चन्द्रेषु चास्ततां यायात्कल्याणफलकः सदा ॥९८
शुक्लपक्षे दिनारम्भे, काले च ध्यानपूर्वकम् ।
प्रतिपद्वायुसञ्चारः, शुभोऽशुभश्च लोक्यताम् ॥९९
आद्यत्रयदिने वायुः, सोदेति चन्द्रके स्वरे ।
ततस्त्रयदिने सूर्ये, कुरुते संक्रमं सदा ॥१००॥
ततस्त्रयदिने चन्द्रे, ततः सूर्ये च चन्द्रके ।
एवं च पूर्णमास्यन्तं, तदुगमनं प्रजायते ॥१०१॥
कृष्णपक्षे दिनारम्भे, सूर्योदयेन सार्धकम् ।
आद्यत्रय दिने सूर्ये, संचारः शुभसूचकः ॥१०२॥
ततस्त्रय दिने चन्द्रे, ततः सूर्ये च चन्द्रके ।
अमावास्याश्च पर्यन्तं, विज्ञेयं सर्वसज्जनैः ॥१०३॥
पक्षत्रितयपर्यन्तमन्यथा यदि स्याद् गतिः ।
षड्मासावधि तस्यायुः, समाप्तिं परिगच्छति ।१०४।
पक्षद्वयविपर्यासे, अभीष्टबन्धुवस्तुनः ।
विपत्तिः परिज्ञातव्याः, एक पक्षे विभाव्यते ॥१०५॥
एकपक्षे विपर्यासे, दारुणरोगता भवेत् ।
द्वित्रिदिनविपर्यासे, कलहः समुत्पद्यते ॥१०६॥

द्वयादिदिनपर्यन्तं, रात्रिदिवसकालिकम् ।
वायोः सूर्ये च संचारः, मृत्युः क्रमेण ज्ञायताम् १०७
त्रिद्व येकवर्षपर्यन्तं, मृत्युकालश्च सम्मतः ।
चन्द्रस्वरस्य संचारः, फलेन सह कथ्यते ॥१०८॥
एक द्व यादित्रिपर्यन्तं रात्रिदिवसकालिकम् ।
वायोश्चन्द्रे च संचारः, तदा रोगश्च ज्ञायताम् १०६
यद्येकमासपर्यन्तं, सूर्यनाडी वहेत्सदा ।
एकरात्र्यवसाने च, मृत्युकालश्च सर्वथा ॥११०॥
यद्येकमासपर्यन्तं, चन्द्रनाड़ी वहेत्सदा ।
तदा तु धनहानिश्च, ज्ञातव्या स्वरवेदिना ॥१११॥
त्रिनाड़ी प्रविमार्गे च, वहेद्वायुश्च सर्वदा ।
मध्याह्नकालिके पश्चात् मृत्युर्भवति निश्चितम् ।११२
दशदिवशपर्यन्तं, द्विनाडिमार्गके स्थिते ।
कर्त्तव्ये गमने मृत्युं, सूचयेन्नात्र संशयः ॥११३॥
यदि दशदिनानां च, चन्द्रनाड्यां स्वरो वहेत् ।
तदोद्वेगकरोगादि, जायते वायुदोषतः ॥११४॥
तथार्धयामपर्यन्तं, इतस्ततश्चलेत्सदा ।
तदा तु लाभपूजादि, भवति वायुयोगतः ॥११५॥

विषुवत्कालिके ज्ञाते, यस्य नेत्रं परिस्फुरेत् ।
तस्य मृत्युस्तु निःशंकं, एक दिनान्तके भवेत् ॥११६॥
पञ्चसंक्रान्तिमुल्लंघ्य, यदि वायुर्मुखे चलेत् ।
तदा मित्रधनानां च, हानिः स्यात्सर्वतो मुखी ।११७।
निस्तेजत्वं विना मृत्युं, सर्वानर्थं ततो भवेत् ।
त्रयोदशासु सङ्क्रान्तिं, यदि च समुल्लंघयेत् ॥११८
चले तु वामनाड्यां च तदा रोगादि जायते ।
मार्गशीर्षस्य संक्रान्तेः, समाश्रित्य च तत्क्षणम् ११६
पंचदिनावसानं च, यद्येकनाडिकां बहेत् ।
अष्टादशे च वर्षान्ते, तदा मृत्युं च सूचयेत् ।१२०।
संक्रान्तिं शारदीकाल मारभ्य दिनपञ्चकम् ।
एकनाड्यां वहेद्वायुः, पञ्चदशसमान्तके ॥१२१॥
मृत्युकालश्च विज्ञेयः कालवेदि महात्मना ।
श्रावणमासप्रारम्भे, यदि च दिनपञ्चकम् ॥१२२॥
एकनाड्यां वहेद्वायुः, द्वादशवर्षकालिके ।
मृत्युकालश्च विज्ञेयः, सर्वदा योगज्ञानतः ॥१२३॥
ज्येष्टमासस्य प्रारम्भादश दिनावसानकम् ।
एकनाड्यां बहेद्वायुः, नववर्षे तु मृत्युता ॥१२४॥

चैत्रमासस्य प्रारम्भात्, दिवसपञ्चमानकम् ।
एकनाड्यां वहेद्वायुः, षड्वर्षान्ते च मृत्युता ।१२५।
माघमासस्य प्रारम्भाद्दिवसपञ्चमानकम् ।
एकनाड्यां वहेद्वायुं त्रिवर्षान्ते च मृत्युता ॥१२६
यदि वायुश्च सर्वत्र, द्वित्रिचतुर्दिनान्तकम् ।
एकनाड्यां बहेत्सोऽथ, मृत्युश्च वर्षमध्यके ॥१२७
यथा क्रमानुसारेण, मृत्युकालश्च ज्ञायताम् ।
चलद्वायुं न जानीयाः, यदि शुभप्रकारतः ॥१२८॥
तदा तु पीतशुक्ले च, अरुणश्यामबिन्दुतः ।
तस्यैव निश्चयः कार्यः, वायुज्ञानं चिकीर्षता ।१२९।
द्व्यंगूष्ठाभ्यां चद्वौ कर्णौ द्विमध्यमाङ्गुलिकात्तथा ।
द्विनासाच्छिद्रकौ द्वौ च, कनिष्ठाऽनामि[1]योगतः[2] १३०
मुखपद्मं निरुंध्येत, द्वितर्जनीकया च वै ।
नेत्रकोणं च रुंध्याच्च, तथा रुध्वा च स्वासताम् १३१
सावधानमनो भूत्वा, बिन्दुरङ्गो विलोक्यताम् ।
पीतबिन्दुनिपाते च, भौमतत्वं तु ज्ञायताम् ।१३२।
श्वेतबिन्दु निपाते तु, वरुणतत्त्वता भवेत् ।

---

१—अनामिका । २—ताभ्यां ।

कृष्णबिन्दुनिपाते च पवनः परिज्ञायताम् ॥१३३॥
रक्तबिन्दुनिपाते वै, हुताशनं च ज्ञायताम् ।
बिन्दुनिपातकाले च तत्त्वज्ञानं च कीर्त्तितम् ॥१३४॥
चलन्ती नाडिका वामा, दक्षिणया निरुध्यते ।
तस्यांगं परिपीड्येत, ततोऽन्यनाडिका भवेत् ।१३५।
विचारशीलमानुष्याः, वामभागाग्रभागके ।
चन्द्रक्षेत्रं च जल्पन्ति क्षेत्रविज्ञानहेतवे ॥१३६॥
लाभाऽलाभे सुखं दुखं जीवनमरणे तथा ।
वायुसञ्चारज्ञातारः विरलाः सन्ति सज्जनाः ॥१३७॥
यो बुद्धिमांश्च योगीन्द्रः विशुद्धां नाड़िकां तथा ।
सुविशुद्धप्रकारेण, जानाति वायुतस्ततः ॥१३८॥
उत्पद्यमानभावानां, सामर्थ्यानां च ज्ञातृता ।
नाभ्यष्टकर्णिकारूढं, कलाबिन्दुपवित्रितम् ॥१३९॥
रेफेण स्फुट-कान्तियुग्, हकारपरिचिन्तनम् ।
ततो विद्युत्त्व वेगेन, अग्निकणशतानि च ॥१४०॥
शिखानां सूर्यमार्गाच्च, तत्र रेचनता भवेत् ।
ततो नभस्तले तस्य, प्राप्त्यर्थं यत्नतां भजेत् ।१४१।
तत्पश्चादमृतार्द्रं च, कृत्वा शनैः शनैस्तथा ।

उतार्य चन्द्रसादृक्षी, कान्तिकं ह्यक्षरं पुनः ॥१४२॥
चन्द्रमार्गेण सन्नाभिपद्मे च परिस्थाप्यताम् ।
अनेनैव प्रकारेण, विशुद्धमार्गतस्तथा ॥१४३॥
निरन्तरं च प्रावेश्यं, निष्क्रमणं करोति यः ।
नाड्यभ्यासक्रियाणां सः, करणे कुशलो भवेत् १४४
अनेनैव प्रकारेण, नाड्या ह्यभ्यासद्वारतः ।
मेधावी कुशलो ज्ञानी, स्वकीयेच्छानुसारतः ॥१४५॥
तत्क्षण पुटकेनैव, घटितं सर्वथा भजेत् ।
अतो वायुविज्ञानार्थं, यत्नं करोतु सर्वदा ॥१४६॥
एकस्यां नाडिकायां च, सार्द्धद्विघटिकालकम् ।
सर्वत्र विद्यते वायुः, ततोऽनुपरिवर्तनम् ॥१४७॥
तां नाड़िकां च संत्यज्य, द्वितीय नाडिकां व्रजेत् ।
एवं क्रमेण ज्ञातव्यं, वायुसंचारमानकम् ॥१४८॥
स्वस्थे मनुष्यजीवे वै, एकत्र दिनरात्रिकम् ।
प्राणपवनसंख्यायाः, प्रमाणं कीदृशं भवेत् ।१४९।
गमनागमरूपेण, श्वासोच्छ्वासप्रमाणकम् ।
तन्यते यदि ज्ञानार्थं, ज्ञानिभिः कथितं तदा ।१५०।
एकविंशतिसाहस्त्रं, षट्शताधिकरूपकम् ।

प्रमाणं परिज्ञातव्यं, प्राणवायोश्च सर्वदा ॥१५१॥
अज्ञानी पुरुषा येऽपि, वायुसंक्रमणादिकम् ।
न जानन्ति कथं ते च प्रवीणास्तत्त्ववार्त्तके ॥१५२॥
पूरकवायुपूर्णेन, अधोमुखं च पङ्कजम् ।
प्रफुल्लितं प्रजायेत, तथोर्ध्वमुखतां व्रजेत् ॥१५३॥
कुम्भकवायुद्वारेण, प्रबोधितं भवेत्तथा ।
रेचकेन ततः क्षिप्त्वा, वायुहृत्पद्मपङ्कजात् ॥१५४॥
आकृष्यते तथोर्ध्वं श्रोतो मार्गग्रन्थिभेदनम् ।
कृत्वा ब्रह्मपुरं नीत्वा, पश्चाद्योगी कुतूहली ।१५५।
ब्रह्मरन्ध्राच्च निष्कास्य समाधियुक्तको भवेत् ।
अर्कतूले शनैर्वेधाभ्यासतां परितो व्रजेत् ॥१५६॥
मालतीमुकुलादौ च, ततस्तद्दात्ववर्जितः ।
स्थिरलक्ष्यकद्वारेण, सदा वेधनतां भजेत् ॥१५७॥
दृढाऽभ्यासकतां भाव्य, वरुणवायुतस्ततः ।
कर्पूरागुरुकुष्ठादि गन्धद्रव्येषु स्वच्छतः ॥१५८॥
प्रकारतच्च वेधं वै, कृत्वा च तदनन्तरम् ।
तत्र लक्ष्यं च सम्प्राप्य, तथैव वायुयोजने ॥१५९॥
कौशल्यं च परिप्राप्य, उद्यमपूर्वकं तथा ।

सूक्ष्मपक्षि शरीरेषु, वेधं पतंगदेहके ॥१६०॥
कृत्वा भृङ्गशरीरेषु, अभ्यासदृढतां व्रजेत् ।
ततो हरिणपश्वादौ, वेधं कृत्वा तथैव च ॥१६१॥
तादृशधीरयोगीन्द्रः, अनन्य मानसो भवेत् ।
जितेन्द्रियकतां प्राप्य, संचरणं करोति वै ॥१६२॥
ततो नराश्वहस्त्यादि, देहे प्रवेशनिर्गमौ ।
कृत्वा क्रमेण पुस्तादौ, उपले संक्रमं भजेत् ॥१६३
अनेनैव प्रकारेण, मृतप्राणिकलेवरे ।
वामनासाग्रद्वारेण, प्रवेशं लभते जनः ॥१६४॥
किन्तु पापस्य शंकातः, जीवितप्राणिदेहके ।
प्रवेशो नैव कर्त्तव्यः, भवभीरुमहात्मना ॥१६५॥
अनेनैव प्रकारेण, परदेहप्रवेशने ।
अभ्यासशक्तितां ज्ञात्वा, विमुक्तयोगिना समम् १६६
निर्लेपरूपकं भूत्वा, स्वेच्छाऽनुकूलभावतः ।
आश्चर्यजनकं ज्ञेयं, परदेहप्रवेशनम् ॥१६७॥
केवलं तच्च स्वाभ्यासशक्तिज्ञानाय शिक्ष्यते ।
न परवञ्चनार्थं च, योगिना परितन्यते ॥१६८॥
तस्यैव सिद्धिकर्त्तव्ये, प्रयत्ने शतशः कृते ।

अधिकसमये जाते सिद्धिः कस्यापि नो भवेत् ।१६६
क्लेशकारणभूतेनानेकोपायेन वायूनाम् ।
कृत्वा जयं च देहस्थ-नाडीप्रचारस्वाधीनम् ॥१७०॥
कृत्वाऽश्रद्धेय देहे च, परस्मिन् संक्रमे कृते ।
सिद्धेऽपि केवलं तेषां, विज्ञानासक्त योगिनाम् १७१
मोक्षमार्गस्य संसिद्धिः, कदापि नैव जायते ।
आत्मासक्तत्व युक्तानां, तत्र स्पृहा न विद्यते १७२
प्राणायामेन संपीड्ये, स्वान्ते स्वास्थ्यं च नो भवेत् ।
किमर्थमुच्यते तादृक्, अतो हेतुर्निगद्यते ॥१७३॥
प्राणस्यायमने पीड़ा, भवेत्तत्र न संशयः ।
पीडातश्चित्तवैप्लव्यं, ततः शान्तिः कुतो भवेत् १७४
पूरककुम्भके चैव, रेचके च परिश्रमः ।
कर्त्तव्यो नैव चित्तस्य, क्लेशकारण सम्मतः ।१७५।
क्लेशकारणरूपे च, तादृक् परिश्रमे तथा ।
कर्त्तव्ये मोक्षप्राप्तिश्च, प्रत्युत विघ्नतां भजेत् ।१७६।
विघ्नानां संनिधाने च, सर्वदा विद्यमानके ।
कार्ये सिद्धिस्तु कुत्रापि, कदापि नैव सम्भवेत् ॥१७७
नेतीधोत्यादिके येन, हठयोगप्रधानकम् ।

कृतं तेनापि संसार भ्रान्तिगर्त्तासु पातनम् ॥१७८

कृतं सर्वत्र स्वस्यैवमतो हि हठयोगके।

अभ्यासं सर्वथा त्यक्त्वा, भावे[1] सम्मुखतां भजेत् १७९

प्राणायामस्तु भावे च, रेचकादौ च सर्वथा।

कृतो येनैव तेनापि, मोक्षमार्गोऽपि साधितः ॥१८०॥

पातंजलानुसारेण, प्राणायामः प्ररूप्यते।

आसनाभ्यासतः पश्चात्तन्निरूपणता भवेत् ॥१८१॥

आसनसिद्धिकार्याच्च, श्वासोच्छ्वासगतेस्तथा।

प्राणायाम--निरोधश्च, कथ्यते योगवेदिना ॥१८२॥

बाह्यपवनवस्तूनामान्तरप्रणिवेशने।

श्वासश्च परिकथ्येत प्रश्वासः प्रणिगद्यते ॥१८३॥

आन्तरवायुरूपस्य, बाह्यनिष्कासने सति।

प्रश्वासः परिजायेत, द्विगतिरोधने किल ॥१८४॥

प्राणायामस्तु पूर्णः स्यात्प्राणायामप्रयोगतः।

देशकालप्रसंख्याभिः, मात्रासम्बन्धकैस्तथा।१८५।

बाह्याभ्यान्तर भेदाभ्यां, तथा च स्तम्भवृत्तितः।

प्राणायामे च दीर्घत्वं, सूक्ष्मत्वं सर्वदा भवेत् १८६

---

१ भावप्राणायामे

आन्तरश्वासव्यक्तीनां, बाह्यनिष्कासने सति ।
बाह्यनिरोधकर्त्तव्ये, बाह्यकुम्भक उच्यते ॥१८७॥
तद्विधिश्चाष्टकृत्वश्च, रेचककरणे किल ।
षोडश बाह्यकुम्भं च, कृत्वा चतुष्कवारतः ॥१८८॥
पूरके परिकर्त्तव्ये, रेचकं पूरकैः सह ।
बाह्यकुम्भककर्त्तव्ये, बाह्यवृत्तिः प्रकथ्यते ॥१८९॥
बाह्यश्वासस्वरूपं च, आन्तरे परिकृष्य च ।
आन्तरप्रणिरोधे च, आन्तरकुम्भको भवेत् ॥१९०॥
तद्विधिः परिदृश्येत, चतुः प्रणवपूरकम् ।
कृत्वा षोडशचान्तर्यं, कुम्भकं परितन्यते ॥१९१॥
ततोऽष्टरेचकांश्चैव, कृत्वाऽनेन प्रकारतः ।
पूरकरेचकाभ्यां च, कुर्यादान्तरकुम्भकम् ॥१९२॥
तत आभ्यन्तरं कुर्यात् ततो हि बाह्यकुम्भकम् ।
बाह्याभ्यन्तररूपेषु, एकत्र कुत्रचित्तथा ॥१९३॥
सुखपूर्वकप्राणानां, रोधने स्तम्भवृत्तिकम् ।
चतुःप्रणवरूपेण, पूरके करणे सति ॥१९४॥
अष्टरेचक कर्त्तव्ये, ततोऽनेन प्रकारतः ।
पूरकरेचकौ कृत्वा, यत्र कुत्र सुखेन च ॥१९५॥

प्राणानां रोधने चैव, स्तम्भवृत्तिर्निगद्यते ॥
अपरे तस्य भेदाश्च, यावत्संख्याः क्षणा यथा ॥१९६
जायन्ते पूरके वायौ, तावत्संख्याक्षणास्तथा ।
रेचके कुम्भके स्युश्च, संख्याभेदो न विद्यते ।१९७।
प्राणवायोश्च नाभौ च, हृदयकण्ठभागके ।
नासाऽऽभ्यन्तरभागे च, आन्तरदेश उच्यते ।१९८।
नासिका पुरतो वायुः बाह्यषोडश चांगुलम् ।
बाह्यदेशः प्रवक्तव्यः, साधकैः पूरके क्षणे ॥१९९॥
प्राणायामे च कर्त्तव्ये, नाभौ च श्वासकर्षणम् ।
सोऽपि षोडश चांगुलपर्यन्तं च बहिः क्षिपेत् ॥२००
यैर्हृदयान्तके चैव, आन्तरं परिकृष्यते ।
तैर्द्वादशांगुलान्तं च, बहिश्च परिक्षिप्यते ॥२०१॥
यो योगी कण्ठपर्यन्तं, श्वासं च परिकर्षति ।
सोऽप्यष्टांगुले बाह्ये, निष्कासनं तनोति च ॥२०२॥
नासाऽभ्यन्तरभागे च, उपर्यन्तिमभागके ।
परिकर्षति श्वासं च, स चतुरंगुलांस्तथा ॥ २०३॥
बहिश्चा श्वासतां नीत्वा, पूर्वपूर्वस्य चात्र वै ।
अपेक्षोत्तरकालीने, सूक्ष्मत्वं पूर्ववस्तुषु ॥२०४॥

दीर्घत्वं परिज्ञायेतां, प्राणायामे च ख्यं[१]कतः ।
परस्परं च कालस्य, सम्बन्ध दृढ़भावतः ॥२०५॥
तस्य नियमरूपस्य, व्यतिक्रमो न जायते ।
चतुः प्रणवसंख्यातः, पूरककृत्यकालिके ॥२०६॥
एकक्षणश्च सञ्जातः, षोड़श[illegible]था ।
कुम्भके परिकर्त्तव्ये, चतुः क्षणा भवन्ति च ॥२०७॥
अष्टप्रणवद्वारेण रेचके च कृते सति ।
द्वौ क्षणौ परिज्ञातव्यौ, मन्त्रसंख्या न मात्रके ॥२०८
तल्लग्नसमयस्यैव, अभिधा काल नामतः ।
यदि च सुखपूर्वेण, साधकेन कृते सति ॥२०९॥
द्वित्रिचतुर्गुणान्तं च, यावदिच्छन्ति तास्तथा ।
संख्याश्च परिवर्धन्ते, लाभश्च जायते ततः ॥२१०॥
कालमात्राधिके चैव, प्राणायामस्य दीर्घता ।
न्यूनतायां च सूक्ष्मत्वं, प्राणायामेतु ज्ञायताम् ॥२११
बाह्याभ्यन्तरवस्तूनां विषयाणां च त्यागतः ।
केवलकुम्भकश्चैव, प्राणायामः स तूर्यकः ॥२१२॥

---

१ संख्यातः ।

शब्दस्पर्शरसानां च, गन्धवर्णस्य वस्तुनः।
इन्द्रियविषयाणां च, बाह्यविषयता भवेत् ॥२१३॥
सङ्कल्पप्रविकल्पानां, विषयो मानसो मतः।
तेषां च परित्यागे च, कर्त्तव्ये प्राणमार्गतः ॥२१४॥
स्वत एवावरोधः स्यात्प्राणायामः स तूर्यकः।
प्राक्सूत्रे दर्शिते प्राणायामे च प्राणवस्तूनाम् ॥२१५
निरोधेन मनोरोधः, संयमो मानसो मतः।
मन इन्धियरोधाश्च, प्राणसंयमता भवेत् ॥२१६॥
अत्र प्राणस्य रोधार्थं, निर्दिष्टं स्थानकं नहि।
यत्र कुत्रापि स्थानेषु, यथेच्छं परिरुध्यताम् ॥२१७॥
तथा च काल संख्यायाः विधानमपि नो भवेत्।
मात्राणामपि संख्यायाः विधानं नहि सर्वथा ॥२१८
प्राणायामस्य संसिद्धौ, मनः स्थैर्यं प्रजायते।
धारणानां च तेषां वै, सामर्थ्यं सर्वथा भवेत् ॥२१९
प्राणायामेन साकं च, स्वासनाभ्यासयोगके।
नाडीचक्रस्वरूपाणां, गृहाभ्यन्तरवस्तूनाम् ॥२२०॥
भिन्नाङ्गानां च यादृश्यः, प्रसुप्तशक्तयस्तथा।
जागृतिस्तत्र काले च, उत्तमयोगप्राप्तये ॥२२१॥

शरीरे स्वस्थता तस्य, दृढ़रूपा प्रजायते ।
रोगिमनुष्यमात्रैश्च, चित्तैकाग्र्यं न तन्यते ॥२२२॥
तथोच्च तत्त्वज्ञाने च, स्थिरध्यानं न जायते ।
अतो योगस्य सिध्यर्थं, प्रारंभकालिके तथा ॥२२३॥
आसनाभ्यासकर्त्तव्यः, यतो देह दृढं भवेत् ।
चित्ते सुस्थिरता चैव, जायते योगभावतः ॥२२४॥
श्वासानां चैव व्यायामः प्राणायामः स कथ्यते ।
आलस्यमूढ़तादीनां, देहदुर्बलवस्तूनां ॥२२५॥
प्राणायामेन नाशः स्यात्प्राणायामस्त्वतो मतः ।
हठयोगस्य भेदाश्च, कथ्यंते हठयोगतः ॥२२६॥
षट्कर्मासनमुद्राः प्रत्याहारप्राणसंयमौ ।
ध्यानं समाधि रंगानि, सप्तस्यु हठयोगके ॥२२७॥
धौतिर्वस्तिस्तथा नेतिलौकिकी त्राटकं तथा ।
कपालभातिश्चैतानि, षट्कर्माणि समाचरेत् ॥२२८॥
आसनं पूर्वप्रोक्तं च, मुद्रा तु प्रतिपाद्यते ।
महामुद्रा नभोमुद्रा, जालंधराख्य बन्धकः ॥२२९॥
उड्डीयानमहाबन्धौ, मूलबन्धश्च वेधके ।
विपरीतकराश्चैव, खेचरी योनिमुद्रिका ॥२३०॥

शक्तिशालिवज्रोऽल्यौ च तडागी दद्रुकी तथा ।
शाम्भवी धारणे पञ्च, अश्विनी पाशिनी तथा ॥२३१
भुजङ्गिनी च काकी च, मतङ्गी मुद्रका इमाः ।
राजयोगस्य ससाङ्गं, विचारणीयकं सदा ॥२३२॥
धारणे द्व्यंग भूते च, प्रकृति ब्रह्मधारणे ।
ध्यानस्यत्र्यंग रूपाणि, विराटीशस्य ध्यानके ॥२३३
ब्रह्मध्यानं तृतीयं स्यात्समाधिश्चतुरङ्गिका ।
वितर्कानुगतश्चैव, विचारानुगतस्तथा ॥२३४॥
आनन्दानुगतश्चैव, अस्मिताऽनुगतः किल ।
तस्यैव स्थूलभूतश्च, चेन्द्रियसूक्ष्मता तथा ॥२३५॥
अहङ्कारादि वस्तूनि, ध्यातव्यानि भवन्ति च ।
सूक्ष्मक्रिया स्वरूपैश्च स्वरोद साधनादिषु ॥२३६॥
प्रत्याहारेण नादानुसन्धानरूपवस्तुनः ॥
धारणाभिश्च षट्कर्मभेदनकृतिनस्तथा ॥२३७॥
तेषां सम्बन्धता ज्ञेया, अग्रे रूपं विचार्यते ।
वायुतो द्व्यंगुलोर्ध्वं च, गुह्यतो द्व्यंगुलं ह्यधः ॥२३८
चतुरङ्गुलविस्तृतं, समस्तनाडिमूलकम् ।
पक्ष्यंडसदृशं चैव, एककन्दस्तु विद्यते ॥ २३९ ॥

यत्र नाडिसहस्त्र च, द्वासप्ततिकमानके।
निष्कास्य नाडिका तस्मात्सर्वदेहे च प्राप्यते ॥२४०
तासां मध्ये च योगेषु, नाडित्रयप्रधानता।
इङ्गले पिङ्गले चैव, सुषुम्ना चाभिधानका: ॥२४१॥
ईडा भोगवती गङ्गा, पिङ्गला यमुना नदी।
ईडापिङ्गलयोर्मध्ये, सुषुम्ना च सरस्वती ॥२४२॥
प्रणवाकृति रूपा च, सुषुम्ना धनुषाकृति:।
ईडापिङ्गलमध्यत्वाद् मेरुदण्डान्तकं नयेत् ॥२४३॥
तत् स्थानात्पृथग्भूत्वा, वक्राकारं च धारयेत्।
भ्रूयुगलोर्ध्वमीडाभि:, पिङ्गलाभिस्तथा सह ।२४४।
सङ्गता ब्रह्मरन्ध्रास्ये, ब्रह्मरन्ध्रपर्यन्तकम्।
ईडा पिङ्गलसादृशी, सुषुम्ना मूलकन्दत: ॥२४५॥
निर्गताब्रह्मरन्ध्रान्तपर्यन्तं परिगच्छति।
चानेनैव प्रकारेण, नीत्वा मूले च कन्दके ॥२४६॥
ब्रह्मरन्ध्रकपर्यन्तं, विस्तृता सुषुम्नादित:।
ना[१]डिकायाश्च षड्ग्रन्थि,षट्चक्राभिख्यतां वहेत् २४७
योगक्रियाप्रद्वारेण, मूलाधारस्थिता तथा।

१ षटचक्रद्वारत:

कुलकुण्डलिनीं नाड़ीं, प्रबोध्य चक्रद्वारतः ॥२४८॥
सुषम्ना प्रथमे चैव, प्रवाह्य ब्रह्मरन्ध्रके ।
उपरिष्टाच्च साहस्रदलकमलसंस्थिते ॥२४६॥
परमशिवरूपे च, लयं करोति मुख्यतः ।
लयकर्त्तव्यतोद्देशः, प्रथमः परिभाषितः ॥२५०॥
प्रथमचक्रनामाख्यं, मूलाधारकपद्मकम् ।
सुषुम्नाकन्दसंधौ च, तत्स्थितं परिभाव्यताम् २५१
वशषसाश्चतुर्वर्णाः, दलसमाः प्रकीर्त्तिताः ।
रक्तवर्णस्वरूपाश्च, चक्राधिष्टातृ डाकिनी ॥२५२॥
आधारपद्मकर्णिकागह्वरे वज्रनाडिषु ।
मुखे त्रिपुरसुन्दर्याः, वासस्थानं त्रिकोनकम् ॥२५३॥
शक्तिपीठकनामाख्यं, तन्मृदुचपला समम् ।
तत्र कन्दर्पनामाख्य, वायुनिवासस्थानकम् ॥२५४
सोऽपि जोवधराभिख्यः, बन्धुपुष्पसमो मतः ।
कोटिसूर्यप्रकाशाढ्यः, शक्तिशाली च सम्मतः २५५
त्रिकोनशक्तिके पीठे, स्वयंभूलिङ्गकं वसेत् ।
पश्चिमास्ये च तप्तानां, सुवर्णानां च सादृशम् २५६
मृदुकं ज्ञानध्यानानां, प्रकाशकत्व संयुतम् ।

स्वयम्भूलिङ्गस्योर्ध्वं च, पद्मकेसरसदृशम् ॥२५७॥
शङ्खवेष्टनयुक्तं च, सार्धत्रिवलयाकृति ।
सर्पवत्कुलकौण्डल्यं, स्वास्यात्स्वयंभूलिङ्गतः ।२५८।
निद्रितं मुखमावृत्य, तत्प्रबोधनिमित्तकम् ।
गोप्यं च गुरुगम्यं तद्भवतीति विज्ञायताम् ॥२५९॥
द्वितीयचक्रस्याभिख्यं, स्वाधिष्ठानाख्य पद्मकम् ।
तत्स्थिति लिङ्गमूले स्याद्, बभमयरलादिकम् ।२६०
षड्वर्णदलसंयुक्तं, रक्तवर्णेनसंयुतम् ।
तत्र बालाख्य सिद्धानां, स्थितिर्देवी च राकिनी २६१
तृतीयं मणिपूराख्यं, चक्रं स्यान्नाभिमूलके ।
डढणतथदाद्यानि[१], दशवर्णानि तानि वै ॥२६२॥
सुवर्णमय वर्णानि, राजन्ते दशपत्रतः ।
यत्र रुद्राक्ष सिद्धाख्यलिङ्गं सर्वप्रकारतः ॥२६३॥
मंगलं प्रविधीयेत, यत्र परमधार्मिकी ।
लाकिनी देवता चैव, सर्वरूपैर्विराजते ॥२६४॥
चतुर्थं हृदिस्थं ज्ञेयं, चक्रमनाहृतं तथा ।

१ टठडढण तथदधन ।

कखगघङचाद्यैश्च, द्वादशवर्णकैर्युतम् ॥२६५॥
अतिरक्तकवर्णैश्च, द्वादशपत्रकैर्युतम् ।
हृदि चाति प्रसन्नं च, स्थानं तस्य प्रकीर्त्तितम् २६६
तत्रानाहतपद्मे च, तेजस्वि रक्तवर्णकम् ।
अधिष्ठानं च बाणाख्यं, यस्य ध्याने कृते सति २६७
अत्र परत्र लोके च शुभफलं तु प्राप्यते ।
द्वितीय शिवनामाख्यं सिद्धलिंगं विराजते ॥२६८॥
काकिनी सदाधिष्ठात्री, देवी सा तत्र तिष्ठति ।
पञ्चमपद्मस्थानं तु, कण्ठं विशुद्धचक्रकम् ॥२६९॥
तद्वर्णं शुभसौवर्णं, धूम्रवर्णं च वामतः ।
अआ इई उवाद्यैश्च, षोड़शवर्णशोभितम् २७०
तस्य षोडशपत्राणि, तत्पद्मे छगलाण्डकम् ।
सिद्धलिंगं च शाकिनी, देवी तत्र विराजते ।२७१।
भ्रूद्वयमध्यभागे च, आज्ञा पद्माख्य चक्रकम् ।
शुभ्रवर्णं च षष्ठं स्याद्धक्षवर्णेन संयुतम् ॥२७२॥
शुक्लनामा महाकालः, तत्पद्मसिद्धिलिंगकः ।

हाकिनी च महाशक्तिः, चक्राधिष्टातृ देवता २७३
द्विदलपङ्कजोर्ध्वं च, ब्रह्मरन्ध्रके इंगला ।
पिंगलासुषुम्ने चैव, संगमस्थानकं भजेत् ॥२७४॥
तत्तीर्थराजरूपत्वं, प्रयागं परिकीर्त्तितम् ।
तत्रैव स्नानकर्त्तव्ये, साधको मुक्ततां भजेत् ॥२७५
ब्रह्मरन्ध्रोपरिष्टाच्च, सहस्त्रदलपङ्कजम् ।
तत्स्थानाभिख्यता ज्ञेया कैलाशशुद्धरूपिका ॥२७६
तत्र स्थाने महादेवः, शिवः सदा विराजते ।
नकुलाभिधता वाच, नकुलाख्यं च कीर्त्तितम् २७७
नित्य विलासिता युक्तः, क्षयवृद्धि पराङ्मुखः ।
यः साधकः स्वकीयानां, चित्तवृत्तेश्च दार्ढ्यतः २७८
लीनं करोति तस्यैव, अखण्डज्ञानरूपकम् ।
निरञ्जनजगन्नाथस्वरूपं लभते सदा ॥२७९॥
सहस्त्रदलपद्माच्च, निर्गतामृतधारिकाम् ।
यः पीबति सदा योगी जयति मृत्युतां स च ।२८०।
सहस्त्रदलपद्मे च, कुलरूपा तु कुण्डली ।
महाशक्तौ लयं याति, तदा सृष्टुश्च सर्वथा ।२८१।
परमेशे लयं विद्याद् मूलाधारे तथैव च ।

चतुर्दलं च पद्मं तु, तदवस्थासु तत्र च ॥२८२॥
कुण्डली स्वदृढं स्थानं, निश्चयेन परित्यजेत् ।
क्रमेण कुण्डली चैव, षट् चक्रभेदद्वारतः ॥२८३॥
सहस्रदलपद्मं च, गत्वालयं च प्राप्नुयात् ।
तत्र शिवप्रभोर्योग[1]:, मुक्ति क्रिया स्वरूपकः ।२८४।
तथा तस्य दशायां च, स योग्य खंडज्ञानवान् ।
निरञ्जनजगन्नाथरूपं प्राप्य शिवं भजेत् ॥२८५॥
प्राणायामः समायोगः, प्राणायाम इतीरितः ।
प्राणायाम इति प्रोक्तः, रेचक[2]पूरकुम्भकैः ॥२८६॥
योगि यागल्वयः ॥

पूर्वोक्त संख्यया चैव प्राणायामे कृते सति ।
यदि तु कष्टप्राप्तिः स्यादष्टषोडश वारतः ॥२८७॥
जापं कृत्वा च कर्त्तव्यः, प्राणायामः सुनिश्चयात् ।
यत्र जापक्रिया नास्ति, तत्रेक द्वित्रिवारतः ॥२८८॥
गणनायां कृतायां च, प्राणायामो वितन्यताम् ।
अन्यथा कार्यकर्त्तव्ये, फलप्राप्तिर्न जायते ॥ २८९॥

---

१ शाक्तिः । २ पूरक ।

कुत इति च पृष्टव्ये, उत्तरंतु विधीयते ॥
अतोऽपि प्रथमस्तालः, तालोपरि च श्वासता ॥२६०
श्वासोपरि प्रश्वासः स्यादिति क्रमो निदर्शितः।
किन्तु कदापि प्राबल्याद्रेचकं पूरकं च न ॥२६१॥
रेचककालवैशेषे, सतर्कसावधानता।
यावच्छनैः शनैश्चैव, श्वासस्तु परित्यज्यते ॥२६२॥
हस्तारूढांश्च सक्तूंश्च, निःश्वास वायुयोगतः।
उड्डापनाय शक्नोति, नैव तथा वितन्यताम् ॥२६३॥
प्राणायामस्य काले च, उपविश्य यथा सुखम्।
मेरुदण्डं गलं चैव, मस्तकं वक्रता हितं ॥२६४॥
भ्रकुट्यां दृष्टितां धृत्वा, ततः कुम्भकतां भजेत्।
किन्तु सिद्धमहात्मा च तत्सहायं परित्यजेत् ॥२६५
शीतली प्राणयामस्य, सहायताधिकां भजेत्।
शीतल्याश्च सहायेन, सर्वकार्यकरोभवेत् ॥२६६॥
प्रोक्तं च :—
सर्वदा साधयेद्योगी, शीतलीकुम्भकं शुभम्।
अजीर्णकफपीताश्च, जायन्ते नैव तस्य वै ॥२६७॥
जिह्वाया वायुमाकृष्य, उदरे पूरयेच्छनैः।

क्षणं च कुम्भकं कृत्वा, नासाभ्यां रेचकं पुनः २९८
प्राणायामक्रियातश्च, मोक्षप्राप्तिः प्रदर्शिता ।
वन्ध्यापुत्रसमा सा च, ज्ञातव्या सर्वसज्जनैः २९९
प्राणायामेन मोक्षश्चेदन्ययोगाङ्गता वृथा ।
प्रत्याहारादिकं व्यर्थं धारणा सफला कुतः ॥३००॥
ध्यानसमाधिता नैव, कर्त्तव्या च कदाचन ।
केवलप्राणयामेन, मोक्षप्राप्तिर्वितन्यताम् ॥३०१॥
तादृशप्राणयामस्तु, विग्रहे कष्टदो मतः ।
केवल देहदान्त्या च न कोऽपि गुणआत्मनि ।३०२
सम्यग्ज्ञानेन सार्धं च, सम्यक्क्रिया न यत्र वै ।
तत्र कथं शिवाप्तिः स्यादिति स्वान्ते विचार्यताम् ३०३
सर्वथा निष्फलो नैव, प्राणायामो निगद्यते ।
यथा पातञ्जलैः प्रोक्तः, तथा न जैनदर्शने ॥३०४॥
केवलवायुनिकारे, प्रवेशो मोक्षता न हि ।
किन्तु सत्यस्वरूपं च, प्राणायामस्य ज्ञायताम् ॥३०५
योगाङ्गे च क्रमेणैव, आरोहे सिद्धता भवेत् ।
सम्यग्दर्शनपूर्वेण, प्रथमं च महाव्रतम् ॥३०६॥
अतिक्रमादि दोषेण, रहितं पालनं मतम् ।

अष्टप्रवचनेनैव, विशुद्धं परिपालयताम् ॥३०७॥
ततो नियमसद्भावः, तस्यैव परिशुद्धये ।
आसनं दृढध्यानार्थं, प्राणायामोपयोगि च ॥३०८॥
विशुद्ध प्राणयामस्य, स्वरूपमपि प्रोच्यते ।
यशोविजयप्राज्ञानां, ग्रन्थानामनुसारतः ॥३०९॥
हठयोगस्तु नाम्नैव, हठभावप्रकाशकः ।
सिद्धिर्हठेन कस्यापि, जायते न कदाचन ॥३१०॥
गुदातो दुग्धपानेऽपि, आत्मनि वद किं भवेत् ।
तत्कार्यं बालिशानां च, न तु विशुद्धयोगिनाम् ३११
अज्ञानिजनतुष्ट्यर्थं, लोकप्रतारणाय च ।
संसारोदधिपाताय, स्वपरदुःखहेतवे ॥३१२॥
आत्मीय ज्ञानशून्येन, अज्ञानिना वितन्यते ।
तत्क्रियास्वादरो नैव, कर्त्तव्यो ज्ञानिना कदा ॥३१३
हठेन कार्यकर्त्तव्ये, मिथ्यात्वं परिजायते ।
मिथ्यात्वं सर्वथा त्याज्यं श्रद्धात्वधनकांक्षिणा ३१४
प्रतिपादितमन्यत्र, तं योगं नैव धारयेत् ।
भवभ्रमणहेतुः स्यान्मिथ्यात्वपरिपोषकम् ॥३१५॥
वस्तुगत्या विचारे तु, सत्यं योगस्वरूपकम् ॥

मीलति योगदृष्ट्या च, परिशोधितरूपकम् ॥३१६॥
अतस्तदनुसारेण, प्राणायामस्वरूपकम् ।
चतुर्थदृष्टिरूपेण, ज्ञायते योगदीपके ॥३१७॥
चातुर्थी योगदृष्टिस्तु दीप्ता च प्राणयामिका ।
उत्थानभावना नैव, अत्रैव परिभाव्यताम् ॥३१८॥
प्राणायामे च द्रव्येण, कर्त्तव्ये वायुयोगतः ।
क्षणिका देहशुद्धिः स्यादतो लाभो न चात्मनि ३१९
कथंचिद् गुणदोषाणां, विचारे च कृते सति ।
अपेक्षया च मन्तव्यः प्राणायामस्तु द्रव्यतः ।३२०
द्रव्येण देहशुद्धिः स्यादतः स्वास्थ्यं भवेत्सदा ।
अनालस्यं च देहस्य, स्वास्थ्येनैव प्रजायते ॥३२१
देहस्वास्थ्ये च सञ्जाते, मनः स्वास्थ्यं प्रजायते ।
ततो विचारप्राबल्यं, शुद्धकारणयोगतः ॥३२२॥
द्रव्यं च कारणं ज्ञेयं, भावः कार्यं निगद्यते ।
कृत्स्नकारणसामग्र्यां, कार्यं पूर्णं प्रजायते ॥३२३॥
प्राणायामस्तु भावेन, कार्यो दीपप्रभासमः ।
ज्ञानरूपः सदा भाव्यः, जैनशासनवेदिना ॥३२४॥
अनाद्यऽसत्यभावानां, मिथ्यात्वाविरत्यादीनाम् ।

प्रमादानां कषायाणां, यद्युक्तयोगवस्तूनाम् ॥३२५॥
हिंसाऽसत्यत्व चौर्याणामब्रह्ममतादीनाम् ।
अनादिकालशत्रूणां त्यागे तु भावरेचकः ॥३२६॥
पूर्वोक्तदोषरूपाणां, निष्कासे गुणपूरणम् ।
श्रद्धात्वविरत्यादीनां, दृढरूपेण पालनम् ॥३२७॥
कषायपरित्यागेन, प्रमादपरित्यागतः ।
समितिगुप्तिसेवातः, महाव्रतस्य पुष्टता ॥३२८॥
उपयोगेन धर्मः स्यात्क्रियातः कर्म एव च ।
परिणामेन बन्धस्तु, विज्ञेयो जैनशासने ॥३२९॥
अहिंसा सत्यताऽस्तेयब्रह्मव्रतस्य पालनात् ।
मूर्च्छायाः परित्यागेन, दोषाणां त्यागता मता ३३०
दोषाणां सर्वथा त्यागे, रेचके शुद्धता भवेत् ।
गुणानां पूरणेनैव, पूरकः परिभाषितः ॥३३१॥
यदंशे गुणसम्प्राप्तिः पूरकता तु तादृशी ।
यावद्दोषस्य नाशः स्यात्तावद्रेचकता मता ॥३३२॥
वैराग्याभ्यासद्वारेण, गुणानां स्थिरता भवेत् ।
यदंशे गुणस्थैर्यं स्यात्कुम्भकस्तादृशो मतः ॥३३३॥
धर्मार्थं प्राणता त्याज्या, किन्तु धर्मो न त्यज्यताम्

प्राणसङ्कटसम्प्राप्तौ, धर्मेषु दृढतां भजेत् ॥३३४॥
चतुर्गतिकसंसारे, प्राणः सर्वत्र योनिषु
सुलभेन प्रप्राप्यन्ते, धर्मस्तु तत्र दुर्लभः ॥३३५॥
धर्मार्थप्राणसंत्यागे येषां मानसभावना ।
प्राणायामस्य योग्यास्ते, इतरे नामधारकाः ॥३३६॥
मधुरोदकसादृश्यं, तत्वश्रवणभावनम् ।
जायते यत्र काले च तदा तद् दृष्टिता भवेत् ॥३३७
क्षारोदकस्य संकाशं, संसारं परिमन्यते ।
गुरुभक्तिरद्रोहेण, बीजरोह समामता ॥३३८॥
सम्यक् श्रद्धां विना नैव, सूक्ष्मबोधोऽत्र सम्भवेत् ।
वेद्यसंवेद्यके चैव, पदे तु तादृशो मतः ॥३३९॥
अवेद्ये तु पदे नैव, बोधः स्वप्नेऽपि जायते ।
अतो हि वेद्यसंवेद्यपदार्थे यत्नतां भज ॥३४०॥
वेद्यबन्धुस्तु विज्ञेयः, मोक्षनिमित्तकः सदा ।
तज्ज्ञानं चैव संवित्तिः, नयनिक्षेपतः शुभा ॥३४१॥
वेद्यसंवेद्यप्रामाण्यं, ग्रन्थिभेदनतो मतम् ॥
पापप्रवृत्तिछेदस्तु तत एव प्रजायते ॥३४२॥
तप्तलौहस्वरूपस्य, पदधृति समा मता ।

भ्रान्तनिर्वृत्तिरत्रैव, तद्विपरीतके पदे ॥३४३॥
अवेद्यवेद्यनामाख्यो, भवाभिनन्दिजीवकैः।
वज्रेणाभेद्यको ज्ञेयः, जैनशासनबाह्यकैः ॥३४४॥
लोभकार्पण्यमात्सर्यं, मायिकता जुषः सदा।
दयापात्रत्व संयुक्तः, भवेन संभृतः सदा ॥३४५॥
एतादृशमनुष्याणां, निष्फलारम्भता भवेत्।
तादृशां च गुणानां च, अवेद्यपदता दृढा ॥३४६॥
सत्सङ्गागमतत्त्वेभ्यः तेऽपि बहिर्मुखाः सदा।
तैश्च सत्सङ्गतिर्नैव, प्राप्यते पापयोगतः ॥३४७॥
कुतर्कानां सहायेन, हस्त्यागमनकालिके।
एकान्ते चोपविश्यैव, बठरैः परिभाव्यते ॥३४८॥
हनिष्यति च प्राप्तं चेत्पूर्वं हस्तिपकं तदा।
अप्राप्तं यदि हन्ता चेत्तदा तु सर्वजन्तुनः ॥३४६॥
कथं दूरेऽपगच्छामि भयमत्र न विद्यते।
प्राप्ताप्राप्तविचारे च, कर्त्तव्या समये तदा ॥३५०॥
हस्ती चागत्य तत्रैव, शुण्डादण्डेन तं जनम्।
उत्पाट्य परिक्षिप्त्वा च, पादाभ्यां परिपीडितम् ॥३५१
तदा विचारदृष्टिना, केनचिच्च जनेन वै।

आगत्य श्रावितं सम्यक् बोधाधायक सद्वचः ॥३५२॥
प्राप्ताप्राप्तविचारे च, कर्त्तव्ये तादृशी दशा ।
सम्प्राप्ता चाधुना भ्रातः, पीब धर्मरसायनम् ॥३५३॥
यथा च सन्निपातानां जीवानां पायसं विषम् ।
तथा बठरछात्राणां तत्काले तादृशं बचः ॥३५४॥
तथा चोक्तं पञ्चतन्त्रेः—
पयः पानं भुजङ्गानां, केवलं विषवर्धनम् ।
उपदेशो हि मूर्खाणां, प्रकोपाय न शान्तये ॥३५५॥
यथा च तत्त्वसम्प्राप्तिः, कृता मया च यादृशी ।
केनचिच्च जनेनैव, न प्राप्ता तादृशी कदा ॥३५६॥
संशयो नैव तत्रापि, एवं रीत्या च भावने ।
कुर्कटं दर्पणे दृष्ट्वा, यथा तेनैव युध्यते ॥३५७॥
तद्वद्भ्रान्तिश्च तत्रापि, विचारविमुखे जने ।
अतः सत्सङ्गतिं कृत्वा, आगनामनुभवेन च ॥३५८॥
ततोऽनु वस्तुतत्त्वं च, गृह्यतां सर्वसज्जनैः ।
अतः शास्त्रस्वरूपं च सर्वदा चिन्तनं शुभम् ॥३५९॥
अष्टके प्रोक्तंः—
शासनात्त्राणशक्तेश्च, बुधैः शास्त्रं निरूपितम् ।

वचनं वीतरागस्य, तत्तु नान्यस्य कस्यचित् ॥३६०॥
यथालस्येन सद्युक्तौ, प्रमादि गुरुशिष्यकौ ।
तयोर्दृष्टान्तकं श्रुत्वा, प्रमादं परिवर्ज्यताम् ॥३६१॥
कस्मिंश्चिद् ग्रामबाह्ये च, पर्णकुट्यां च तिष्ठतः ।
गुरुशिष्यौ महामूर्खौ, आलस्यपरिपूरितौ ॥३६२॥
एकदा शीतकाले च, शीतं पतति दुःसहम् ।
वस्त्राणांपरितोऽभावे,ध्यायतो गुरुशिष्यकौ ॥३६३॥
प्रातः काले च भक्तानां, गृहे गत्वा च कम्बले ।
मार्गणे परिकर्त्तव्ये, शीतावरोधता भवेद् ॥३६४॥
प्रातः काले च सञ्जाते, भिक्षार्थं निकटे गतौ ।
यांकांभिक्षांचसम्प्राप्य,शीघ्रं कुट्यांनिवेशितौ ३६५
रात्रेः पश्चाच्च तौ द्वौ च, विचारं कुरुतस्तदा ।
प्रातः काले च सञ्जाते, याचिष्यावश्च कंबलम् ३६६
एवं रीत्या च कर्त्तव्ये, शीते च प्रबले तथा ।
आलस्यस्य प्रभावेन, महच्छीतेन पीडितौ ॥३६७॥
परन्तु कम्बलार्थं च, ताभ्यां कृतं न याचनम् ।
प्रमादित्व मनुष्याणां, कियद्दुःखदता भवेत् ३६८
तथैव धर्मकार्येषु, प्रमादं परित्यज्यताम् ।

अप्रमत्तत्व भावेन, योगाङ्गं प्रविधीयताम् ॥३६९।
प्राणायामस्तु भावेन, द्रव्येण परिपालितः ।
तेनैव पुरुषेणैव, योगाङ्गाग्रे च गम्यते ॥३७०॥
आगमेनानुमानेन, सत्यज्ञानं च प्राप्यते ।
सर्वज्ञस्योपदेशानां, भिन्नता न हि सम्भवेत् ३७१
सर्वज्ञदासरूपाणां, देवानां भक्तिभावना ।
चित्र विचित्र रूपेण, तन्यते राग द्वेषतः ॥३७२॥
देवाः संसारिणो ज्ञेयाः, रागद्वेषस्वरूपकाः ।
एकत्र रागसद्भावः, अन्यत्र द्वेष भावना ॥३७३॥
सर्वज्ञ वीतरागस्य, भक्तिर्मुक्त्युपतिष्ठते ।
सैव विशुद्धभावेन, कर्त्तव्या ज्ञानिना सदा ।३७४।
रागिद्वेषित्वयुक्तानां, सम्यग्दृष्टित्वसेविनाम् ।
धर्मसाहाय्यदानार्थं, देवानां भक्तिभावना ॥३७५॥
इन्द्रियार्थज बुद्धिः स्याज्ज्ञानमागमहेतुकम् ।
शुभकृति गुणेनैव, असंमोहकता भवेत् ।३७६।
फलभेदस्य सङ्केत, तत एव प्रजायते ।
अतिप्रेमक्रियायां च, आदरः सर्वतोऽधिकः ।३७७।
विघ्नानि परिनश्येयुः, श्रियाः समागमा भवेत् ।

बुद्धिपूर्वक्रियातश्च, भवबृद्धिफलं भवेत् ।३७८।
ज्ञानपूर्वक्रियातश्च, शिवाङ्गं परिजायते ।
असंमोहक्रिया द्वारा, शीघ्रं मुक्तिः प्रजन्यते ॥३७९
पुद्गलरचनाभावः, मृगतृष्णा समो मतः ।
तत्र न मानसं दद्यात्सुखाभासेषु कुत्रचित् ॥३८०॥
एक एव शिवे मार्गे, ज्ञानी दद्याच्च मानसम् ।
अन्यत्र नैव दातव्यं, सर्वदा सुखमिच्छता ॥३८१॥
जीवस्य परिणामानां, भेदेन भिन्नदेशना ।
न तत्र पक्षपातेन, देशना भिन्नता मता ॥३८२॥
परमार्थविचारे च, नयप्रमाणभेदतः ।
मुनीनां देशना भिन्ना, पक्षपातविवर्जिता ॥३८३॥
शब्दभेदं च संश्रुत्य कालुष्यं न वितन्यताम् ।
तत्रैव परमार्थत्वं, भाव्यं सर्वसुखावहम् ॥३८४॥
यद्येव एकवस्तुत्वं, तदा कलहता कथम् ।
एक गङ्गात्वमाश्रित्य, व्यवहारे तु भिन्नता ।३८५।
वक्ति सुरनदीं कश्चिद्, गङ्गा वदन्ति केचन ।
वस्तुगत्या विचारे च, न कलहावकाशता ॥३८६॥
तथैव नयभेदेन, भिन्नत्वं यदि भासते ।

तथापि योजना कार्या, विचारशीलमानवैः ॥३८७।
केवलज्ञानदृष्टीनां, उपयोगस्य गोचरे ।
वदन्ति युगपत्केचित्केचिच्च एक एव हि ॥३८८॥
केचिच्च क्रमभावेन, एवं रीत्या च जल्पने ।
अन्योऽन्यं कलहायन्ते, अन्येषां भिन्नभावता ३८९
तदोपाध्यायपूज्येन, यशोविजयज्ञानिना ।
नयभेदं समाश्रित्य, सावधानं शुभं कृतम् ॥३९०॥
तेषां च पूज्यपादानामाशयानामवेदिभिः ।
भेदभावं समाश्रित्य, क्लेशत्वं परिवर्धितम् ॥३९१॥
यथा नयप्रमाणेन, कलहो नैव सम्मतः ।
तथाऽत्र देशनायां च, समाधिर्नयभावतः ॥३९२॥
क्षमादिदशधर्माणां, त्रिकरणत्रियोगतः ।
पालने प्रकटीयेत, धर्मसंन्यासता शुभा ॥३९३॥
ततः कषायक्लेशानां, मुनीनां सर्वनाशता ।
समभावेन भावेषु, सर्वत्र भावना भवेत् ॥३९४॥
चत्वारो दृष्टयो येन, अभिनिवेशत्यागिना ।
लब्धा च शुभयोगेन, लभ्यते पञ्चमी सदा ॥३९५॥
ईदृश प्राणयामस्तु, सेवितो येन योगिना ।

विधूतकर्मक्लेशं च, कृत्वा शिवपदं भजेद् ॥३९६॥
धन्यास्ते पुरुषा ज्ञेया, येषां योगे सदा मनः ।
सेवित योगमार्गो यैः, तैः शिवं प्राप्यते सुखम् ॥३९७
दृष्टिदर्शितरूपेण, प्राणायामो निषेव्यताम् ।
अन्यमार्गीय सेवातः, भवभ्रमणता भवेत् ॥३९८॥
ईदृशः प्राणयामस्तु, हरिभद्रादि ग्रन्थतः ।
दर्शितौ मयका तत्र, स्वीय कल्याणहेतवे ॥३९९
तत्र यदि विरुद्धं चेत्, मन्दबुद्धिप्रयोगतः ।
मिथ्या दुष्कृतता भूयात्, मदीयेति च प्रार्थना ।४००।

॥ इति श्री शास्त्रविशारद जैनाचार्य जगत्पूज्या नेक संस्था संस्थापक ग्रन्थमालादि द्वारा साहित्य प्रचारकानेक विदेशिकजनप्रतिबोधक भ्रम-निवारक पूज्यपादगुरुदेव विश्ववन्द्य सूरि-चक्र चक्रवर्त्ति शासनप्रभावक श्रीविजय धर्मसूरीश्वरशिष्येण न्यायतीर्थन्याय-विशारदोपाध्याय मङ्गलविजयेन

विरचिते संस्कृत पद्यमययोग
प्रदीपे प्राणायाम वर्णननामा
षोडशतमः प्रकाशः समाप्तः ॥



## ॥ प्रत्याहारस्वरूपवर्णनम् ॥

यमनियमताप्राप्तिः, पुण्योदयेन जायते ।
प्राणायामासनानां च, प्राप्तिस्तु दुर्लभा भवेत् ॥१॥
सर्वयोगाङ्गता ज्ञेया, सम्यग्दर्शनपूर्विका ।
अग्रे एकाङ्कता शून्यं, सहस्रबिन्दुता यथा ॥२॥
दर्शनपूर्वकं येन, योगाङ्गं स्वायती कृतम् ।
ते एव संस्तुतौ श्लाघ्याः, महात्मनाश्च ते मताः ॥३॥
प्रोक्त योगक्रमेणैव, स्वात्मशुद्धिस्तु जायते ।
विना क्रमिकता ज्ञानं, आत्मवञ्चकता भवेत् ॥४॥
सप्ततलीय हर्म्येषु, श्रेणिक्रमेण रोहणम् ।
विना क्रमं तु गन्तारः, पतन्ति च ततोऽप्यधः ॥५॥
महाव्रतयमाख्यं च, गृहीतं येन नो कदा ।
ते यदि ध्यानकर्त्ता चेत् कस्याग्रे ब्रूमहे तदा ॥६॥
क्वचित्क्रमस्य शीघ्रत्वं, यथा च भरतादिषु ।
मरुदेव्यादि मातृषु, तथा चान्यत्र भाव्यताम् ॥७॥
सर्वथा व्रतशून्येषु, जनेषु नैव ध्यानता ।
किन्तु दुर्ध्यानता ज्ञेया, संसारपरिपोषिका ॥८॥

धर्मध्यानं न मन्तव्यमपि तु चार्द्ररौद्रकम् ।
अधोगमनहेतुस्तत्किन्तु दुष्टविचारजम् ॥९॥
अतस्तादृशध्यानं च, त्यक्त्वा वैधर्मध्यानके ।
प्रत्याहारं क्रमेणैव, रोहणे दुःखनाशनम् ॥१०॥
सम्मेताचलनिर्वाणं, प्राप्तं यैः परमात्मभिः ।
तान्ध्यात्वा हृदये सम्यक् गुरुदेवप्रसादतः ॥११॥
प्रत्याहारस्य व्याख्यानं, क्रियते सुखहेतवे ।
हरिभद्रादि पूज्यानां, ग्रन्थानामवलम्बतः ॥१२॥
इन्द्रियाणां निवृत्तिस्तु, विषयेभ्यश्च सर्वथा ।
प्रत्याहारः स विज्ञेयः, रहस्यं परिकीर्त्यते ॥१३॥
व्युत्थानध्यानतारूपदशा साधारणं तथा ।
वस्तुस्वभावचिन्तातः, स्वकीय प्रतिपत्तितः ॥१४॥
प्रयुक्त रागद्वेषाणां, फलस्यानुपधानता ।
तदेवेन्द्रियवस्तूनां, परमोजय उच्यते ॥१५॥
चक्षुरुद्घाटनेनैव, वस्तूनामवलोकने ।
कृतेऽपि रागद्वेषौ न, तदेन्द्रियजयो भवेत् ॥१६॥
स्वादकाले च वस्तूनां, जीह्वया चर्विते सति ।
अस्वादे रागद्वेषौ न, तदेन्द्रियजयो भवेत् ॥१७॥

यथा च राजमार्गेषु, गर्ता च पतिता यदा ।
पूरणीयास्तदा सा च, येन केन प्रकारतः ॥१८॥
सुवर्णै राजतैश्चैव, मृत्तिकया च लौहकैः ।
येन केन प्रकारेण, पूरणीया निगद्यते ॥१६॥
तथा क्षुधात्वगर्तायाः, पूरणं नैकरूपतः ।
परन्तु रागद्वेषौ न, कर्त्तव्यौ सर्वथौचितौ ॥२०॥
रूपे रसे च गन्धे च, शब्दे च स्पर्श वस्तुनि ।
मनोहारिणि चान्यत्र, रागद्वेषविहीनता ॥२१॥
तत्रैव रागद्वेषाणामभावे विजयो भवेत् ।
प्रत्याहारस्तु विज्ञेयः रागादि वर्जिते हृदि ॥२२॥
तथा चोक्तं स्तुतौः—
संयतानि तवाक्षाणि, न चोच्छृङ्खलितानि च ।
इति सम्यक् प्रतिपद्य, त्वयेन्द्रियजयः कृतः ॥२३॥
प्राणायामाहठाद्याश्च, योगा न[1] चित्तरोधने ।
निश्चितोपायता शून्या, तदेन्द्रियजयः कथम् ॥२४
अध्यात्मभाववृद्धित्वाद्, समता परिणामता ।

---

१ न क्षमा ।

तत्प्रवाहित्व ज्ञानाख्यः, राजयोगः शुभो मतः ॥२५

चित्तमिन्द्रियजेतव्ये, शुद्धहेतुश्च मन्यते ।
इन्द्रियविजये चातः, उपायो मुख्यतो मतः ॥२६॥

प्रत्याहारोपयोगित्वाच्छुद्धयोगविचारता ।
इन्द्रियजयता हेतु वक्तव्यं प्रतिपाद्यते ॥२७॥

भोगीवक्तव्यम्ः—

विषयपरिपौषित्वं, संसारसुखसाधनम् ।
मदीय पुष्पसारत्वं, गृहाण दुःखनाशनम् ॥२८॥

भोगिनस्तादृशं वाक्यं, विषयपुष्टिदं सदा ।
श्रुत्वा परमयोगीन्द्रः, जल्पति निर्मलं वचः ॥२९॥

इच्छाविहीन योगीन्द्रे, कीदृशी तव प्रार्थना ।
संयोगमूलजीवेन, प्राप्ता दुःखपरम्परा ॥३०॥

अभिलाषविहीना च, सर्वथा नासिका मम ।
विजिते भाववेदे च, द्रव्यार्थं नैव याचना ॥३१॥

अतः सुगन्धता युक्ता, स्वाधीना गह्वरी मम ।
[1]प्रार्थना गन्धसम्बन्धे, गृह्यते नहि कर्हिचित् ॥३२॥

---

१ त्वदीया गन्धसम्बान्ध प्रार्थना

भोगी—

विषादहारि स्वादुत्वं, भोज्यं यदि च कांक्षसि ।
तदा द्राक्षा रसादित्वं प्रयच्छामि यथा सुखं ।३३।
स्वीकृत्यानुगृहाण त्वं, सर्वयोगिशिरोमणे ।
मदीयां तादृशीं याञ्चां, माऽमोघां कुरु सर्वथा ।३४

योगीन्द्र :—

जिह्वेन्द्रियं रसास्वादपराङ्मुखं च सर्वथा ।
गिलति सर्पवद्ग्रासं, जानाति नहि स्वादुताम् ३५
सदा स्वादनिरीहे च स्वादेच्छा नैव जायते ।
स्वादेच्छायाः प्रभावेन, मत्स्यानां मृत्युता भवेत् ३६
अतो भ्रातर्न वक्तव्यं, तादृशो विषये कदा ।
प्राथना नैव कर्त्तव्या, भोगेच्छा परिवर्धनी ॥ ३७॥
यदि स्वयं स्वदेशेषु, विदेशी सर्ववस्तुकम् ।
द्रष्टुमिच्छा त्वदीया चेत्, सङ्कोचं तन्यते कथम् ३८॥
चित्रविचित्रवस्तूनां, योगीन्द्रसुखहेतूनाम् ।
सर्वसंसारिभावानां, दर्शनं कारयाम्यहम् ॥३९॥

योगीन्द्र :—

सर्वथा रागद्वेषेभ्यः, विहीने मम चक्षुषि ।

निर्लिप्ते सर्वभावे च, लिप्तेच्छा जायते कथम् ॥४०
अभिलाषो न कुत्रचित्सर्ववस्तुषु सर्वदा ।
कथं च दृश्यभावेषु, दृष्टेच्छा सम्मुखा भवेत् ॥४१

भोगी—

ग्रीष्मतापेन संतप्ते, भूतले गम्यते कथम् ।
प्रस्वेद्जलसंलिप्ते, गात्रे च सुखता कुतः ॥४२॥
अतस्तद्पनोदार्थं, छायावायू करोम्यहम् ।
तच्छीतत्वप्रभावेन, सर्वत्र सुखता भवेत् ॥४३॥
भूतले शीतसंयोगाद् गमने सुखकारिता ।
गात्रे च वायुयोगेन, प्रस्वेदो नैव जायते ॥४४॥
अतो मदीययाज्ञां च, स्वीकुरु योगीराट् सदा ।
छायावायू प्रकुर्वाणो, दुःखलेशो न किंचन ॥४५॥

योगी—

त्वगिन्द्रियाभिलाषे च, सर्वथा रहिते मम ॥
विजिते भाववेदे च, द्रव्यस्य नैव शक्तिता ॥४६॥
स्वात्मसुखनिमित्ताय, त्यक्ता च देहसुखता ।
क्षणिकं देहजं ज्ञेयं, सुखं संसारिकं किल ॥४७॥
योगलीने च योगीन्द्रे, सुखेच्छा तादृशी नहि ।

तादृशसुखसद्भावाद्, मृत्युं प्राप्नोति हस्तिकः ॥४८

देहसुखनिमित्ते च, ब्रह्मदत्तादयो यथा ।

नारकयातनागाढां प्राप्ता कर्मप्रभावतः ॥४६॥

अतः क्षणिकदेहार्थं, शुद्धं सुखं न प्रार्थ्यते ।

योगिवेद्यसुखार्थं च, सदा यत्नो विधीयताम् ॥५०

भोगी—

यदि विनोदताहेतु, सङ्गीतं श्रोतुमिष्यते ।

दुर्लभं तद्धि देवानां, तादृशं श्राव्यते मया ॥५१॥

यथा भोगविलासानां, प्राधान्यं कृष्णमन्दिरे ।

दुर्लभा रासलीला च, जायते तत्र सर्वदा ॥५२॥

तां श्रुत्वा योगिनः स्वान्तं, मुह्यति रासनाटके ।

कामरागप्रधानं च, मीलति साधनं सदा ॥५३॥

योगी—

यत्रैव रासलीला स्यान्न, तद्धि देवमन्दिरम् ।

किन्तु केलिगृहं ज्ञेयं, यथा च वाममार्गिणाम् ॥५४

कामरागस्य पुष्टित्वं, यत्रैव परिजायते ।

तद्धि भोगप्रधानं स्यादीश्वरता मता वृथा ॥५५॥

कामभोगिषु चेशत्वं, मन्यते यदि धूर्तराट् ।

तदा तु वाममार्गिषु, कथं न प्रणिगद्यते ॥५६॥
श्रोत्रेषु निस्पृहा ज्ञेया, वेदोदयविनाशिनः ।
शुभाशुभगुणाढ्यं च, शब्दं शृणोमि नो कदा ॥५७
शब्दश्रुतिप्रभावेन, हरिणो मृत्युतां गतः ।
कथं कालमुखे गन्तुमिच्छामि वद बालिश ! ॥५८

भोगी—

निष्कामता च योग्या चेद् बीजारोहस्तु नो तदा ।
सुखकारणतात्यागे, यातना च पदे पदे ॥५९॥

योगी—

यदि वास्तविकं सौख्यमात्मनि चैव वांछसि ।
विकारजं सुखाभासं, तदा सर्वं च त्यज्यताम् ॥६०
ये चान्यशान्तिदातारः, तेषां शान्तिस्तु सर्वदा ।
यादृशमुप्यते बीजं तादृशं फलमाप्यते ॥६१॥
एकोऽहं नास्ति मे कश्चिन्न चाहमपि कस्यचित् ।
एवमदीनभावेन, आत्मनि परिभाव्यताम् ॥६२॥
एको मे शाश्वतश्चात्मा, ज्ञानदर्शनसंयुतः ।
शेषा मे बाह्यभावाः स्युः सर्वान् तांश्च त्यजाम्यहम्
पापाष्टादश स्थानानि, संसारभ्रान्तिहेतूनि ।

तत्प्रभावेन सम्प्राप्ताः, दुःखानां च परम्परा ॥६४॥
अतः समग्ररूपेण, त्याज्यन्ते तानि सर्वथा ।
यतो न भवभ्रान्तिः स्यात्ततश्च शाश्वतं सुखम् ।६५।
यावद्विकारजं सौख्यं, प्रत्याहारो न तावता ।
विकारेच्छा परित्यागे, प्रत्याहारस्तु जायते ॥६६॥
जैनेतरीयग्रन्थेषु, प्रत्याहारस्वरूपकम् ।
यत्प्रोक्तं दृश्यते तद्धि, स्वपरज्ञानहेतवे ॥६७॥
श्रोत्रादीन्द्रियवस्तूनां, रागद्वेषात्मपोषिणाम् ।
विवेकबलपूर्वेण, निवृत्तिः क्रियतां दृढा ॥६८॥
उन्मादपरिपुष्टित्वजनकाहारतां त्यजेत् ।
इन्द्रियाणां च स्वाधीने, कर्त्तव्ये यत्नतां भजेत् ६९॥
स्वविषयत्यागेन, प्रत्याहारस्तु जायते ।
याज्ञवल्क्ये च यः प्रोक्तः, उपायः स विलिख्यते ७०॥
पद्मासनोपविश्यैव, केवलं कुम्भद्वारतः ।
श्वासोछ्वासगतेर्रोधात् प्रत्याहारस्तु सिध्यति ७१॥
सिद्धासनोपविश्यैव, निमेषोन्मेषशून्यके ।
घ्राणेन्द्रिये च सम्प्राप्ते, स्थिरदृष्टिविधानके ॥७२॥
प्रत्याहारस्तु जायते, अपरोपायतां भज ।

प्राणायामस्य चाभ्यासः, कर्त्तव्यः शांतचित्ततः ७३॥
द्वादशसहस्राणां च, प्रणवानां जपे सति ।
प्रतिकरणमुद्राणामभ्यासे नैव सिध्यति ॥७४॥
श्वासोच्छ्वासलयोद्भावे, स्थाने च चित्तवृत्तीनाम् ।
स्थिरीकरणकर्त्तव्ये प्रत्याहारस्तु सिध्यति ॥७५॥
प्रत्याहारस्य चाभ्यासे, इन्द्रियाणां च वश्यता ।
स्वान्तं च निर्मलं भूयात्तपो वृद्धिस्ततो भवेत् ॥७६॥
दीनताया विनाशः स्याद्देहे चारोग्यता भवेत् ।
समाधीनां प्रवेशो च, योग्यता परिजायते ॥७७॥
सम्यक्श्रद्धां विना नैव, मिथ्यात्वस्य न मन्दता ।
मिथ्यात्ववासनासत्त्वे, सम्यग्ज्ञानं न जायते ॥७८
आश्रवबन्धरूपाणां, तत्त्वानां ज्ञानशून्यतः ।
संवररोधताऽभावे, प्रत्युत बन्धता भवेत् ॥७९॥
अतः प्रोक्तः क्रमो नैव, प्रत्याहारस्य मन्यताम् ।
रागद्वेषस्य सद्भावे, प्रत्याहारः कुतो भवेत् ॥८०॥
शुद्धा भागवती दीक्षा, येन प्राप्ता महात्मना ।
अतिचारविहीना सा, प्रत्याहारस्तदा खलु ॥८१॥
दीक्षास्वरूपम् :—

दीयते परमं ज्ञानं, क्षीयते पापपद्धतिः ।
तेन दीक्षोच्यते शास्त्रे, सर्वज्ञागमज्ञानतः ॥८२॥
दिव्यज्ञानं यतो दद्यात् कुर्यात् पापक्षयं ततः ।
तस्माद्दीक्षेति सम्प्रोक्ता, सर्वशास्त्रेषु सम्मता ८३॥
ददाति दिव्यभावं चेत्, शिणुयात् पापसन्ततिम् ।
तेन दीक्षेति विख्याता, मुनिभिः शास्त्रपारगैः ८४॥
दीक्षाशब्दस्य नैरुक्त्या, अर्थस्तु प्रतिपादितः ।
प्रत्याहारोपयोगित्वाद्रागादिजयहेतुकः ॥८५॥
प्रसङ्गस्यानुसारेण, एतदपि विवेचितम् ।
प्रकृतमनुसर्त्तव्यं, प्रत्याहारप्रसङ्गजम् ॥८६॥
प्रत्याहारस्वरूपं तु, वास्तविकं निगद्यते ।
पञ्चमदृष्टिरूपेण, कथ्यमानं गुणावहम् ॥८७॥
स्थिराख्यपञ्चमीदृष्टिः, दर्शनं तत्र निर्मलम् ।
रत्नप्रभासमं ज्ञेयं, भ्रान्त्यादिमलवर्जितम् ॥८८॥
सूक्ष्मविशुद्धबोधस्तु, निर्मलस्तत्र जायते ।
पश्वादिदुर्गतिं त्यक्त्वा, देवरूपं यतो भवेत् ॥८९॥
शुद्धश्रद्धा प्रभावेन, वैमानिकं विना न हि ।
तादृगुन्नतिहेतुर्यः चिन्ता तेन कथं भवेद् ॥९०॥

व॰ कालेषु बालैश्च, धूलीगृहं वितन्यते ।
चेष्टां च तादृशीं दृष्ट्वा यूनां घृणास्पदं भवेत् ॥६१
प्राक्काले कृतवन्तस्ते, तादृक्क्रियां च प्रेमतः ।
अधुना ज्ञानसञ्जाते, तेषां घृणा प्रजायते ॥६२॥
शकृच्चुंथनचेष्टां च, कुर्वन्ति बालका यथा ।
तां दृष्ट्वा चाष्टवर्षाणां बालानां मानसे घृणा ॥६३॥
युवानो युवतीनां च, तुष्यन्ति प्रथमागमे ।
विकारभावनाजन्यां, कुर्वन्ति भोगचेष्टिकाम् ॥६४॥
तां दृष्ट्वा मध्यमाश्चैव पुत्रादीनां च क्लेशतः ।
घृणां कुर्वन्ति जल्पन्ति, लज्जाहीना इमे जनाः ॥६५॥
स्वयं तादृक् क्रियां कृत्वा, भोगसम्भोगकारिकाम् ।
स्त्रीपुत्रादिकक्लेशेन, अधुना विषसन्निभा ॥६६॥
यदा दृष्टिपथं याति, सा क्रिया दुःखदायिका ।
प्रतिभाति च स्वान्ते सा तदा दुःखं चिरं भवेत् ॥६७।
गात्रशैथिल्यसद्भावे, मलस्रोतो हि चाङ्गतः ।
बालादिकाश्च तद्दृष्ट्वा, हसन्ति तादृशान् जनान् ६८।
योगिभिश्चैव सर्वा या, या क्रिया परिदृश्यते ।
तां दृष्ट्वा मोहतत्त्वस्य, ग॰न्त्यसारता सदा ॥६९॥

अहो मोहस्य महात्म्यं सर्वे, मुह्यन्ति प्राणिनः ।
ज्ञानदृष्टेरभावेन, विकल्पयन्ति तादृशम् ॥१००॥
नृत्यन्ति खलु संसारे, अनेकरूपधारिणः ।
माता भूत्वा कदाचिच्च, भवति पितृतां कदा ॥१०१
कदा भ्रातृस्वरूपं च, धृत्वा तु स्नेहभावनाम् ।
कुर्वन्ति क्लेशभावं च, तेनैव सह सर्वदा ॥१०२॥
एवं सर्वक्रियां दृष्ट्वा, योगिनो ज्ञानचक्षुषा ।
अनित्यभावनां धृत्वा, वैराग्यं मानसे भजेत् ॥१०३
विषयभोगसामीप्ये, इन्द्रियं नैव प्रेषयेत् ।
समभावेन चात्मानं, भावयन्ति च सर्वदा ॥१०४॥
सर्वज्ञभाषितं धर्मं, विना स्वस्मिन्न मन्यते ।
गच्छन्ति तं समाश्रित्य, भव्या मुक्तिपथं सदा १०५
रागद्वेषौ परित्यज्य, विकारभावनां तथा ।
शुद्धात्मानो गुणे रन्तु, विशुद्धां भावनां भजेत् १०६
प्रत्याहारस्तदा ज्ञेयः, गुणानां शुद्धदर्शने ।
केवलतत्त्वरूपस्य, प्रकाशो चोद्यतो भव ॥१०७॥
रत्नत्रयं विना नैव, अन्योपायो निगद्यते ।
सर्वेऽसारस्वरूपाश्च, उपायाः परिभाषिताः ॥१०८॥

शीतलचन्दनाज्जातः, दहत्यग्निर्वनं सदा ।
धर्मजनितभोगाश्च, ज्ञेयाः संसारवर्धकाः ॥१०६॥
अनिष्टास्तेऽपि ज्ञातव्याः, मानसे सर्वदा खलु ।
त्यक्तव्या परिज्ञातव्या, जैनशासनवेदिभिः ॥११०॥
यत्राविनाशिभावः, स्यादंशो शुद्धस्वरूपजः ।
तत्र पुद्गलजालस्य, सद्दम्भवस्तु भासते ॥१११॥
संसारे विषवज्ज्ञेयाः भोगा रोगसमाः सदा ।
आशा च राक्षसी तुल्या, सर्वत्र प्रतिभाति च ११२
चिदानन्दसुखास्वादे, भावना सर्वदा भवेत् ।
प्रत्याहारस्त्वतः शुद्धः, मन्यते जैनशासने ॥११३॥

॥ इति श्रीशास्त्रविशारदजगद्वन्द्यजैनाचार्यपूज्य-
पादाराध्यदेव शासनसम्राट् श्रीविजयधर्म-
सूरिशिष्येण न्यायविशारदन्यायतीर्थो-
पाध्यायमङ्गलविजयेन विरचिते य ग-
प्रदीपे प्रत्याहाराख्यपञ्चमयोगाङ्ग-
वर्णननामा सप्तदशतमः प्रकाशः
समाप्तः ॥

———

# योगप्र-ीप।

## ॥ धारणास्वरूपवर्णनम् ॥

सर्वथा घातिनिर्मुक्तः, तीर्थकृन्नामकर्मणः।
उदयो यस्य तस्मै च, सर्वज्ञाय नमो नमः ॥१॥
आदिदेवं हृदि ध्यात्वा, धर्मसूरिं गुरुं तथा।
धारणायाः स्वरूपं च, वच्मि गुरुप्रसादतः ॥२॥
ध्येयवस्तुषु सर्वत्र, चित्तस्य स्थिरबन्धनम्।
धारणा परिज्ञातव्या, तत्स्वरूपं प्रकाश्यते ॥३॥
नाभिहृदयनासाद्यं, भालभ्रकुटितालुतः।
मस्तकमुखकर्णानि, धारणास्थानकानि च ॥४॥
दर्शितानि च शास्त्रेषु, एकत्र कुत्रचित्तदा।
स्थाप्यतां च मनस्तत्र, धारणा कथ्यते खलु ॥५॥
संवित्तिप्रत्ययाश्चैव, जायन्ते बहवः किल।
व्याख्यानं परिज्ञातव्यं, योगशास्त्रानुसारतः ॥६॥
आध्यात्मिकाधि-भौतिके, देशे वा चाधिदैविके।
ा, ध्येयविषय[illegible]शके ॥७॥

चित्तैकाग्रे च कर्त्तव्ये, धारणा प्रणिगद्यते ।
धारणाभ्यासद्वारेण, चित्तवृत्तिः स्थिरा भवेत् ॥८॥
मुद्राभ्यासोऽपि तस्मै मा कर्तव्यः तत्र सम्मतः ।
नासिकाग्रविभागे च, मनःस्थिरीकृते सति ॥९॥
अगोचरी तु मुद्रा स्याद्धारणास्पूपयोगिनी ।
नासाग्रभागतश्चैव, चतुरंगुलके पदे ॥१०॥
स्वान्तस्थैर्ये च कर्त्तव्ये, मुद्रां तु भूचरी म त
आज्ञाचक्रे च स्वान्तस्य, स्थिरीकारे च चाचरी ।११।
आज्ञाचक्रे च स्वान्तस्य, स्थिरीकारे च दृष्टीनाम् ।
समस्थलेऽधिकाधिक्याद्धस्तद्वयस्य चान्तरे ॥१२॥
आन्तरे चातिन्यूने वै वितस्तेर्नाधिके सति ।
मानसानीतवस्तूनां, कल्पनायां स्थिरीकृते ॥१३॥
मुद्रा च शाम्भवी ज्ञेया, स्वस्थस्वकीयलक्ष्यके ।
अलक्ष्यं च परित्यज्य, लक्ष्ये चित्तप्रदानके ॥१४॥
बाह्योपकरणानां च, अपेक्षा नैव विद्यते ।
एतादृशे च कर्त्तव्ये, यज्जातं तन्निगद्यते ॥१५॥
परा शीघ्रं तु पश्यन्तीं, रूपं धृत्वा च मध्यमा ।
वैखर्या वर तत्त्वार्थे, शब्दैकत्वं वितन्यते ॥१६॥

मुद्रा तु शाम्भवी तत्र, मन्तव्या शिवशासने ।
शिवेन साधिता यस्मात्ततः, शाम्भवी कथ्यते । १७।
पञ्चाङ्गा नियमादीनि, प्रोक्तानि बहिरंगतः ।
त्रीण्येव चान्तरङ्गानि, योगाङ्गानि भवन्ति वै ॥१८॥
बाह्ये चाभ्यन्तरे चैव, स्थूलसूक्ष्मविभागके ।
कुत्रचिद् ध्येयस्थाने च, चित्तस्य स्थिरबन्धनम् ॥१९॥
धारणा सैव ज्ञातव्या, धारणां वै चिकीर्षता ।
जैनेतरीयग्रन्थेषु, धारणारूपता मता ॥२०॥
आद्ययोगत्रयाणां च, पञ्चानां प्रासिता यतः ।
साधकैर्धारणाभ्यासे, साफल्यं परिप्राप्यते ॥२१॥
धारणायाः स्वरूपं तु वस्तुगत्या विचार्यते ।
योगदृष्टिक्रमेणैव, धारणा योगधारणा ॥२२॥
कीदृशोऽत्राधिकारी, स्यान्मादृशां ज्ञानहेतवे ।
कया रीत्या च कर्त्तव्या, तत्सर्वं प्रणिगद्यते ॥२३॥
चाञ्चल्यरहितो ज्ञेयः, रोगेभ्यो रहितस्तथा ।
नैष्ठुर्यैः सर्वथा मुक्तः, स्थिरमानसिकः सदा ॥२४॥
वर्णादिशुभयुक्तः स्यात् प्रसन्नास्यं च सर्वदा ।
हृदि सरलता नित्यं, गुणान्वेषणतत्परः ॥२५॥

सुस्वरता च माधुर्यं, मुखे विशति सर्वदा ।
धैर्यप्रभावशालीस्यान्मित्रादिदृष्टिसंयुतः ॥२६॥
द्वन्द्वाऽधृष्यत्वसंयुक्तः, जनप्रियश्च सर्वदा ।
एतावद्गुणसंयुक्तः, धारणाऽधिकृतो जनः ॥२७॥
योग्यतां च विना नैव, कार्यं हि सफलं भवेत् ।
धारणादिमहायोगे सा कथं न विचार्यते ॥२८॥
रागादिदोषनाशे च, कर्त्तव्ये तत्परो भव
स्वगुणपरितृप्त्यर्थं, स्वात्मनि परिचिन्तनम् ॥२६॥
समता सर्वभूतेषु, योग्यसंयोगसंयुतः ।
वैर्यविरोधभावानां, सर्वथा नाश-सम्मुखः ॥३०॥
तादृशे कार्यकर्त्तव्ये, बुद्धिर्ऋतम्भरा खलु ।
योगिनि निस्पृहे चैव, उत्पद्यन्ते च तत्क्षणात् ॥३१
प्रसङ्गवशतोऽत्रैव, योगरूपं विशेषतः ।
मोक्षप्राप्त्युपयोगित्वादतस्तत्तु विचार्यते ॥३२॥
यत्र सर्वप्रकारेण, विशुद्धा धर्मव्यापृतिः ।
योगरूपा तु सा ज्ञेया, तद्विशेषो निगद्यते ॥३३॥
स्थानादिधर्मव्यापारः, योगविशेषरूपकः ।
प्रणिधानं प्रवृत्तिश्च, विघ्नजयश्च सिद्धिता ॥३४॥

विनियोगश्च तत्पश्च, भावानां सन्निकर्षता ।
यत्रैव तादृशो धर्मव्यापारपरिशुद्धकः ॥३५॥
स योगः परिमन्तव्यः, प्रतिबन्धस्तु नो कदा ।
विपरीतस्वभावानां, भावानां नैव योग्यता ॥३६॥
ताः क्रिया योगरूपा न, ज्ञातव्या ज्ञानिना सदा ।
पञ्चाशयेन संयुक्ता, भावप्रधानता यतः ॥३७॥
प्रोक्तं योगविंशिकाटीकायाम् :—
प्रणिधिप्रवृत्तिविघ्नजयसिद्धिविनियोगभावतः प्रायः
धर्मज्ञैराख्याताः शुभाशयाः, पञ्चधाऽत्र विधौ ३८॥
प्रणिधानस्वरूपम् :—

स्वापेक्षया च नीचानां, जीवानां प्रतिद्वेषता ।
कदापि नैव कर्त्तव्या, किन्तु परोपकारता ॥३९॥
तां बुद्धिं मानसे धृत्वा, वार्तमानिकधार्मिके ॥
कर्त्तव्यभूमिकास्थाने, प्रेरणं प्रणिधानता ॥४०॥
वार्त्तमानिकधर्माणां, स्थानानां समुद्देशतः ।
कर्त्तव्यतदुपायानां, पद्धतेर्युक्तता तथा ॥४१॥
पश्चालयशून्यतातीव्रप्रयत्नः प्रवृत्तिर्मता ।
योगोपयोगभावेषु सा शुद्धा परिकीर्त्तिता ॥४२॥

यतः परिणते धर्मप्रवृत्तौ, विघ्नशून्यता ।
विघ्नजयस्तु मन्तव्यः, विघ्नस्तु त्रिविधो मतः ॥४३॥
परिषहाः क्षुधातृषणाद्यस्त्वधो निगद्यते ।
शारीरिकं तु रोगादि, द्वितीयं विघ्नमुच्यते ॥४४॥
मनोविभ्रमविघ्नं तु तृतीयं परिकीर्त्तितम् ।
धार्मिकप्रवृत्तौ बाधा, कर्त्तव्ये विघ्नरूपता ॥४५॥
यथा प्रयाणकर्त्तव्ये, मार्गे कण्टकप्रस्तरौ ।
देहज्वरादिरोगाश्च, स्वान्तेऽपि च दिशां भ्रमः ४६॥
तज्जयस्त्रिविधः प्रोक्तः, हीनमध्यमभेदतः ।
उत्कृष्टभेदतश्चैव, सर्वथा परिज्ञायताम् ॥४७॥
कष्टे पतितजीवानां, दानेन दुःखिनां सदा ।
दयया चार्द्रभावेन, दुःखापहारतां भजेत् ॥४८॥
हीनगुणे च कर्त्तव्या, सर्वथा दुःखनाशता ।
सिद्धिस्तु निर्गुणे चैव, प्रथमा परिकीर्त्तिता ॥४९॥
पूर्वोक्तधर्मस्थानस्य, परोपकारबुद्धितः ।
अहिंसादेश्च प्राप्तव्ये, द्वितीया परिभाषिता ॥५०॥
अतिचारविहीने च, गुर्वाद्योचगुणाऽऽढ्यके ।
विनयभक्तिता कार्या, बहुमानादिना युता ॥५१॥

तादृशकार्यकर्त्तव्ये, सिद्धश्चैव तृतीयका।
तत्तत्सद्धर्मस्थानानामवासिस्तात्त्विकी सदा ॥५२॥
सा सिद्धिः परिज्ञातव्या, सर्वदा सिद्धिमिच्छता।
विनियोगस्वरूपं तु, प्रोच्यते योगतः सदा ॥५३॥
स्वप्राप्तधर्मस्थानानां, यथोपायं परस्य च।
सम्पादकत्वबुद्धिस्तु, विनियोगो निगद्यते ॥५४॥
भावार्थ :—
धार्मिकभूमिस्थानानां, प्राप्तव्ये परिशीलता।
अहिंसादिप्रधानानां, तद्योग्योपायतः खलु ॥५५॥
स्वसिद्धौ परिज्ञातेऽपि, परेषां प्राप्तिकार्यके।
उपायपरिज्ञातव्ये, विनियोगस्तु कीर्त्तितः ॥५६॥
कति स्थानानि प्रोक्तानि, योगास्तु कतिधा मता।
एतत्सर्वप्रकारस्तु, ज्ञानार्थं परिकथ्यते ॥५७॥
स्थानोर्णार्थाश्च ज्ञातव्या, आलम्बनं तथैव च।
अनालम्बनता चैव, योगास्तु पञ्च कीर्त्तिताः ॥५८॥
एतत्पञ्चकयोगेषु, आद्यौ द्वौ कर्मयोगकौ।
अन्तिमत्रिकयोगास्तु, ज्ञानयोगा उदाहृताः ॥५९॥

१ कष्टदूरीकरणद्वारा।

आसनं स्थानशब्देन, ज्ञेयं पद्मासनादिकम् ।
प्रत्येकं हि क्रियारम्भे, काले सूत्रस्य जल्पने ॥६०॥
वर्णस्तूर्णं विज्ञातव्यः, अथार्थः परिदृश्यते ।
शब्दाभिधेयबोधस्तु, अर्थशब्देन कीर्त्यते ॥६१॥
बाह्यमूर्त्यादिध्यानं तु, आलम्बनं निगद्यते ।
रूपिद्रव्यविहीनं च, शुद्धचैतन्यमात्रकम् ॥६२॥
अनालम्बनताध्यानं, तद्भावार्थस्तु कथ्यते ।
निर्विकल्पत्वचिन्मात्रसमाधिरूपमेव च ॥६३॥
रूपिद्रव्यस्य चालम्बरहितं परिज्ञायताम् ।
अनालम्बनध्यानं तु, हृदि सर्वत्र धार्यताम् ॥६४॥
स्थानं स्वयं क्रियारूपं, सूत्रोच्चारणमूर्णता ।
अतश्च स्थानवर्णौ च, क्रियारूपावुदाहृतौ ॥६५॥
अर्थस्तु बोधरूपः स्याद्ध्यानमालम्बनं मतम् ।
शुद्धचैतन्यमात्रस्य, समाधिरूपमेव हि ॥६६॥
अनालम्बनता ध्यानं, त्रितयं योगरूपकम् ।
अन्त्यत्रियोग नाम्नैव, ज्ञानयोगस्तु कथ्यते ॥६७॥
भावार्थः--मोक्षकारणभूताश्च, आत्मव्यापृतयःखलु ।
ज्ञानरूपास्तु ताः सर्वाः, त्रियोगे ज्ञानता ततः ॥६८॥

स्थानादिपञ्चयोगानामधिकारी प्रदर्श्यते ।

देशतः सर्वतश्चैव, यमिनां स्थानवर्णकौ ॥६६॥
क्रियारूपौ तु द्वौ योगौ, तावेव चाधिकारिणौ ।
वस्तुतो यमिनां चैव, योगानां सम्भवः सदा ॥७०॥
चारित्रहीनजीवे च, सम्यग्दृष्टित्वसंयुते ।
योगानां बीजमात्रं तु, विज्ञेयं कस्यचिन्मते ॥७१॥
क्रियाज्ञानस्वरूपौ च, यादृशौ तादृशौ च तौ ।
किन्तु चारित्रमोहानां, क्षयोपशमहेतुतः ॥७२॥
अवश्यं प्रकटीयेते, तौ द्वौ योगौ च साधुषु ।
अतश्चारित्रवन्तस्ते, सम्मताश्चाधिकारिणः ॥७३॥
अनेन कारणेनैव, हरिभद्रेण सूरिणा ।
योगबिन्दुषु चाध्यात्मसमता ध्यानभावना ॥७४॥
वृत्तिसंक्षेपता रूपा, सम्पत्तिः पञ्चयोगिषु ।
यदि चारित्रवत्सु चेद्योगसम्पत्तिरुच्यते ॥७५॥
तदा निश्चयदृष्ट्या च, यत्र चारित्रहीनता ।
तत्र तु व्यवहारेण, श्राद्धसाधुक्रियावताम् ॥७६॥
तादृक् क्रिया विधाने च, को लाभः परिजायते ।
तदुत्तरजिज्ञासायां, समाधानं विधीयते ॥७७॥

अपुनर्बन्धकेनापि, सम्यग्दृष्टित्वद्वारतः ।
व्यवहारं तमाश्रित्य, या क्रिया तन्यते यदा ॥७८॥
सर्वोत्कृष्टस्थितेश्चैव, मोहस्य नैव बन्धकः ।
सकृद्बन्धकसद्भावः, द्विबन्धे द्विश्च बन्धकः ॥७९॥
तत्र योगो न मन्तव्यः, किन्तु तद्योगहेतूनाम् ।
बीजमात्रं तु विज्ञेयं, सम्यग्दृष्टित्वसंयुते ॥८०॥
अपुनर्बन्धको यो न, सम्यग्दृष्टिस्तु नैव च ।
सकृन्धद्बकता न स्याद्, द्विर्बन्धकादिसंयुते ॥८१॥
तादृग्व्यक्तौ च सा क्रिया तत्र न बीजमात्रतः ।
योगाभासस्वरूपा सा मिथ्यायोगत्वसंयुता ॥८२॥
व्रतधारिमनुष्याणामुचितवृत्तिधारिणाम्[1] ।
मैत्र्यादिभावगर्भत्वं, शास्त्राज्जीवादिचिन्तनम् ॥८३॥
अध्यात्मं परिज्ञातव्यं, भावना प्रतिपाद्यते ।
अध्यात्मस्यैव प्रत्यहं, वर्धकश्चित्तवृत्तीनाम् ॥८४॥
निरोधयुक्तताऽभ्यासः, भावना परिभाव्यताम् ।
उत्पातादिकवस्तुत्वं, सूक्ष्मोपयोगसंयुतम् ॥८५॥
तादृक्चित्तं तु विज्ञेयं, अध्यात्मनामकं सदा ।

---

१ तत्र तु योगसंपात्तिः व्यवहारतः क्रियावतां साधुश्राद्धादिषु ।

अविद्या कल्पितेष्टत्वानिष्टत्वपरिहारतः ॥८६॥
शुभाशुभत्ववस्तूनां, १प्रवृत्तौ समभावतः ।
सर्वदा भावनं सम्यक्, समता प्रणिगद्यते ॥८७॥
परिस्पन्दस्वरूपेषु, विकल्परूपवस्तुषु ।
अन्यसंयोगवृत्तीनामपुनर्बन्धभावतः ॥८८॥
मनोद्वारा निरोधे तु, वृत्तिसंक्षेपता मता ।
एतेषां पञ्चयोगानामन्तर्भावो विचार्यते ॥८९॥
अत्र वर्णितस्थानादि, योगेषु च प्रवेशनम् ।
अनेनैव प्रकारेण, तन्मते योगरीतितः ॥९०॥
अध्यात्मं नैकरूपं च देवसेवास्वरूपकम् ।
स्थानयोगे समावेषः, तस्यैव परिकीर्त्तितः ॥९१॥
अध्यात्मजपस्वरूपस्य, समावेशस्तु वर्णके ।
जपं तु वर्णरूपं स्याद्वर्णे वर्णस्वरूपता ॥९२॥
तत्त्वचिन्तनरूपस्य, अध्यात्मयोगकस्य वै ।
अर्थयोगे समावेशः, अतोऽध्यात्मं द्वियोगके ॥९३॥
भावनायाः समावेशः, मन्तव्यस्त्रिकयोगके ।
ध्यानस्य तु समावेशः, आलम्बने सुयोगके ॥९४॥
वृत्तिसंक्षयतः साम्यौ योगेऽनालम्बने च तौ ।

ज्ञातव्यौ शुभयोगेन, स्थानादियोगतावता ॥६५॥
प्रोक्तस्थानादियोगाश्च ये शास्त्रे परिदर्शिताः ।
इच्छा प्रवृत्तिः स्थैर्यं च, सिद्धिर्भेदश्चतुर्थकः ॥६६॥
स्थानादियोग कर्त्तृणां, तद्दशायां कथानकम् ।
श्रुत्वा चान्तरिकी प्रीतिः, येषां च हृदये भवेत् ॥६७॥
तेषां च शुभभावेन, योगानुष्ठानवृत्तिता ।
विधिपूर्वानुष्ठानं च, कुर्वाणं प्रतिप्रेमतः ॥६८॥
बहुमानस्तु कर्त्तव्यः, हृदयोल्लासवृद्धितः ।
तादृक्कार्ये च कर्त्तव्ये परिणतिः शुभा यदा ॥६९॥
येषां हृदि प्रजायेत, तादृशीभावना खलु ।
योगदशैव सा ज्ञेया, इच्छायोगस्वरूपिका ॥१००॥

भावार्थः—

स्थानादि योगयुक्तानां, कथासु प्रीतिता सदा ।
विधिकर्त्तृषु मानादिद्वारा सोल्लासमात्रकम् ॥१०१॥
किंचिदभ्यासयोगादि, विचित्रपरिणामकम् ।
आद्याने तु येवेच्छा, तत्प्रधानं च योगकम् ॥१०२॥
द्रव्यक्षेत्राद्यसामग्र्या, अङ्गानां विकलेऽपि या ।
यथाविहितस्थानादियथाशक्तिप्रयोगतः ॥१०३॥

क्रियमाणं तु स्थानादि, इच्छायोगं निगद्यते ।
सदा सर्वदशायां च, उपशमप्रधानकम् ॥१०४॥
यथाविहितस्थानादितद्योगपालनं तथा ।
अर्थादङ्गस्य साकल्याद्विधीयमानस्थानकम् ॥१०५॥
प्रवृत्तियोगरूपत्वं, प्रवृत्तिर्योगउच्यते ।
उपशमे प्रधाने च, स्थानादियोगपालने ॥१०६॥
बाधककारणानां च, यदा चिन्ता न विद्यते ।
योगः स स्थिरता रूपः, कथ्यते योगशास्त्रतः।१०७।
स्थानादिसर्वचेष्टा सा, अन्येषां हितसाधिका ।
यदा भवेत्तदा चैव, सिद्धिर्योगो निगद्यते ॥१०८॥
तत्सर्वेषां च भावार्थः, स्पष्टरूपेण कथ्यते ।
स्थानादियोगप्राप्तानां, श्रुत्वा तु योगिनां कथाम्१०९
प्रीतिर्या मानसे जाता, इच्छायोगस्तु सम्मतः ।
स्थानादिपञ्चयोगानां पालनं दृढरूपतः ॥११०॥
प्रवृत्तिः सा तु विज्ञेया, प्रवृत्तियोगरूपिका ।
स्थानादिपञ्चयोगानां, यानि बाधकवस्तूनि ॥१११॥
तदुभयचिन्तनं नैव, यत्र तत्स्थैर्ययोगकम् ।
स्थानादिपञ्चयोगेष अन्येषां हितचिन्तनम ॥११२॥

तात्पर्यार्थः—

सर्वथा सर्वदा कार्यं, सिद्धियोगस्तदुच्यते ।
यदवस्थासु द्रव्यादि, सामग्री विकलेऽपि च ॥११३॥
अपूर्वोल्लाससद्भावः, शास्त्रोक्तविधिना भवेत् ।
सन्मानपूर्वकश्चैव, योगाऽभ्यासोऽल्पमात्रकः ।११४।
क्रियमाणस्तु भावेन, इच्छायोगश्च तत्र वै ।
वीर्योल्लासस्य प्राबल्याद्यत्र शास्त्रानुसारतः ॥११५॥
योगाभ्यासस्तु सम्पूर्णः, साङ्गोपाङ्गेन संयुतः ।
क्रियते यत्र तत्रैव प्रवृत्तियोगता मता ॥११६॥
प्रवृत्ति योगस्वरूपश्च, स्थिरतायोगसम्मतः।
भिन्नता द्वययोगे या, भवति साऽपि कथ्यते ॥११७॥
प्रवृत्तौ दोषभावानां, भीतिस्तु परितिष्ठति ।
स्थैर्ययोगे तु सा नैव, भिन्नतेति निरूपिता ॥११८॥
यत्र स्थानादि योगानां, विधीयमान योगिनाम् ।
स्वात्मनिसर्वथा शान्तिः स्वान्येषामपि प्राणिनाम् ११
तादृशं योगिनं दृष्ट्वा,शान्तिर्हृदये जायते ।
अर्थात् हिंसकजीवानां, सिद्धयोगिसमागमात् १२०
हिंसाऽसत्यादिदुष्टानां, दुर्गुणानां च त्यागने ।

शुद्धा बुद्धिर्यतश्चैव, जायते दुरात्मनाम् ॥१२१॥
सिद्धियोगस्तु विज्ञेयः, सिद्धियोगं चिकीर्षता ।
इच्छादियोगवैशेषे, आशयभेदव्यंजकः ॥१२२॥
क्षयोपशमभेदस्तु, मन्तव्यो हेतु रूपतः ।
इच्छादि योगरूपेषु, अन्योऽन्यं भिन्नता स्फुटा॥१२३
परन्तु तेषु सर्वेषु, मध्ये चासंख्यभेदता ।
तादृशाभिन्नता हेतुः, क्षयोपशम उच्यते ॥१२४॥ ६
भव्यप्राण्यभिधानेन, अपुनर्बन्धकादिकः ।
जीवात्मा परिज्ञातव्यः, अन्यो नैव च सम्मतः।१२५
इति विशेषता ज्ञेया, योगधर्मे प्रवेशता ।
इच्छादियोगकार्याणि, कथ्यन्ते क्रमतः खलु ॥१२६
अनुकम्पा च निर्वेदः, संवेगप्रशमौ तथा ।
दुःखितप्राणिनां बाह्याभ्यन्तरवस्तुदानतः ॥१२७॥
यथाशक्त्या च या दूरी, करणेच्छा सानुकम्पनम् ।
नैर्गुण्यपरिज्ञानेन, संसारचारकात् खलु॥१२८॥
विरक्तता तु निर्वेदः, संवेगः परिभाष्यते ।
मोक्षाभिलाषरूपो हि, संवेगः प्रणिगद्यते ॥१२९॥
अपरेच्छा न स्वप्नेऽपि, कदाचिदपि जायते ।

कामक्रोधकषायाणां, शान्तिस्तु प्रथमो मतः ॥१३०॥
इच्छादियोगतत्त्वानां, कार्यरूपाणि तानि च ।
स्थानादियोगभेदानां, चैत्यवन्दनकादिषु ॥१३१॥
अवतारस्तु योग्येन, प्रकारेण वितन्यताम् ।
यदा कोऽपि च श्रद्धावान्, करोति चैत्यवन्दनम्१३२॥
अरिहंत चेइयाणां, करेमि काउसग्गेत्ति ।
तदा तु सूत्रपाठानां, विनोच्चारणतां तथा ॥१३३॥
कदापि नैव जायेत, ऊर्णताशुद्धरूपतः ।
यथाविधि तु सूत्राणां विशुद्धघोषपूर्वकम् ॥१३४॥
उच्चारणं तथा कार्यं, स्पष्टबोधो यतो भवेद् ।
दोषाणां परित्यागेन, सूत्राणां शुद्धजल्पने ॥१३५॥
वर्णयोगफलं तु स्याद्विशुद्धं पदज्ञानकम् ।
तदा तु तस्य जायेत, यदा च शुद्धजल्पनम् ॥१३६॥
वर्णयोगप्रभावेन, पदज्ञानं तथार्थकम् ।
तथार्थपदज्ञानेन, अर्थालम्बनयोगिने ॥ १३७ ॥
बहुधाऽविपरीतेन,, मुक्तिस्तु परिजन्यते ।
अर्थालम्बनयोगानां, राहित्ये स्थानवर्णतः ॥१३८॥
पारम्पर्येण मोक्षस्य, आविर्भावो न जायते ।

यदनुष्ठानकं चैव, मोक्षप्रदानशक्तिकम् ॥१३९॥
तदेव सदनुष्ठानं ज्ञातव्यं मोक्षकांक्षिणा ।
द्विविधं सदनुष्ठानं साक्षात्परम्परात्मकम् ॥१४०॥
फलदं परिज्ञातव्यं, योगदर्शनशास्त्रतः ।
अमृतत्वक्रियारूपं, प्रथमं परिकीर्त्तितम् ॥१४१॥
तद्धेतुत्वक्रियारूपं, द्वितीयं परिज्ञायताम् ।
प्रारम्भिकं च विज्ञेयं, चैत्यवन्दनरूपकम् ॥१४२॥
अत्र विचारता कार्या, अमृतत्वं च तत्कदा ।
चैत्यवन्दनकोच्चारणानुष्ठानं तथा भवेत् ॥१४३॥
स्थानवर्णार्थयोगानामालम्बनस्य शुद्धितः ।
एतच्चतुष्टययोगानां, सम्बन्धस्तु घनः खलु ॥१४४
अर्थालम्बनयोगानां यत्र सम्बन्धता नहि ।
परन्तु रुचिमात्रत्वं, तद्धेतुत्वं तदा भवेत् ॥१४५॥
यदा विध्यनुसारेण, दृढीकृत्य च स्वासनम् ।
सूत्रं पठति भावेन, शुद्धोच्चारणपूर्वकम् ॥१४६॥
चैत्यवन्दनकाले च, तदा तु भद्रको जनः ।
तथालम्बनयोगे तु, उपयोगविशुद्धकम् ॥१४७॥
तदा तच्चैत्यवन्दत्वं, चतुर्योगेन पूर्णकम् ।

भावक्रिया स्वरूपं च, अमृतं चैत्यवन्दनम् ॥१४८॥
अर्थालम्बनयोगे च, उपयगोस्य रक्षणात् ।
ज्ञानस्वरूपयोगस्तु, तत्रैवं संप्रवर्त्तते ॥१४९॥
तथा विध्यासनं बध्द्वा, सूत्रोच्चारणशुद्धितः ।
चैत्यवन्दनपाठे च, कर्त्तव्ये समये तु वै ॥१५०॥
आलम्बने च सूत्रार्थे, उपयोगश्च नो यदा ।
चैत्यवन्दनता तादृक् तदोपयोगशून्यतः ॥१५१॥
कारण द्रव्यरूपा सा, अर्थालम्बनहीनतः ।
तीव्ररुचिस्वरूपत्वमन्यतो भावरूपतः ॥१५२॥
तादृक्षकार्यद्वारापि, कदाचिन्मोक्षसौख्यकम् ।
अतस्तादृगनुष्ठानमुपादेयं तद्धेतुतः ॥ १५३ ॥
उपयोगस्य चाभावे, तद्धेतुकं च सम्मतम् ।
स्वरसम्मत्तिमात्रादि, सर्वेषां सन्निधौ सति ॥१५४॥
उपयोगस्य चाभावे, द्रव्यरूपं हि तन्मतम् ।
उपयोगस्य सत्त्वेऽपि, पूर्णकारणयोगतः ॥१५५॥
अमृतं तच्च विज्ञेयममृतफलदानतः ।
स्थानादियोगहीनत्वे, केवलं नैव निष्फलम् ॥१५६॥

---

१ तदा तच्चैत्यवन्दनत्वम्

अपित्वनिष्ठरूपं हि, अनिष्टफलदं मतम् ।
अतो योगाधिकाराणां, समीपे तस्य वर्णनम् ॥१५७
कर्त्तव्यं सुखबोधाय अयोग्ये नैव तन्यताम् ।
अर्थालम्बनयोगेभ्यो, व्यक्तिस्तु रहिता च या ॥१५८
स्थानवर्णत्वयोगेभ्यः, यदि चेद्रहिता भवेत् ।
तदा तु तत्क्रिया रूपमनुष्ठानं हि निष्फलम् ॥१५६॥
मृषा रूपं ततो ज्ञेयं विपरीतानुष्ठानतः ।
कुपात्रे पात्रबुद्धितः, प्रदाने योगवस्तुनः ॥१६०॥
मृषावादस्तु तस्यापि, जायते नात्र संशयः ।
असत्क्रियानुष्ठानं च, त्रिविधं परिकीर्त्तितम् ॥१६१
अननुष्ठानमेकं स्याद्वितीयं गरनामकम् ।
विषानुष्ठानकं चैव, तृतीयं परिज्ञयताम् ॥१६२॥
कदा केन प्रकारेण, असत्त्वं प्रतिपद्यते ।
इति प्रश्ने च सद्भावे, समाधानं विधीयते ॥१६३॥
यच्चैत्यवन्दनाकाले, नार्थालम्बनयोगकौ ।
न रुचिर्नैव स्थानं स्याद्वर्णयोगस्तु नो मतः ॥१६४॥
आदरता न तत्र स्यात्, सम्मूर्च्छिमक्रियानिभम् ।
मानसिकोपयोगेन शून्यत्वान्निष्फलं ततः ॥१६५॥

निष्फलता च सद्भावे, क्रिया तु निष्फला मता ।
एतादृशानुष्ठानं च अननुष्ठानमुच्यते ॥१६६॥
चैत्यवन्दनकर्त्तव्यसमये प्रतिज्ञा कृता ।
ठाणेणं मोणेणं झाणेणं अप्पाणं वोसिरामीति १६७
पाठोच्चारणकाले च, स्थानमौनादिकस्य वै ।
प्रतिज्ञां यादृशीं कृत्वा, तस्या भङ्गे तु जायते ॥१६८
महामृषा स्वरूपं हि, पापं तु नैव केवलम् ।
कर्मबन्धादिकत्वं वै, अननुष्ठानके भवेत् ॥१६९॥
स्थानवर्णादियोगानां, सम्बन्धभवनेऽपि च ।
स्वर्गादि पारलौकिकोद्देशेन यदि तन्यते ॥१७०॥
तदा गरानुष्ठानं तत्कथ्यते जैनयोगतः ।
यच्च गरानुष्ठानं तद्, विषानुष्ठानतां भजेत् ॥१७१
धनकीर्त्यादिलोभेन ऐहिकफललिप्सुना ।
एतादृशानुष्ठाने च, कर्त्तव्ये विषनामता ॥१७२॥
ऐहिकपरलोकनां सुखस्य कामनादितः ।
मोक्षस्यैव प्रतिज्ञायाः, भङ्गः स्पष्ट उदाहृतः ॥१७३॥
अनेनैव प्रकारेण अननुष्ठानरूपकम् ।
गरविषानुष्ठानं च, हेयरूपेण मन्यते ॥१७४॥

अतो योगाधिकाराणां, मता शिक्षा प्रदानता ॥
अयोग्यानधिकाराणां, नो चैत्यवन्दनामता ॥१७५॥
चैत्यवन्दनकर्त्तव्ये, योग्याधिकारिणश्च के ।
विरतिपरिणामेन ये योग्यास्ते च सम्मता ॥१७६॥
अतो योग्याधिकारेण ज्ञातव्याः स्पष्टरूपतः ।
इति शब्देन ज्ञातव्यं, कथानुष्ठानत्यागने ॥१७७॥
प्रतिज्ञा तु कृता या या, स्पष्टशब्दस्वरूपतः ॥
विरतिपरिणामं च, विना सा न वितन्यते ॥१७८॥
विरतिपरिणामानामतोऽपि चैत्यवन्दनम् ॥
ते सर्वे योग्यरूपाः स्युः, अतो योग्याश्च ते मता॥१७९
तात्पर्यार्थस्तु तस्यैव, स्पष्टरूपो निगद्यते ॥
चैत्यवन्दनकर्त्तव्ये, प्रतिज्ञा परिभाव्यते ॥१८०॥
तावकायं ठाणेणं इत्यादि ॥
इत्यादि पाठद्वारेण, कायोत्सर्गस्य स्वीकृतिः ॥
क्रियमाणा तु कायस्य, गुप्तिरूपा विभाव्यते ॥१८१॥
विरतिपरिणामं च, विनातो नैव युज्यते
अन्येषां योग्यता नैव, कायचेष्टा तु संमता ॥१८२
देशविरतिवन्तो हि, चैत्यवन्दनकार्यके ॥

मध्यमाधिकारित्वं, सूचामात्रेण सम्मतम् ॥१८३॥
तथा तुलासमारोपे, मध्ये च ग्रहणे सति ॥
यथा पल्लौ च द्वौ ग्राह्यौ, तथैवात्रविचार्यताम् ॥१८४

फलितार्थः—

सर्वे विरतिवन्तोऽपि तत्त्वतश्चाधिकारिणः ॥
तात्विकदृष्टिदानेन, वस्तुतत्वं प्ररूपितम् ॥१८५॥
अपुनर्बन्धकाः किन्तु, सम्यग्दर्शनिनस्तथा ॥
व्यवहारेण ज्ञातव्याः, अधिकारिणस्ते तथा ॥१८६॥
अपुनर्बन्धभावेन, ये च शून्या हि सर्वथा ॥
विधिप्रचुरसन्मानं, कर्त्तुं जानन्ति नो कदा॥१८७॥
अनधिकारवन्तो हि, चैत्यवन्दनकार्यके ॥
सर्वथा परिज्ञातव्या, शिक्षा तेषां न दीयते ॥१८८
तद्धे तु द्रव्यरूपं स्यादमृतं भावरूपकम् ॥
सदनुष्ठानता तत्र, अन्यत्र नैव मन्यते ॥१८६॥
अननुष्ठानता रूपं, गरविषानुष्ठानकम् ॥
न द्रव्यभावरूपं न किन्तु चेष्टात्वमात्रकम् ॥१६०॥
पञ्चानुष्ठानमध्येष, हेयमाद्यं त्रयं मतम् ॥
अन्त्यद्वयमुपादेयं, मोक्षकारणकं शुभम् ॥१६१॥

शङ्काः—

अविधिना क्रियाकार्ये, अन्यलाभश्च नो यदि ॥
तीर्थाऽनुच्छेदरूपा हि, परम्परा तु रक्ष्यते ॥१६२॥
यदि तादृक् क्रियाणां च अकर्त्तव्ये परम्परा ॥
व्युच्छिद्यते ततश्चैव अविधिः परितन्यते ॥१६३॥
विध्यनुकूलरूपेण कर्त्तारः स्वल्पका जनाः ॥
यदि तेषां विनाशः स्यात्तदा तीर्थविनाशता १६४
अतः केनापि रूपेण क्रिया कार्या च सर्वदा ॥
विध्यविधि विचारस्तु अतएव न तन्यते ॥१६५॥

उत्तरं—

अविधि पुष्टिकर्त्तव्ये तीर्थाऽविच्छेदरूपकम् ॥
आलम्बनं न कर्त्तव्यं शास्त्राज्ञा परिकांक्षिणा १६६
शास्त्रोक्त सत्क्रियाणां च लोपः प्रथमतो भवेत् ॥
शुद्धक्रिया विलोपे तु तीर्थोच्छेदः प्रजायते ॥१६७॥
अविधितः क्रिया कार्ये अन्य लाभो न विद्यते ॥
तीर्थरक्षा स्वरूपो हि लाभस्तु तत्र सम्मतः॥१६८॥
जनसमूह तीर्थं न शास्त्राज्ञा परिपालकाः ॥
शुद्धक्रियात्व कर्त्ता च संघस्तीर्थस्वरूपकः ।१६९॥

शास्त्राज्ञा लोपकर्तृत्वे समूहे नैव संघता।
किन्त्वस्थिसमुदायः स न तत्र संघता मता ॥२००॥
तीर्थरक्षा छलेनैव अविधिः परिस्थाप्यते॥
तदान्तेऽविधिमात्रत्वं शिष्यते इति मन्यते ॥२०१॥
शास्त्रविधिक्रियालोपः सर्वथैव प्रजायते॥
तल्लोपे तीर्थनाशः स्यात् सर्वानर्थं ततो भवेत्२०२
एकत्र तीर्थरक्षा स्यादन्यत्र तीर्थनाशनम्।
द्वयीकार्यप्रसङ्गे च, यद्युक्तं तद्विधीयताम् ॥२०३॥
सर्वोच्छेदस्तु तीर्थानां, विनाशो परिजल्पते।
तीर्थनाशो यथा न स्यात्तथाविधं वितन्यताम् २०४॥
अविधिपक्षपातेन, शास्त्रोक्तविधिनाशनम्।
ततोऽनिष्टफलं चैव, दृष्टान्तेन प्रदर्श्यते ॥२०५॥
स्वयं मृतस्तु एकः स्यादन्यः केनापि मारितः।
तद् द्वयोश्चैव मर्त्तव्ये, विशेषं वद कीदृशम् ॥२०६॥
शुद्धविधिगवेषे च, सद्भावो हृदि सत्यपि।
स्थानादियोगकर्त्तव्ये, शक्तिर्येषां च नो यदा ॥२०७
शासनस्यानुरागश्चेद्विधिपक्षगवेषणे।
सरलाशयता स्वान्ते, तदा न निष्फला क्रिया ॥२०८

विधिपक्षानुरागो न, नापि तु तद् गवेषणम् ।
गतानुगतिरूपेण, सदा क्रिया विधीयते ॥२०६॥
तदा तु तस्य जीवस्य, क्रियान्धसदृशी भवेत् ।
तादृक् क्रिया विधाने च, नो लाभः किन्तु हानिता ॥
शैथिल्याचारकर्त्तारः, शैथिल्याचारपोषकाः ।
स्वीयभक्तमनुष्याणां, तेऽपि स्वकीयजालके ॥२११॥
प्रक्षेपार्थं तु जल्पन्ति, मन्यन्ते च विधिं न ते ।
वक्ति कश्चिद्यदा कोऽपि, तदा तु क्रोधपूर्वकम् २१२
मद् गुरुः सम्प्रदायः सः, एतादृगागतः खलु ।
किं ते सर्वेऽपि मूर्खाःस्युः, भवानेव हि पण्डितः २१३
क्रियां तादृग्न कुर्वन्ति, धर्मोच्छेदस्तदा भवेत् ।
परम्परासमायातां,त्यजामि न कदापि भोः !॥२१४॥
यतो यादृक् च या चास्ति, करिष्यामश्च तादृशीं ।
अन्यथा तीर्थनाशः स्यादेवं वदन्ति बालिशाः ।२१५
अक्रियाशीलताऽनादिकालिकी च प्रवेशति ।
अक्रियाकारिजीवेषु,यथाऽस्माकं न दोषता ।२१६।
तथाविधिक्रियाकारान् प्रति न दोषभागिता ।
वयं तु देशकारश्चैव, व्यवहारस्य रक्षणात् ॥२१७॥

शास्त्रानुकूलकर्त्तव्यं, दुर्लभं वार्तमानिके ।
चलत्यशुद्धरूपा या, साऽपि नश्यति सर्वथा ॥२१८
रक्षणे व्यवहारस्य, धर्मोऽपि रक्षितो भवेत् ।
तदुच्छेदे तदुच्छेदः, समागच्छति सत्वरम् ॥२१६॥
तादृगसत्यव्यक्तीनामुन्मार्गपरिदर्शिनाम् ।
शास्त्रोपदेशकर्त्तव्ये शिक्षादानं विधीयते ॥२२०॥
मृत्युदृष्टान्तकं पूर्वं, दत्तं तत्तु विचार्यते ।
कर्मजन्यं स्वयं मृत्युः, तत्रान्यस्य न दोषता ।२२१।
द्वितीयमृत्युकाले च, कर्मसत्ता तु सर्वदा ।
किन्तु मारकव्यक्तीनां, दुष्टाशयो निमित्तकः ॥२२२
अधिकः सोऽपि मन्तव्यः दुष्टाशयवतां सदा ।
अतोऽपि मारकव्यक्तीनामवश्यं दोषभागिता ॥२२३
तथैवात्र स्वयं लोकाः कुर्वन्ति सर्वदाऽविधिम् ।
शुद्धां क्रियां न कुर्वन्ति तत्र तेषां तु दोषता ॥२२४
नोपदेशकव्यक्तीनां, इति सत्यं तु मन्यताम् ।
येषां चैवोपदेशेन, गच्छन्त्यविधिमार्गके ॥२२५॥
तादृक् क्रियां च कुर्वन्ति अतस्तेषां सदोषता ।
उपदेशकव्यक्तीनां, जायते नात्र संशयः ॥२२६॥

विश्वासघातताऽत्रापि, मन्तव्या ज्ञानिना सदा ।
येषां विश्वासमात्रेण, पतन्त्यविधिगर्त्तके ॥२२७॥
शरणागतजीवानां, मस्तकोच्छेदसादृशम् ।
कार्यमत्रापि विज्ञेयमुन्मार्गपोषिणां सदा ॥२२८॥
भवभीरुमनुष्येण, अतोऽविधेर्न पोषणम् ।
कार्यं केनापि रूपेण, प्राणैः कण्ठगतैरपि ॥२२९॥
विधिमार्गीय यत्नस्य, निरन्तरविधानतः ।
कदाचित्कस्य जीवस्य, शुद्धधर्मस्य चासिता ॥२३०
ततस्त्रिषु च लोकेषु, अमारिपटघोषणा ।
कारिता सदृशं चैव, फलमत्रावधार्यताम् ॥२३१॥
काचिदेकापि या व्यक्तिः, विधिपूर्वानुष्ठायिका ।
तत्तुल्यानैव मन्तव्या, अविधिकारि कोटिशः ॥२३२
अतः परोपकर्त्तृणां, गुरूणां तादृशी कदा ।
दुर्बलता न स्वीकार्या, प्राणैः कण्ठगतैरपि ॥२३३॥
विध्युपदेशता यत्र, दातव्या श्रोतुः सम्मुखे ।
अयोग्यस्य प्रदानेतु, प्रत्युताऽनर्थता भवेत् ॥२३४॥
अतो नीचाशयानां च, नैवशास्त्रोपदेशनम् ।
तेषां चैवोपदेशो तु, दोषाधिक्यं प्रजायते ॥२३५॥

पापकारकव्यक्तीनामपेक्षया च कारिते ।
उपदेशो जनानां च, सर्वथा दोषभागिता ॥२३६॥
अतो योग्येषु पात्रेषु, शुद्धशास्त्रोपदेशनम् ।
स्वयं शुद्धप्रवृत्तिश्च, कर्त्तव्या तीर्थरक्षणे ॥२३७॥
वार्त्तां च तादृशीं श्रुत्वा, स्थूलबुद्धिकमानुषः ।
वदति नैव कर्त्तव्या, चर्चा मस्तकस्फोटिका ॥२३८
"महाजनो येन गतः स पन्थाः" तद्वाक्यानुसारेण-
पूर्वपरंपरा याता, या क्रिया सैव तन्यते ।
सा जीतव्यवहारस्य, प्रवृत्तिः परिदृश्यते ॥२३९॥
यावत्पर्यन्ततीर्थं च, तिष्ठति भारते सदा ।
तावत्पर्यन्तकालं तु, जीतव्यवहृतिर्भवेत् ॥२४०॥
लोकसंज्ञां परित्यज्य, शुद्धशास्त्ररहस्यकम् ।
सूक्ष्मबुध्या च ज्ञातव्यं, धर्मतीर्थं तु रक्षता ॥२४१॥
शास्त्रापेक्षां च संत्यज्य, गतानुगतिकत्वतः ।
लोकप्रवाहरूपस्य, प्रामाण्ये परिमानने ॥२४२॥
लोकसंज्ञा समायाति, महाजनैर्विचार्यते ।
तज्जीतव्यवहारस्य, स्वरूपं कीदृशं भवेत् ॥२४३॥
लोकविश्वासकर्त्तव्ये, यदि कल्याणता भवेत् ।

तदा तु नैव कार्यं स्यादलौकिकं च सर्वथा ॥२४४॥

ज्ञानसारे प्रोक्तम् :—

स्तोका आर्या अनार्येभ्यः, स्तोका जैनाश्च तेष्वपि ।
शुद्धास्तेष्वपि स्तोकाः स्युः स्तोकास्तेष्वपि सत्क्रियाः।
श्रेयोर्थिनो हि भूयांसो, लोके लोकोत्तरे च न।
स्तोका हि रत्नवणिजः, स्तोकाश्च स्वात्मसाधकाः ॥
एकोऽपि शास्त्रनीत्या यः, वर्त्तते स महाजनः ।
किमज्ञसार्थकं शतमन्धस्य न पश्यति ॥२४७॥
यत्संविज्ञजनाचीर्णं, श्रुतवाक्यैरबाधितम् ।
तज्जीतं व्यवहाराख्यं, पारम्पर्यविशुद्धिमत् ॥२४८॥
यदाऽऽचीर्णमसंविज्ञैः, श्रुतार्थानवलम्बिभिः ।
न जीतं व्यवहारस्तदन्धसन्ततिसम्भवम् ॥२४९॥
आकल्पव्यवहारार्थं, श्रुतं न व्यवहारकम् ।
इतिवक्तुर्महत्तन्त्रे, प्रायश्चित्तं प्रदर्शितम् ॥२५०॥
तस्माच्छ्रुतानुसारेण, विध्येकरसिकैर्जनैः ।
संविज्ञजीतमालम्ब्यमित्याज्ञा पारमेश्वरी ॥२५१॥
यदि सर्वादरेणैव, पक्षपातो विधेः सदा ।
क्रियते तर्हि शास्त्रस्य, पाठानां का गतिर्भवेत् २५२॥

अविहिकया परमकयमसूयवयणं मणंति सव्वन्नू ।
पायच्छित्तं जम्हा, अकए गुरुयं कए लहुअं ॥२५३॥

उत्तरम् :—

नैतानि वचनान्येव, मूलत एव चाविधेः ।
प्रवृत्तिकारकाण्येव, किन्तु विधिप्रवृत्तिके ॥२५४॥
अनाभोगादिना चैव, ज्ञेया चाविधिदोषता ।
छद्मस्थेन न तद्रीत्या, क्रिया त्यागो वितन्यते २५५
तथाविधित्वज्ञानानामाद्याऽभ्यासे स्वभावता ।
वान्यदापि प्रवक्तव्या, अविधिदोषता खलु ॥२५६॥
निरनुबन्धरूपा सा, अतस्तस्य च तादृशम् ।
अनुष्ठानं न दोषाय, विधीनां बहुमानतः ॥२५७॥
गुर्वाज्ञा योगभावाच्च, तस्य च विधिरूपता ।
एतद्वार्ता प्रदृष्टव्ये, ज्ञेयानि बचनान्यपि ॥२५८॥
अतः कश्चिन्न दोषः स्यान्मन्तव्यः शुद्धबुद्धिना ।
अध्यात्मसारग्रन्थे च, यदुक्तं तत्प्रदर्श्यते ॥२५९॥
अशुद्धापि हि यच्छुद्धाः, क्रियाहेतुः सदाशयात् ।
ताम्रं रसानुवेधेन, सुर्णत्वमुपगच्छति ॥२६०॥
योऽविधिबहुमानात्तु, कुर्यादविधिना क्रियाम् ।

तस्य कर्त्तुरपेक्षायाः, विधीनां व्यवस्थापने ॥२६१॥
रसिकस्तस्य कर्त्ताऽपि, भव्य एव निगद्यते ।
तद्वार्त्तासु च प्रामाण्यं, योगदृष्टौ प्रदर्शितम् २६२॥
तात्त्विकः पक्षपातश्च, भावशून्या च या क्रिया ।
अनयोरन्तरं ज्ञेयं, भानु खद्योतयोरिव ॥२६३॥
उपसंहाररूपेण, यत्किञ्चित्प्रणिगद्यते ।
प्रस्तुतविषये चैव, सावधानेन श्रूयताम् ॥२६४॥
स्थानादिपञ्चयोगेषु, यस्य प्रयत्नशीलता ।
चैत्यवन्दनकादीनि, अनुष्ठानानि तस्य वै ॥२६५॥
सदनुष्ठानरूपेण, सर्वदा परिजायते ।
अतो हिं शुद्धभावेन, सदनुष्ठानकं भजेत् ॥२६६॥
चैत्यवन्दनकर्त्तव्ये, स्थानादियोगयोजने ।
वार्ताऽचलच्च तत्रैव, प्रसङ्गवशतो यदा ॥२६७॥
तीर्थोच्छेदस्तु को वस्तु, विधिप्ररूपणा तथा ।
तीर्थरक्षणकार्ये च, आवश्यकी मता सदा ॥२६८॥
इति वार्त्ता प्रसंगेन चर्चा चात्रैव चर्चिता ।
प्रकृतमनुसृत्यैव वक्तव्यं प्रणिगद्यते ॥२६९॥
चैत्यवन्दनकाद्याश्च, क्रियास्तु बाह्यरूपिकाः ।

तदात्मा स्थानवर्णादि, पूर्वोक्तयोग एव हि ॥२७०॥
यदि पूर्वोक्तयोगेषु. प्रयत्नशीलरूपतः ।
क्रिया कर्त्तव्यरूपेण, तन्यते शुद्धभावतः ॥२७१॥
तदैव सा क्रिया ज्ञेया, शुद्धशुद्धतरात्मिका ।
संस्कारपुष्टिताहेतु, सदनुष्ठानतां भजेत् ॥२७२॥
अनुक्रमेण ज्ञातव्या, कर्मक्षयनिमित्तका ।
सदनुष्ठानभेदानां, दृष्टव्योऽन्तिमयोगके ॥२७३॥
अनालम्बनयोगस्य, समावेशः प्रजायते ।
प्रीतिभक्तिवचोऽसङ्गसम्बन्धाच्चतुर्विधम् ॥२७४॥
चतुःष्वसङ्गताख्यं तु, अनालम्बनयोगके ।
समाविष्टं प्रज्ञातव्यं, योगदर्शनतः सदा ॥२७५॥
भावशुद्धित्वयोगेन[१], चैकानुष्ठानकं मतम् ।
चतुर्भेदस्वरूपेण, परिणमति सर्वदा ॥२७६॥
एवमेवानुष्ठानं च, चतूरूपेण जायते ।
प्रीतिभक्त्यादिकं सर्वं, तद्रूपेण प्रपद्यते ॥२७७॥
सर्वं कार्यं परित्यज्य, तत्क्रियार्थं प्रयत्नकम् ।
तन्यते यत्र तत्रैव, प्रीत्यनुष्ठानकं भवेत् ॥२७८॥

---

१ *तारतम्येन*

अत्यन्ताधिकप्रीतिस्तु, यदनुष्ठानके भवेत् ।
प्रीत्यनुष्ठानकापेक्षा, भक्त्यनुष्ठानके सदा ॥२७९॥
आलम्बनपदार्थेषु, विशेषादरबुद्धितः ।
प्रत्येकं तद्धि व्यापारः, अधिकशुद्धतां भजेत् २८०॥
यथा मातास्वभार्याणां, भोजनवस्त्रकादिना ।
पालने समरूपेऽपि, भावेन भिन्नता मता ॥२८१॥
स्वभार्यापालने प्रीतिः, भक्तिः स्वमातृरक्षणे ।
बाह्यसमेषु सर्वेषु, प्रीतिभक्तौ विशेषता ॥२८२॥
शास्त्रे दृष्टिं परिस्थाप्य, सर्वकार्येषु साधूनाम् ।
या प्रवृत्तिः शुभा जाता, तदा वचोऽनुष्ठानता ।२८३।
यदा संस्कारदृढं भूयात्, प्रवृत्तिकरणे क्षणे ।
शास्त्रस्मरणकर्त्तव्यस्यावश्यकं न विद्यते ॥२८४॥
यथा चन्दनद्रव्येषु, सुगन्धिस्तु स्वभावजा ।
तथा संस्कारदार्ढ्येन, धार्मिका नियमाः सदा ।२८५।
जीवनैकरसीभूताः, स्युरसङ्गानुष्ठानजाः ।
तदधिकारिता ज्ञेया, जिनकल्पिसु साधुषु ॥२८६॥
वचनासङ्गरूपायां, क्रियायां स्वल्पभिन्नकम् ।
शास्त्रप्रेरणतैकत्र, अन्यत्र प्रेरणा न हि ॥२८७॥

शास्त्रजनितसंस्कारबलेनैव प्रजायते ।
यथा चक्रपरिभ्रामं, दण्डेन प्रथमं मतम् ॥२८८॥
दण्डजनितवेगेन, पश्चात्तु परिजायते ।
सङ्गस्य परित्यागेन, अनालम्बनता भवेत् ॥२८९॥
अनालम्बनरूपत्वमसङ्गत्वानुष्ठानकम् ।
मन्तव्यं शुद्धभावेन, असङ्गयोगकांक्षिणा ॥२९०॥
आलम्बनत्वयोगस्तु, स्थानादिपञ्चरूपकः ।
इच्छास्थैर्यप्रवृत्त्यादिचतुर्भेदस्य योजने ॥२९१॥
पञ्चभिः सह कर्त्तव्ये, विंशतिकुलसंख्यकाः ।
तत्र प्रत्येकभेदानां, प्रीत्यनुष्ठानकादिना ॥२९२॥
योजने कुलसंख्या स्यादशीतिभेदरूपिका ।
आलम्बनेषु द्वैविध्यं, रूप्यरूपिविभेदतः ॥२९३॥
त एव ध्यानभेदाः स्युः, ध्यानभेदेषु चर्च्यते ।
धारणाशब्दसाम्येन, योगस्वरूपधारणे ॥२९४॥
विशेषरूपता काचित्प्रसङ्गेन प्रदर्शिता ।
योगविंशतिग्रन्थात्तु, नातोऽप्रस्तुतरूपता ॥२९५॥
अधुना धारणायोगं, प्रकृत्यमनुसृत्य वै ।
अवशिष्टं प्रतन्येत, अष्टदृष्टिस्वयोगतः ॥२९६॥

दोषाणां नाशकर्त्तव्ये, तृप्तिं तु परमां भजेत् ।
समतोन्वितसंयोगाद्वैरविनाशता भवेत् ॥२९७॥
ततः ऋतंभराप्रज्ञा; जायते योगशुद्धितः ।
तत्स्वरूपत्वज्ञानार्थं, प्रोच्यते शास्त्रयोगतः ॥२९८॥
द्वितीयापूर्वयत्नत्व, भाविसामर्थ्ययोगतः ।
प्रभवेयं समाधिप्रज्ञारूपात्त्ंभरा मता ॥२९९॥

प्रोक्तं ज्ञानसाराष्टके :—

सन्ध्येव दिनरात्रिभ्यां, केवलश्रुतयोः पृथक् ।
बुधैरनुभवो दृष्टः, केवलार्कारुणोदयः ॥३००॥
योगानां शुभचिह्नानि, प्रोक्तानि चान्यशास्त्रके ।
योगाचार्येण दृष्टानि, पञ्चमीदृष्टितस्तथा ॥३०१॥
अत्रैव तानि योज्यानि, धारणाशुभामिच्छता ।
कान्ताख्ययोगदृष्टिषु, तारा समप्रकाशता ॥३०२
दृढातत्त्वमीमांसास्याद्धारणा दृढधारणे ।
अन्यश्रुतस्य नो तत्र, वासनापि प्रजायते ॥३०३॥
यथान्यकार्यकर्त्तव्ये, सत्यपि स्त्रीमनो यथा ।
स्वपत्यूपरि सर्वं च, नान्यत्र परितिष्ठति ॥३०४॥

तथैव धर्मिजीवानां कर्त्तृत्वेऽप्यन्यकार्यके ।
न तत्र रागरक्तत्वं, अपि तु श्रुतधर्मके ॥३०५॥
तथाप्रकारके ज्ञाने, विघ्नविचारणा भवेत् ।
भोगानां भवहेतूनां, विचारो नैव तन्यते ॥३०६॥
न गुणो दोषना नैव, विषयरूपभावतः ।
गुणापगुणकार्यत्वं, मनसा नैव तन्यते ॥३०७।
मायाविजनतां ज्ञात्वा, लङ्घनं तन्यते सदा ।
सत्यस्वरूपज्ञातृत्वाद् भववृद्धेस्तु मीयते ॥३०८॥
तत्र मनो न चाञ्चल्यं, नैव भ्रान्तिस्वरूपकम् ।
भोगांस्त्वसत्यरूपांश्च, ज्ञात्वा ततो निवर्तते ३०९॥
भवभीत्या तु नो तत्र, निवर्तने च हेतुता ।
किन्तु सत्यं परिज्ञाय, असत्यं परित्यज्यते ॥३१०॥
तादृशीं दृष्टितां येन, प्राप्ता भव्यात्मना सदा ।
तेनैव भवसामुद्रं, तीर्यते नात्र संशयः ॥३११॥
धारणाया विचारस्तु, अनेकदृष्टिबिन्दुतः ।
अनेकयोगग्रन्थनामाश्रयाच्च वितन्यते ॥३१२॥
तत्रापि दृष्टिदोषेण, शास्त्रयोगविरुद्धतः ।
तथाऽनुभवबद्धीनामभावतश्च यत्कृतम् ॥३१३॥

प्ररूपणं विरुद्धं चेत्, भूयान्मिथ्यात्वदुष्कृतम् ।
ज्ञानियोगिजनेनैव, कृपां विधाय सूच्यताम् ।३१४।

॥ इतिश्रीशास्त्रविशारदजैनाचार्यविश्ववन्द्यपूज्य-
पादसूरिचक्रचक्रवर्त्तिजङ्गमयुगप्रधानसकला-
गमरहस्यवेदिआजन्मपरमब्रह्मचारिशुद्ध-
प्ररूपकाचार्यदेव श्रीविजयधर्मसूरी-
श्वरशिष्येणन्यायविशारदन्याय-
तीर्थोपाध्यायमङ्गलविजयेन-
निर्मिते योगप्रदीपे धार-
णाख्यषष्ठयोगाङ्गव-
र्णननामाऽष्टाद-
शतमःप्रकाशः
समाप्तः ॥

---

अनन्तज्ञानरूपाय, दर्शनानन्तधारिणे ।
चारित्रानन्तयुक्ताय, अनन्तवीर्यशालिने ॥१॥
प्रातिहार्याष्टदीप्ताय, पूर्णातिशयरूपिणे ।
पञ्चत्रिंशच्च वाणीनां, गुणेन सहिताय च ॥२॥
त्रैलोक्यध्येयरूपाय त्रिलोकीपूजिताय च ।
त्रिलोकीजनवन्द्याय त्रिलोकी जनस्वामिने ॥३॥
देवनरेन्द्रनाथाय, जगन्नाथाय सर्वदा ।
परमानन्दरूपाय, नमः त्रैलोक्यतायिने ॥४॥
आदितीर्थप्रतिष्ठाय, आदितीर्थकराय च ।
आदिनिर्ग्रन्थदेवाय, आदिभव्यत्वबोधिने ॥५॥
आदिकैवल्यज्ञानाय, आदीश्वराय देहिनाम् ।
आदिजिनेन्द्रदेवाय, ऋषभस्वामिने नमः ॥६॥
विंशतिश्चाजितादीनां, यत्र निर्वाणताऽभवद् ।
तेषां गणधराणां च, शुभस्वाम्यन्तस्वामिनाम् ॥७॥
कोटिशः साधुवृन्दानां, मोक्षप्राप्तिश्च यत्र वै ।
तस्मै गिरिवरेन्द्राय, सम्मेताय नमोनमः ॥८॥
त्रिकालं वन्दनं तेषां, कृत्वा स्मृत्वा गुरुं तथा ।
योगप्रदीपग्रन्थेषु, ध्यानव्याख्या वितन्यते ॥९॥

ध्यानं चतुर्विधं ज्ञेयं, चार्त्तरौद्रद्वयं खलु ।
तृतीयं धर्मध्यानं स्याच्छुक्लध्यानं चतुर्थकम् ॥१०॥
आद्ये द्वे हेयतारूपे, संसारवृद्धिहेतुके ।
अन्त्ये द्वे मोक्षमार्गस्य, निमित्ते परिकीर्त्तिते ॥११॥
आर्त्तरौद्रकध्यानानां, हेयस्वरूपधारिणाम् ।
आदौ व्याख्या प्रकारस्तु, स्वबोधाय वितन्यते १२
शोकाक्रन्दनभावेषु, परितापविलापके ।
पीडानिदानसद्भावे, आर्त्तध्यानं प्रकथ्यते ॥१३॥
तच्चतुर्विधरूपं स्यादिष्टानां विरहादितः ।
इष्टवियोगसद्भावे, या चिन्ता परिजायते ॥१४॥
मातापुत्रकलत्राणां, पिताभ्रातादिप्राणिनाम् ।
आयुःपूर्णे च सद्भावे, वियोगो दुःखदायकः ॥१५॥
वियोगो मे कदा नो स्यादिति विचाररूपकम् ।
इष्टवियोगचिन्ताख्यं, प्रथमं परिकीर्त्तितम् ॥१६॥
अनिष्टपितृबन्धूनां, संयोगो यदि जायते ।
तद्वियोगः कदा मे स्यादिति चिन्ता तु या भवेत् ॥१७
तदपि दुःखहेतु स्यादार्त्तध्यानं द्वितीयकम् ।
शूलज्वरादिरोगाणामत्यन्तदुःखदायिनाम् ॥१८॥

सद्भावे या च चिन्ता स्यात्संसारवृद्धिहेतुका ।
तृतीयमार्त्तध्यानं तज्जैनशास्त्रे प्ररूपितम् ॥१६॥
कामोपहतचित्तेन, पतितपरिणामिना ।
जनेन परिचिन्त्येत, देवेन्द्रनृपचक्रिणाम् ॥२०॥
वैभवसामग्रीं दृष्ट्वा भवान्तरे ममापि हि ।
अनेन तपसा भूयात्समृद्ध्यादिकतादृशम् ॥२१॥
इत्येवं चिन्तनं चैव निदानं प्रणिगद्यते ।
भोगविषययाञ्चातः भोगोऽपि परिप्राप्यते ॥२२॥
संसारकूपपाताय सा याञ्चा दुःखदायिका ।
यतः संसारवृद्धिः स्याद्भवभ्रमणता ततः ॥२३॥
यत्र भोगास्ततो रोगाः यत्र रोगास्ततोऽशमः[१] ।
यत्र दुःखं च तत्रापि दुर्ध्यानं सर्वदा भवेत् ॥२४॥
दुर्ध्याने सुखलेशोऽपि वस्तुगत्या न जायते ।
अतो हि चार्त्तत्यागाय सदा यत्नो विधीयताम् ॥२५
जन्मदुःखं जरादुःखं मृत्युदुखं पुनः पुनः ।
तत्कथं सुखरूपं स्याज्ज्ञानिना परिचिन्त्यताम् ॥२६

१ अशमे दुःखम्

आर्त्तत्यागं विना नैव कुत्रापि सुखशान्तिता ।
न भवेदिति मन्तव्यं संसारे सर्वदा तथा ॥२७॥
षड्गुणस्थानपर्यन्तमार्त्तं ध्यानं तु सम्भवेत् ।
अग्रे तु नैव विज्ञेयं चारित्रपरिशुद्धितः ॥२८॥
प्रथमे तस्य प्राधान्यं चतुर्थादिषु मन्दता ।
अग्रे यथा यथा गच्छेत्तथा तस्यैव मन्दता ॥२९॥
चतुर्गत्याख्यसंसारे साम्परायिकयोगतः ।
सर्वत्र परिजायेत आर्त्तं तु सर्वप्राणिनाम् ॥३०॥
आर्त्तध्यानप्रभावेन भ्रमन्ति संसृतौ सदा ।
अतो हि तत्परित्यागे यत्नः श्रेयस्करो मतः ॥३१॥
त्यक्त्वा निदानध्यानं च आर्त्तध्यानानि त्रिण्यपि ।
प्रमत्तगुणस्थानेषु भवन्ति तु प्रमादतः ॥३२॥
रौद्रध्यानस्वरूपं तु लक्षणेन विधानतः ।
चिन्तनीयं विशेषेण दुर्गतिगर्त्तपातनम् ॥३३॥
सत्त्वव्यपादनोद्बन्धपरितापनकादीनाम् ।
हिंसानुबन्धिकार्याणां विचारो रौद्रिकः स्मृतः ।३४।
हिंसानुबंन्धिनामाख्यं रौद्रं तु प्रथमं मतम् ।
नरकगतिसम्पाते कारणं प्रथमं खलु ॥३५॥

रागद्वेषप्रभावेन जीवानां हनने तथा ।
बन्धने ताडने चैव विचारो रौद्रपोषकः ॥३६॥
हास्यलोभादिदोषेण चाऽसत्यजल्पनं कृतम् ।
तदपि सत्यरूपेण संस्थापितं कुबुद्धितः ॥३७॥
निरन्तरा तु सा चिन्ता ख्यातिजात्यादिलोभतः ।
मृषानुबन्धिनामाख्यं रौद्रं ध्यानं द्वितीयकम् ॥३८॥
जीवमारणकौशल्यपूर्वेणैव निरन्तरम् ।
तीव्राशुभेन स्वान्तेन दुःखदानविचारणम् ॥३९॥
मृषानुबन्धिध्यानं हि ज्ञेयं तदपि सर्वदा ।
असत्यकार्यवृत्तौ च क्रूरता स्पष्टरूपतः ॥४०॥
द्रव्यहरणकार्याणामुपाये मानसं सदा ।
रुध्वा विचारकर्त्तव्ये या चिन्ता परिजायते ॥४१॥
स्तेयानुबन्धिध्यानं तद्रौद्राख्यं च तृतीयकम् ।
दुष्टविचारसन्दोहो जायते नात्र संशयः ॥४२॥
विषयार्जनरक्षायाः व्ययस्य कारणे तथा ।
विचारे सततं कार्ये वैषयिकानुबन्धि तत् ॥४३॥
येन केन प्रकारेण विषयप्रापणं भवेत् ।
तदा सर्वत्र सौख्यं स्यादन्यथा तु विटम्बना ॥४४॥

ताद्दशी मान्यता चाष्टादशपापस्य पुष्टिदा ।
पापात्कथं सुखं भूयादिति स्वान्ते च चिन्त्यते ॥४५
रक्षणेऽपि सदा ज्ञेयं दुर्ध्यानं दुःखदायकम् ।
यदि चौरः समागच्छेत्तदा किं क्रियते मया ॥४६।
राजदण्डाग्निभीतीनां शङ्कास्थानं तु सर्वदा ।
दुर्ध्यानसाधनं सर्वरक्षणं परिकीर्त्त्यते ॥४७॥
व्यये तु महती चिन्ता नूनताया विचारणे ।
केन रूपेण सा हानिः पूर्यते केन योगतः ॥४८॥
इत्यपि चिन्तनं ज्ञेयं रौद्रध्यानस्य पोषणम् ।
अतः सर्वत्र रौद्रं तद्विषयादिषु जायते ॥४९॥
आये दुखं व्यये दुखं सर्वत्र दुःखमेव हि ।
चतुर्थरौद्रध्यानं तत्कीर्त्तितं शास्त्रयोगतः ॥५०॥
गुणपञ्चकपर्यन्तं, तद्ध्यानं परिप्राप्यते ।
त एव स्वामिनो ज्ञेया, अन्यत्र न कदाचन ॥५१॥
नकरगतिसम्पाते, साधनं परमं मतम् ।
दुर्गतिदूतिरूपं तद्धेयं, तु सर्वथा भवेत् ॥५२॥
अन्यधर्मीयमन्तव्यं, ध्यानं पूर्वं निगद्यते ।
पश्चात्त जैनध्यानानां, स्वरूपं प्रतिपाद्यते ॥५३॥

उत्तमध्यानव्याख्या तु, लक्षणेन विधानतः ।
अधिकारिस्वरूपं च, यथा शक्त्या निरूप्यते ॥५४॥
ध्येयवस्तुषु स्वान्तस्य, वृत्तीनामेकतानता ।
तद्ध्यानमिति ज्ञातव्यं, जैनेतरीययोगतः ॥५५॥
ध्यानाधिकारिजीवानां, योग्यता प्रणिगद्यते ।
तादृशीं योग्यतां प्राप्य, ध्यानी ध्यानं समाचरेत् ५६
गुरुशास्त्रीयवाक्येषु, विश्वासः सर्वथा मतः ।
इन्द्रियस्वान्तवृत्तीनां, विषयात्परिमोचनम् ॥५७॥
कायेन मनसा चैव, यमानां परिपालनम् ।
नियमपालनं नित्यं, तपसि चादरः सदा ॥५८॥
अनावश्यकवस्तूनां, सर्वथा परित्यागनम् ।
स्थानान्नवस्त्रपात्राणामत्यल्पं परिधारणम् ॥५९॥
ध्येयसम्बन्धिग्रन्थेभ्यः अन्यग्रन्थो न पठ्यते ।
ध्येयप्रभावरहस्य—दर्शिका श्रूयते कथा ॥६०॥
ध्येय विरुद्धश्रोतव्ये, श्रवणं नैव दीयताम् ।
कुटुम्बपरिवाराणां, ममतां सर्वथा त्यजेत् ॥६१॥
प्रसिद्धदैनिकाद्यं च, पत्रं साप्ताहिकं तथा ।
ध्यानिना पठ्यते नैव, यतो विक्षेपता भवेत् ॥६२॥

सभासमितिस्थानानां, वर्जनं सर्वथा मतम् ।
स्वयशोगुणवृद्ध्यर्थं, कुत्रापि नैव चेष्टनम् ॥६३॥
परचर्चा न कर्त्तव्या, परदोषो न दृश्यताम् ।
तेषां च चिन्तनं नैव, कर्त्तव्यं ज्ञानिना कदा ॥६४॥
मधुरं प्रियतायुक्तं, वक्तव्यं योगिना सदा ।
प्रयोजनं विना नैव वक्तव्यं क्रियतांक्वा ॥६५॥
सदा मौनं च कर्त्तव्यं, चित्तविषादवर्जनम् ।
अहंकारादि भावानां स्पर्शनं नैव तन्यताम् ॥६६॥
मानसन्मानरूपाणां भावानां नैव प्रार्थनम् ।
स्वीयस्त्र्यादिकसम्पत्तीनां संगं सर्वथा त्यजेत् ६७
ध्येयप्रीतिकराणां च ग्रन्थानां पठनं सदा ।
स्वेष्टनाम्नश्च मन्त्राणां जपनं विधिपूर्वकम् ॥६८
इष्टदेवगुणानां वै प्रभावस्यैव चिन्तनम् ।
तस्य दयालुभावेषु विश्वासः क्रियतां सदा ॥६९
ध्येयसाधनस्थानादिमालावस्त्रासनं तथा ।
स्त्र्यादिसर्वसामग्रीस्नानं विना न स्पृश्यताम् ।७०।
जागर्या नाधिका कार्या शयनं नाधिकं तथा ।
भोजनं चाधिकं नैव लङ्घनं नाधिकं तथा ॥७१॥

तम्बाक्वादिकनाङ्गानां[1] दुष्टानां व्यसनं त्यजेत् ।
मांसमद्यादिवस्तूनां सर्वथा वर्जनं वरम् ॥७२॥
नोष्णाभुक्तिश्च कर्त्तव्या नाम्ला तिक्ता न माधुरी ।
सर्षपादिकतैलानां पलाण्डुलसुनादीनाम् ॥७३॥
गज्जरपनसादीनां भोगो नैव विधीयताम् ।
तथा दध्यादिवस्तूनां भोगो योगविबाधकः ॥७४॥
मिष्टलिम्बूफलं चैव बिल्लीफलं तथैव च ।
कदलीफलमुख्यं च भोजनं योगिनां मतम् ॥७५॥
गृहे कस्यापि नो भुक्तिः परहस्तेन नो तथा ।
शुद्धरूपं स्वयं दृष्ट्वा भोजनं परिभाव्यताम् ॥७६
यत्प्रोक्तं तच्च सम्पूर्णं स्वान्ते ग्राह्यं तु सर्वथा ।
तथा नियतस्थानादिनियतंसमयस्तथा ॥७७॥
नियतमासनं चैव संसेव्यमन्त्रकं स्मरेत् ।
ध्यानभेदस्वरूपं च तच्छास्त्रेणैव कथ्यते ॥७८॥
ध्यानमनेकधा प्रोक्तं स्थूलसूक्ष्मादिभेदतः ।
स्वरूपं कथ्यते तस्य श्रूयतां सावधानतः ॥७९॥

---

*[1] कष्टानां व्यसनानां*

सहस्रदलसंख्याकं ब्रह्मरन्ध्रे च पङ्कजम् ।
महापद्माभिधानं तद्विशुद्धं श्वेतवर्णकम् ॥८०॥
शुद्धतेजोमयं ज्ञेयं वर्णान्वितं च पत्रकम् ।
हसक्षमलवरयुं हसखफ्रें वर्णात्मकम् ॥८१॥
द्वादशबीजसंयुक्तं कर्णिका तु निगद्यते ।
अकथं त्रीणि वर्णानि तिष्ठन्ति च त्रिकोणके ८२
त्र्यस्रमध्ये च विज्ञेयं हलक्षेन त्रिकोणकम् ।
तन्मण्डपे च ओंकारः सदा सिद्धो विराजते ॥८३
योगिना परिचिन्त्येत तत्रैव नादबिन्दुकम् ।
पीठमेकं च राजेत द्वौ हंसौ तत्र तिष्ठतः ॥८४॥
पादुका खलु तत्रापि सर्वगुरुर्विराजते ।
द्विभुजाभ्यां च संयुक्तः त्रिनेत्रपरिशोभितः ॥८५
शुक्लवस्त्रं समाच्छाद्य चन्दनलिप्तगात्रकः ।
श्वेतमालासमायुक्तः सर्वदा परिशोभितः ॥८६॥
तादृशगुरुध्यानेन स्थूलध्यानं तु सिद्ध्यति ।
अग्रे च सर्वध्यानानां सोऽपि योग्यो भविष्यति ८७
प्रोक्तं विश्वसारतन्त्रे :—
प्रातः शिरसि शुक्लेऽब्जे त्रिनेत्रं द्विभुजं गुरुम् ।

वराऽभयं करं शान्तं स्मरेत्तन्नामपूर्वकम् ॥८८॥

कङ्कामालिनीतन्त्रेऽपि प्रोक्तम् :—

सहस्रदलपद्मस्थमन्तरात्मानमुज्ज्वलम् ।
तदूर्ध्वं नादबिन्दोश्च मध्ये सिंहासनोज्ज्वले ॥८९॥
तत्र निजगुरुं नित्यं रजताचलसन्निभम् ।
वीरासनसमासीनं सर्वाभरणभूषितम् ॥९०॥
शुक्लमाल्याम्बरैर्युक्तं वरदाभयपाणिकम् ।
वामोरुशक्तिसंयुक्तं कारुण्येनावलोकितम् ॥९१॥
प्रियया सव्यहस्तेन धृतचारुकलेवरम् ।
वामेनोत्पलधारिण्या रक्तालङ्कारिण्या युतम् ॥९२॥
ज्ञानानन्दसमायुक्तं स्मरेत्तन्नामपूर्वकम् ।
तादृग्गुरुपदं ज्ञेयं ध्यानार्थमत्र गृह्यताम् ॥९३॥
तादृग्गुरुस्वरूपस्य चिन्तनं स्थूलध्यानकम् ।
ततोऽग्रे किल ज्योतिष्करूपं तु प्रविचार्यताम् ॥९४॥
गुह्यदेशेषु लिङ्गस्य मूले च मध्यस्थानके ।
कुण्डलिनीवक्राकारैः परिवृत्यैव तिष्ठति ॥९५॥
जीवात्मा खलु तत्स्थाने दीपशिखासदृक्स्थितः ।
ज्योतिर्मयप्रभूणां च तत्स्थाने स्मरणं भजेत् ॥९६॥

तदेव ज्योतिष्कं ध्यानं तन्त्रशास्त्रे परिस्मृतम् ।
भ्रूमध्ये मानकस्योर्ध्वभागे ओंकारतां भजेत् ॥९७॥
शिखामालासमायुक्तं ज्योतिष्कं परितिष्ठति ।
तस्यैव ध्यानकर्त्तव्ये तेजोध्यानं प्रजायते ॥९८॥
योगसिद्धिस्ततो ज्ञेया आत्मप्रत्यक्षकारिका ॥
शुद्धाशक्तिः प्रजायेत आत्मनः सुखदा सदा ॥९९॥

सूक्ष्मध्यानस्वरूपम्—

पूर्वपुण्योदयेनैव साधकस्यैव कुण्डली ।
जागृद्दशां च सम्प्राप्य मीलित्वा चात्मना सह १००
नेत्ररन्ध्रस्य मार्गेण निष्क्रम्य चोर्ध्वभागके ।
राजमार्गाभिधाने च स्थले वै परिभ्राम्यति ॥१०१॥
भ्रमणकार्यकर्त्तव्ये चाञ्चल्यसूक्ष्मतादितः ।
ध्यानयोगेषु तस्याश्च, दर्शनं नैव जायते ॥१०२
शाम्भवी योगमुद्रायाः, कर्त्तव्यसमये तथा ।
कुण्डलिन्याश्च ध्याने वै, सूक्ष्मध्यानं निगद्यते १०३
तद्ध्यानं कठिनं ज्ञेयं, गोपनीयं च सर्वथा ।
देवानां दुर्लभं तच्च, तन्त्रशास्त्रेषु कीर्त्तितम् १०४

स्थूलध्यानाच्च ज्योतिर्ध्यानं शतगुणकं भवेत् ।
ज्योतिर्ध्यानाच्च सूक्ष्मत्वध्यानं लक्षगुणं स्मृतम् ॥
आत्मप्रत्यक्षता यस्माद् ध्यानतः परिजायते ।
तत्कथं नैव श्रेष्ठं स्यादिति मनसि चिन्त्यताम् १०६
श्रीभगवद्गीता अ० ६ ध्यानोल्लेखश्लोका :—
समं कायशिरोग्रीवं, धारयनचलं स्थिरः ।
सम्प्रेक्ष्य नासिकाग्रं स्वं, दिशाश्चानवलोकयन् १०७

अ० ६ । श्लो० १३

सङ्कल्पप्रभवान् कामांस्त्यक्त्वा सर्वानशेषतः ।
मनसैवेन्द्रियग्रामं विनियम्य समं ततः ॥१०८॥
शनैः स्वरूपतां ध्यायेद् बुध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा, न किञ्चिदपि चिन्तयेत् ६
यतो यतो निश्चरति, मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैव, तद्वात्मनि वशं नयेत् ॥११०॥
निर्गुणं च निराकारं, निराकारं च सद्गुणं ।
निर्गुणं चैव साकारं, साकारं सद्गुणं तथा १११
अद्वैतद्वैततत्त्वेषु, चतुर्भङ्गी निरूप्यते ।
प्रथमाद्वैतभावेषु, दृश्यते लोकहेतवे ॥११२॥

आनेर्वाच्यमचिन्त्यं च, अवाङ्मनसगोचरम् ।
निष्क्रियं शुद्धब्रह्मत्वं, निराकारं च निर्गुणम् ११३
गुणातीतोऽविनाशी च, अजो मायापतिस्तथा ।
महेश्वरो जगत्कर्त्ता, निराकारश्च सद्गुणः ॥११४॥
मायातीतोऽविनाशी च, दिव्यविग्रहधारकः ।
स एव भगवान् ज्ञेयः, साकारो निर्गुणस्तथा ॥११५
अजश्चैवाविनाशी च, लीलाविहारयुक् सदा ।
दिव्यया प्रकृत्या चैव, खेलको दिव्यवैग्रहः ॥११६
स विराट् स्वरूपस्तु, ईश्वरः सर्वरूपकः ।
साकारः सगुणश्चैव भगवान् परिकीर्त्तितः ॥११७

द्वैते चतुर्गुणयोजने—

दयालुः सर्वजीवेषु- सर्वशक्तिसमन्वितः ।
न्यायकारी तु ज्ञातव्यः, निराकारश्च निर्गुणः ॥११८
सञ्चालकश्च सर्वत्र, सर्वसंसारिप्राणिनाम् ।
सगुणः स निराकारः, द्वैतरूपश्च कीर्त्तितः ॥११९॥
भक्तानां परित्राणाय, मायातो देहधारी च ।
सर्वदा निर्गुणो ज्ञेयः, साकारो निर्गुणस्तथा ॥१२०

भक्तैश्च सह लीलायाः, कर्त्ता गुणाकरः सदा ।
लीलामयस्तु ज्ञातव्यः साकारः सद्गुणस्तथा ॥१२१॥

सीतारामध्यानस्वरूपम्—

कालाम्भोधरकान्तिकान्तमनिशं वीरासनाध्यासितम्
मुद्रां ज्ञानमयीं दधानमपरं, हस्ताम्बुजं जानुनि ॥
सीतां पार्श्वगतां सरोरुहकरां, विद्युन्निभं राघवम् ।
पश्यन्तं मुकुटां गदादिविविधकल्पोज्ज्वलाङ्गं भजे १२२

सिंहासनारूढरामध्यानस्वरूपम्—

नवदूर्वादलं श्यामं, पद्मपत्रायतेक्षणम् ।
रविकोटिप्रभायुक्तं, किरीटेन विराजितम् ॥१२३॥
कोटिकन्दर्पलावण्यं, पीताम्बरसमावृतम् ।
दिव्याभरणसम्पन्नं, दिव्यचन्दनलेपनम् ॥१२४॥
अयुतादित्यसंकाशं, द्विभुजं रघुनन्दनम् ।
वामभागे समासीनां, सीतां काञ्चनसन्निभाम् १२५
सर्वाभरणसम्पन्नां, वामाङ्के समुपस्थिताम् ।
रक्तोत्पलकराम्भोजां, वामेनालिंग्यसंस्थितम् १२६॥
सर्वातिशयशोभाढ्यं, दृष्ट्वा भक्तिसमन्वितम् ।
तादृशं रामस्वरूपं च, स्मर्यतां सर्वकामिना ॥१२७॥

बालगोपालध्यानस्वरूम्—

अव्याद् व्याकोपनीलाम्बुजरुचिरारुण

भोजनेत्रेऽम्बुजस्थः ।

बालजंघाकटोरः स्थलकलितरणत्किङ्कणीको मुकुन्दः ।

दोर्भ्यां हैयङ्गवीनं विद्यते विमलं पायसं विश्वबन्धः ।

गोगोपीगोपवीतोरुरुनखविलस

त्कण्ठभूषश्चिरं वः ॥१२८॥

वनभोजनकर्त्तृ कृष्णध्यानम्—

बिभ्रद्वेणुं जठरपटयोः, शृङ्गवेत्रे च कक्षे

वामे पाणौ मसृणकवलं, तत्फलान्यंगुलीषु

तिष्ठन्मध्ये स्वपरिसुहृदो हासयन्नर्ममिश्र

स्वर्गे लोके मिषतं बुभुजे, यज्ञभुग्बालकेलिः ॥१२९॥

श्रीमद्भागवत १०-१३—११ ।

विश्वमोहनश्रीकृष्णध्यानम्—

अंसालम्बितवामकुण्डलधरं, मन्द्रोन्नतभ्रू तलम्

किञ्चित्कुञ्चितकोमलाधरपुटं, साचिप्रसारीक्षणम्

आलोलांगुलि पल्लवैर्मुरलिकामापूरयन्तं मुदा

मूले कल्पतरोस्त्रिभंगललितं, ध्यायेज्जगन्मोहनम् १३०

श्रीकृष्णनटवेषध्यानम्—

श्यामं हिरण्यपरिधिं, वनमाल्यबर्ह
धातुप्रवालनटवेषमनुव्रतांसे ।
विन्यस्तहस्तमितरेण धुनानमब्जं
कर्णोत्पलालककपोलमुखाब्जहासम् ॥१३१॥

श्रीमद्भागवत १०—२३—२२

बर्हापीडं नटवरवपुः, कर्णयोः कर्णिकारं
बिभ्रद्वासः कनककपिशं, वैजयन्ती च मालाम् ।
रन्ध्रान्वेणोरधरसुधया, पूरयन् गोपवृन्दै-
र्वृन्दारण्यं स्वपदरमणं, प्राविशद् गीतकीर्त्तिः १३२

श्रीमद्भागवत १०-२१-५।

वृन्दावनविहारिराधाकृष्णध्यानम्—

अङ्गश्यामलिमच्छटाभिरभितो, मन्दीकृतेन्दीवरम्
जाड्यं जागुडरोचिषां विदधतं पट्टाम्बरस्य श्रिया
वृन्दारण्यविलासिनं हृदिलसद्दामाभिरामोदरं
राधास्कन्धनिवेशितोज्ज्वलभुजं ध्यायेत
दामोदरम् ॥१३३॥

गीतावक्ताध्यानं—

प्रपन्नपारिजाताय, तोऽत्रवेत्रैकपाणये ।
ज्ञानमुद्राय कृष्णाय, गीतामृतदुहे नमः ॥१३४॥
श्रीकृष्णरामदेवानां, पञ्चमुखशिवादीनाम् ।
नैकावस्थास्वरूपेण, ध्यानभेदाः प्रकीर्त्तिताः ॥१३५
सर्वत्र रागप्राधान्यं, द्वेषादिकं च सर्वथा ।
मोहरूपं कदाचिच्च, वीतरागं न कुत्रचित् ॥१३६॥
अन्यत्र कामिरूपं च, चोररूपं च वर्णितम् ।
वीतरागस्वरूपं तु, दृश्यते नहि कुत्रचित् ॥१३७॥
तादृशध्यानकर्त्तॄणां, रागद्वेषादिकं विना ।
अन्यत्फलं न प्राप्येत, ततोऽपि भववृद्धिता ॥१३८॥
संसारभ्रान्तिसम्पूर्णा नापयाति कदाचन ।
अतस्तादृशव्यक्तीनां, ध्यानं तु दुःखहेतवे ॥१३९॥
अतः सर्वं परित्यज्य, वीतरागस्वरूपकम् ।
ईश्वरं वर्णितं पूर्वं, तद्ध्यानं सर्वसौख्यदम् ॥१४०॥

जैनाभ्या ध्यानस्वरूपं—

ध्यानरूपं तु जैनानां, कीदृशं वर्णितं मतम् ।
तत्सर्वं प्रतिपाद्येत, श्रूयतां सावधानतः ॥१४१॥

संहननं तु चात्रैव, उत्तमं परिगृह्यते ।
आद्यत्रयं च ध्यानादौ, उत्तमत्वेन कीर्त्तितम् १४२
वज्रर्षभेन नाराचं, ऋषभनाराचं तथा ।
संहननं तु नाराचं, तत्त्रितयं निरूपितम् ॥१४३॥
तन्मध्ये येन केनापि, युक्तो ध्यानाधिकारकः ।
पूर्वोक्तयोगसामग्रीयुक्तश्च परिगृह्यते ॥१४४॥
तस्यैवैकपदार्थे च, ध्यानं चिन्तानिरोधकम् ।
चलचित्तादिकं त्यक्त्वा, स्थिररूपेण चिन्तनम् १४५
वस्तुस्वरूपचिन्तायां, सर्वथा वस्तुरूपकम् ।
द्रव्यगुणपर्यायेण नित्यानित्यत्वरूपतः ॥१४६॥
सदसत्त्वप्रकारेण, सामान्येन विशेषतः ।
अपेक्षातश्च एकस्मिन् चिन्तनं सुखदायकम् १४७
दृढमनोबलं यत्र, चिन्तने परिगृह्यते ।
योगिना शुद्धस्वान्तेन, चिन्तने वस्तु प्राप्यते १४८
हेयं ध्यानं च सम्प्रोक्तमार्त्तरौद्राभिधानकम् ।
धर्मशुक्लत्वध्यानस्य, स्वरूपं प्रणिगद्यते ॥१४९॥
आदौ तु धर्मध्यानस्य, वर्णनं समुपस्थितम् ।
पश्चाच्च शुक्लध्यानस्य, स्वरूपं प्रणिगद्यते ॥१५०॥

अनादिवासनायोगान्मोहकर्मप्रयोगतः ।
तत्त्वाभ्यासविहीनेन, धर्मध्यानं तु विस्मृतम् १५१
दुष्टमानसयोगेन, प्रमादपरिसेवनात् ।
मिथ्यात्वभावनायोगाद्धर्मध्यानं तु विस्मृतम् १५२
धर्मध्यानं विना सर्वं, मानुष्यत्वं च निष्फलम् ।
रत्नत्रयीं विना शुद्धं, धर्मध्यानं तु नो भवेत् १५३
जैनागमं विना नैव शुद्धात्मना च ज्ञायते ।
शुद्धं रूपं तु नान्यत्र, कदापि परिप्राप्यते ॥१५४॥
यत्रैकान्तेन नित्यत्वं, अनित्यत्वं च यत्र वै ।
यत्र व्यापकतायुक्तः, अङ्गुष्ठपर्वमात्रकः ॥१५५॥
आत्मसत्ता तु यत्रैव, सर्वथा नैव मन्यते ।
नित्यतादिविचारस्तु, तत्र कथं विधीयते ॥१५६॥
एतादृग्वासना ज्ञेयाः, धन्यास्ते गुरवो मताः ।
धन्यास्ते शुभसंयोगाः, धर्मध्याने सहायकाः १५७
शुद्धयोगत्वसम्पन्नाः, शुद्धयोगप्रकाशकाः ।
ते यशोविजया धन्याः, ते धर्मसूरयस्तथा १५८
सर्वज्ञप्रोक्ततत्त्वेषु, श्रद्धाद्युत्पन्नहेतुकम् ।
चिन्तनं वस्तुनो यस्माद्धर्मध्यानं ततो मतम् १५९

धन्यास्ते दिवसा ज्ञेयाः, धन्यास्ते देशवासिनः ।
धन्या सा धर्मसामग्री, धर्मध्याने सहायिका १६०
ध्यानविघ्ननिमित्तानां विनाशपरिप्राप्तये ।
समस्तवस्तुतत्त्वानां, शुद्धस्वरूपलब्धये ॥१६१॥
आत्मविशुद्धकार्याय, वस्तुधर्मगवेषणम् ।
ध्येयवस्तूनि स्वान्तस्य योजनं ध्यानमुच्यते ।१६२।

आज्ञाविचयधर्मध्यानस्वरूपम्:—

आगमार्थस्य निर्णेतुं, यो विचारो विधीयते ।
धर्मध्यानं मतं तच्च, शुद्धान्वेषणकार्यतः ॥१६३॥
पूर्वापरविरोधेन, रहितं सर्वजन्तूनाम् ।
हितकारी च निर्वद्यं, गम्भीरार्थेन संयुतम् ।१६४।
द्रव्यपर्यायसंदृब्धं, सर्वज्ञकथितं तथा ।
तादृशाऽऽगमतत्त्वानां, निश्चयार्थं विचारणम् १६५
तदाज्ञाविचयं नाम धर्मध्यानं प्रकीर्त्तितम् ।
सर्वज्ञपरमेशस्य, आज्ञा च कीदृशी भवेत् ।१६६।
तत्परीक्षां स्फुटीकर्तुं, चित्तस्यैकाग्रवृत्तिता ।
आज्ञाविचयनामाख्यं, धर्मध्यानं प्ररूपितम् १६७

पूर्वधरैश्च संदृब्धं, बुद्ध्यतिशयधारिभिः ।
सूत्रं तु परिज्ञातव्यमन्यत्सूत्रं तु नो भवेत् ॥१८६॥

प्रोक्तमभिधानचिन्तामणौ—

सूत्रं सूचनकृद्भाष्यं, सूत्रार्थस्य प्रपञ्चकम् ।
टीका निरन्तरं व्याख्या, पञ्जिका पदभञ्जिका १८७

प्रोक्तं भगवत्यां—

सुत्तत्थो खलु पढमो, बीओ निज्जुत्ति मिसिओ भणिओ ।
तइयो निरविसेसो एसो, खलु अणुओगो ॥१८८॥

येन विशुद्धरूपेण, पञ्चाङ्गी मानिता दृढा ।
जिनाज्ञा तेन जीवेन, विशुद्धा परिपालिता ॥१८९॥

तादृगाऽऽज्ञात्वमन्तृणामाज्ञाविषयनामकम् ।
धर्मध्यानं विशुद्धं स्यादन्यत्र नैव मन्यताम् १९०

आगमलोपिलुम्पाकैः, जिनाज्ञा तु विराधिता ।
पञ्चाङ्गीलोपकर्त्तॄणां, बैधेयानां च का कथा ।१९१।

तेषु सर्वमनुष्येषु, भावदयाविचिन्तनम् ।
धर्मयानं विना तेषां, क्रिया सर्वा तु निष्फला १९२

जिनाज्ञापालनारूपमाज्ञाविचयनामकम् ।
धर्मध्यानं सदा येषां, ते नराः शिवगामिनः १९३
अपाय विचयधर्मध्यानस्वरूपम्—
गौरवविकथाद्यैश्च, प्रमादेन परीषहैः ।
सन्मार्गात्स्खलनं नो मे भूयात्कदापि कुत्रचित् १९४
इत्येवं चिन्तनं यत्र, शुद्धरूपेण जायते ।
अपायविचयं नाम धर्मध्यानं प्रकीर्त्तितम् ॥१९५॥
मूलोत्तरस्वरूपाणां प्रकृतीनां विभागतः ।
उद्भूतजन्मवार्धक्यमरणार्णवभ्रान्तितः ॥१९६॥
खिन्नान्तरात्मनाचैव, संसारिसुखभोगके ।
दोषाणां चिन्तनं सम्यगपायविचयं स्मृतम् १९७
मिथ्यात्वावृतचेतोभिः, कुदृष्टिभिः प्रदर्शितात् ।
उन्मार्गाच्च कथं चैते, प्राणिनोऽपचलन्ति वै १९८
इत्येवं चिन्तनं सम्यग्, तदपि धर्मध्यानकम् ।
द्वितीयं परिज्ञातव्यं, धर्मध्यानं चिकीर्षता ॥१९९॥
रागद्वेषकषायेभ्यः, जाता दुःखपरम्परा ।
तेऽपायाः परिज्ञातव्याः, संसारे दुःखसाधने २००
अत्र परत्र सर्वत्र, सुखं न कुत्रचिद्भवेत् ।

कथं केनापगच्छेयुरित्येवं चिन्तनं मुहुः ॥२०१॥
अपायविचयाख्यं तद्धर्मध्यानं द्वितीयकम् ।
दोषाणां च विनाशस्य, चिन्तनमत्र मुख्यतः २०२
दर्शिते वीतरागेण, मार्गे रत्नत्रयात्मके ।
विना प्राप्तिं भवारण्ये, पर्यटन्ति च देहिनः ॥२०३॥
अनादिभ्रान्तितो जातं, मिथ्यात्वात्यागरूपकम् ।
कर्मबन्धनिमित्तं तत्कथं मया निरुध्यते ॥२०४॥
सोऽहं सिद्धस्वरूपात्मा, संज्ञाननिर्मलेक्षणः ।
जातिपङ्के[1] परिभ्रष्टः, भिद्यमानश्च कर्मणा २०५॥
एकत्रमोहसैन्यं स्यादन्यत्राहं च केवलः ।
अप्रमत्तेन मया स्थेयमत्रारीणां च संगरे ॥२०६॥
प्रोक्तं ज्ञानार्णवे—
निर्धूय कर्मसंघातं, प्रबलध्यानवह्निना ।
कदा स्वं शोधयिष्यामि, धातुस्थमिव काञ्चनम् ।२०७।
किमुपेयो ममात्मायं, किंवा विज्ञानदर्शने ।
चरणं वाऽपवर्गाय, त्रिभिः सार्धं स एव वा ॥२०८॥
कोऽहं ममाश्रवः कस्मात्कथं बन्धः क्व निर्जरा ।
का मुक्तिः किं विमुक्तस्य, स्वरूपं च निगद्यते २०९

---

१ जन्ममृत्यादि ।

जन्मनः प्रतिपक्षस्य, मोक्षस्यात्यन्तिकं सुखम् ।
अव्याबाधं स्वभावोत्थं, केनोपायेन लभ्यते ।२१०।

मय्येव विदिते सर्वं, विज्ञातं भुवनत्रयम् ।
यतोऽहमेव सर्वज्ञः, सर्वदर्शी निरञ्जनः ॥२११॥

एको भावः सर्वथा येन दृष्टः सर्वे भावाः सर्वथा
तेन दृष्टाः ।
सर्वे भावाः सर्वथा येन दृष्टाः एको भावः सर्वथा
तेन दृष्टः ॥२१२॥

यावत्समयपर्यन्तं, संयोगो बाह्यवस्तुना ।
तावत्पर्यन्तकं मे सा, स्वस्थिति दुर्लभाभवेत् २१३

वीतरागेण ये प्रोक्ताः ये च सूत्रेषु गुम्फिताः ।
ते तथैवानुभूयन्ते, अतो मार्गे विलग्यते ॥२१४॥

सन्मार्गाऽपतनोपायः, दशवैकालिकसूत्रके ।
प्रोक्तं शय्यंभवाऽऽचार्यैः, स्वबोधाय प्रदर्श्यते २१५

आया-वयाहि चयसोगमल्लं, कामे कमाहि कमि-
अं खु दुक्खं ।
छिन्दाहि दोसं विणएज्जरागं, एवं सुहि होहिसि
सम्पराये ॥२१६॥

जरा जाव न पीडेइ, वाही जाव न वड्ढइ ।
जाविन्दियाइ न हायन्ति ताव धम्मं समायरे ।२१७।

तं देह वासं असुइ असासयं ।
सया चए निच्च हियट्ठि अप्पा ॥
छिदन्तु जाइमरणस्स बन्धणं ।
उवेइ भिक्खु अपुणागमं गइं ।२१८।

इमं सरीरं अनिच्चं, असुई असुईसंभवं ।
असासया वासमिणं, दुक्खकेसाणभायणं ॥२१६॥

अतो हि खलु संसारः, अपायः परिकीर्त्तितः ।
तत्परित्यागता कार्ये, धर्मध्यानं द्वितीयकम् ॥२२०॥

कामक्रोधादिलोभाश्च, प्रमादत्यागहीनता ।
अपायः सोऽपिज्ञातव्यः, तद्विनाशाय चिन्त्यताम् २२१

विपाकविचयधर्मध्यानस्वरूपम् :—

शुभाशुभस्वरूपत्वं, कर्मविपाकचिन्तनम् ।
सुखाय शुभवैपाकः, दुःखाय चाशुभस्तथा ॥२२२॥

देवमनुष्यतिर्यक्त्वनारक भववासके ।
कर्मणामनुभूतिर्या, तां वक्तुं नैव शक्यते ।२२३।

सानुकूलं च मित्रादिमातापितृकलत्रकम् ।
पुत्रादि शुभसंयोगाः, पुष्पमालादिकं तथा ॥२२४॥
शय्यासनं च यानादिवस्त्रपात्रादिकानि च ।
कर्पूरचन्दनादीनि, केलिक्रीडावनादिके ॥२२५॥
प्रासादध्वजतोरण्यं, छत्रचामरहस्तिनः ।
अश्वादिनगरादीनि, वस्तूनि सुखहेतवे ॥२२६॥
क्षेत्रादिरामणीयानि, सर्वदा सुखदानि वै ।
कामभोगादिसामग्री, जायते सुखहेतवे ॥२२७॥
कुन्तासिछूरिकादीनि, यन्त्रधानुष्कशास्त्रकम् ।
सर्पविषादिसिंहादि, अग्निवृश्चिककण्टकम् ।२२८।
दुष्कालवैरवैरोधं, भयक्लेशदस्थानकम् ।
इत्यादिदुष्टसंयोगाः, जायन्ते दुःखहेतवे ।२२६।
वर्षाघर्मतुषारादि ईत्युपद्रववस्तुकम् ।
शीतोष्णपरचक्रादि, अनिष्टफलदानि च ॥२३०॥
दुःखविपाकभूतानि, दुःखरूपाणि तानि च ।
कर्मविपाकरूपाणि, गीयन्ते जैनशासने ॥२३१॥
यत्सर्वं दृश्यते तद्धि, कर्मविपाकएव च ।
संसारे सर्वजीवेषु, अनुभवेन लोकने ॥२३२॥

मूलप्रकृतयस्तेषां, कर्मणां चाष्टकीर्त्तिताः ।
अष्टपञ्चाशता चैव, शताधिका परिस्फुटा ॥२३३॥
पञ्चभेदेन भिन्नत्वं, मत्यादिज्ञानपञ्चकम् ।
तदाच्छादनकर्मत्वं, चक्षुः पट्टसमं मतम् ॥२३४॥
ज्ञानावरणनामाख्यमाद्यं तु परिकीर्त्तितम् ।
यत्सामान्योपयोगत्वं, तद्दर्शनं प्रकीर्त्तितम् ॥२३५॥
तदावारककर्मत्वं, दर्शनावरणं मतम् ।
निद्रादिपञ्चकं ज्ञेयं, दर्शनघातिमूलतः ॥२३६॥
चक्षुर्दर्शनभेदत्वं, दर्शनोद्गमछेदकम् ।
प्रतिहारसमाज्ञेया, दर्शनावारकर्मता ॥२३७॥
मधुलिप्तासिधारायाः, समं तु वेदनीयकम् ।
मधुलेहनस्वादस्य, सदृशं शातवेद्यकम् ॥२३८॥
जिह्वोच्छेदसमं ज्ञेयमसातावेदनीयकम् ।
सुखदुःखस्वरूपं च, फलं ततो हि प्राप्यते ॥२३९॥
सच्छृद्धानविघातृत्वं, दर्शनमोहमुच्यते ।
चारित्रनाशकं ज्ञेयं, चारित्रमोहनीयकम् ॥२४०॥
षोडशकं कषायाणां, नोकषायेन युक्तकम् ।
नवसंख्यं च ज्ञातव्यं, त्रिकदर्शनमोहकम् ॥२४१॥

अष्टाविंशतिर्भेदाः स्युः सङ्कलने तु सर्वदा ।
मदिरापानसंकाशं, मोहनोयं निगद्यते ॥२४२॥
निगडक्षेपरूपत्वमायुष्ककर्म गीयते ।
चित्रकारसमं ज्ञेयं, नामकर्मविचित्रकम् ॥२४३॥
गतिजात्यादिभेदेन, त्र्यधिकं शतमुच्यते ।
तेषां व्याख्याप्रकारस्तु, जैनतत्त्वप्रदीपके ॥२४४॥
सुघटं भुंभलाकूटसदृशं गोत्रकर्मकम् ।
भांडागारिकसादृक्षं, गोत्रकर्म प्रकीर्त्तितम् ॥२४५॥
दानादिसर्वकार्येषु, विघ्नप्रदानरूपकम् ।
कोशाऽध्यक्ष समं तच्च, अन्तरायं निरूप्यते ॥२४६॥
ज्ञानावरणपाकेन, ज्ञानशक्तिर्निरुध्यते ।
मतिज्ञानस्य मांद्येन, आत्मनि परितप्यते ॥२४७॥
दर्शनावारपाकेन, दर्शनं नैव जायते ।
वस्तुदर्शनजिज्ञासा, केनापि नैव पूर्यते ॥२४८॥
सातावेदोदयाच्चैव, सुरनरेन्द्रसेवितम् ।
सुखं तु लभते प्राणी, सुखसङ्कल्पमात्रतः ॥२४९॥
दर्शनमोहकेनैव, सच्छ्रद्धानं विलुप्यते ।
तल्लोपेन निमज्जन्ति, जीवाश्च भवसागरे ॥२५०॥

चारित्रमोहनीयेन, स्वान्तशुद्धिविधायकम् ।
आत्मनः शुद्धिहेतुत्वं, चारित्रं नैव प्राप्यते ॥२५१॥
प्रमादपारवश्येन, लब्ध्वापि भ्रश्यते ततः ।
चारित्रमोहनीयस्य, फलं तदपि ज्ञायताम् ॥२५२॥
आयुष्ककर्मपाकेन, गत्यन्तरेषु गम्यते ।
नारकदेवलोकेषु, तिर्यक्षु मानुजे तथा ॥२५३॥
यादृशाध्यवसायेन, बद्धमायुष्ककर्मकम् ।
तादृशाध्यवसायेन, गम्यते नात्र संशयः ॥२५४॥
नारकायुष्कपाकेन, नारके खलु गम्यते ।
तिर्यक्त्वायुष्कयोगेन, तिर्यग्योनिषु भ्रम्यते ॥२५५॥
देवायुःपरिपाकेन, देवगतिषु जायते ।
मनुष्यायुष्कयोगेन, मानुष्यं परिप्राप्यते ॥२५६॥
नामकर्मोदयेनैव, गतिजात्यादिभेदकम् ।
विचित्रनामकर्मत्वं, प्राप्यते प्राणिभिस्तथा ।२५७।
गोत्रकर्मोदयेनैव, उच्चैर्नीचैश्च गोत्रकम् ।
जीवेनैव समासाद्य, फलं तादृक् च भुज्यते ॥२५८॥
अन्तरायोदयेनैव, दानलाभादिपञ्चकम् ।
विघ्नसन्ततिदानेन, तत्कर्त्तुं नैव शक्यते ॥२५९॥

लष्टपुष्टशरीरोऽपि, अन्तरायप्रयोगतः ।
तृणं वालयितुं शक्तः, कदापि नैव जायते ॥२६०॥
येन येन प्रकारेण, कर्मणां परिपाकता ।
जायते तेन रूपेण, भुज्यते जन्तुना सदा ॥२६१॥
कर्मणां कटुपाकेन, युक्ताः संसारसागरे ।
दुर्गतिदुःखसंतानसन्तापिता जनाः खलु ॥२६२॥
मृत्युत्पत्तिमहोर्मीणां, जालेन निचितास्तथा ।
मिथ्यात्ववातयोगेन, क्लिश्यन्ते मोहिनो जनाः २६३
अतो मिथ्यात्वमोहादि, त्यक्त्वा शिवार्थिनो जनाः ।
संसारपाशमुच्छेत्तुं, यतन्ते भाग्यशालिनः ॥२६४॥
श्लाघ्यास्त एव ज्ञातव्याः, धन्याश्चैते जनाः सदा ।
कर्मणां परिनाशाय, धारयन्ति महाव्रतम् ॥२६५॥
कर्मणां नाशसद्भावे, विपाको नैव जायते ।
मूलनाशेन शाखानां, स्थितिः कियच्चिरा भवेत् २६६
विपाकविचयाख्यं तद्धर्मध्यानं समाश्रय ।
विपाकानां स्वरूपं च, तेनैव परिज्ञायते ॥२६७॥
विना वस्तुस्वरूपं तु, ज्ञात्वा किं केन तन्यते ।
येन स्वरूपज्ञानं च, प्राप्तं तेनैव सर्वथा ॥२६८॥

तत्त्यागाय प्रयत्नं च, कर्त्तुं सफलतां भजेत् ।
ध्यानादिकस्य साफल्यं, तस्यैव सर्वदा मतम् ।२६९।
मोहमदिरया मत्ताः, मिथ्यात्वपरिसेविनः ।
संसारसागरस्तेषां, उन्मज्जने सहायकः ॥२७०॥
तादृशानां वराकानां, चिन्त्या भावदया सदा ।
कल्याणमार्गच्युतानां, भविष्यति च का गतिः २७१
धर्मध्यानं तृतीयं च, यथाशक्त्या निरूपितम् ।
स्खलना यदि दृश्येत, सूचनीयं कृपालुना ॥२७२॥
द्वितीयपरिसंस्कारे, सूचाऽमूल्या भविष्यति ।
सर्वेषामुपकारश्च, भवति नात्र संशयः ॥२७३॥
धर्मध्यानस्य कर्त्तारः, ग्रैवेयकादिनाकिषु ।
भवन्ति तत्र देवेशाः, सुखसौभाग्यशालिनः २७४
शरच्चन्द्रनिभं देहं, दिव्याभरणभूषितम् ।
विशिष्टवीर्यशालित्वं, प्राप्नुवन्ति च योगिनः २७५
इच्छासम्पन्नभोगादिसुखामृतरसायनम् ।
निर्विघ्नमुपभुञ्जानां, गतं कालं न जानते ॥२७६
दिव्यभोगस्य पर्यन्ते, परिच्युत्य च स्वर्गतः ।
सर्वोत्तमशरीरेण, आगच्छन्ति क्षमातले ॥२७७॥

शुद्धवंशे समुत्पद्य, नित्योत्सवमनोहरान् ।
नैकभोगांश्च भुञ्जाना, विचरन्ति महीतले ॥२७८॥
विवेकत्वं समासाद्य, त्यक्त्वा भोगांश्च सर्वथा ।
सर्वोत्तमसुध्यानेन, गच्छन्ति पदमव्ययम् ॥२७९॥
अतोहि धर्मध्यानाय, सर्वथोद्यमतां भज ।
शिवश्री जायते यस्मात्ततः कथं न सेव्यते ॥२८०॥
द्रव्यक्षेत्रस्य सम्बन्धि, आकारस्य विशेषतः ।
चिन्तनं सूक्ष्म बुद्ध्या तत्संस्थानविचयं मतम् ॥२८१
पञ्चास्तिकायरूपोऽयं, लोक इति विभाव्यताम् ।
आकारः कीदृशास्तस्य, भेदाश्च कतिधा मता २८२
इत्येवं चिन्तनं नित्यं, सूक्ष्मबुद्ध्या च तत्त्वतः ।
संस्थानविचयाख्यं तद्धर्मध्यानं प्रकीर्तितम् ॥२८३
धर्मध्यानस्य योग्याश्च, सप्तमे गुणवर्तिनः[1] ।
एकादशात्वगाश्चैव, द्वादशगुणवर्तिनः ॥२८४॥
त एव नैव मन्तव्याः, किन्त्वष्टमगुणालयाः ।
नवमगुणस्थानस्थाः, दशमगुणवर्तिनः ॥२८५॥

*१ पञ्चमादितः प्रारभ्यदशमगुणस्थानपर्यन्तं*

तादृश गुणस्थानेषु, धर्मध्यानस्य सम्भवः ।
अर्थात्सप्तमतश्चैव, द्वादशगुणपूर्वके ॥२८६॥
श्वेताम्बरीय मन्तव्ये, सम्भवः परिज्ञायताम् ।
दिगम्बरीय मन्तव्ये, चतुर्थात्सप्तमे खलु ॥२८७॥
अग्रे तु नेव मन्तव्यं:, धर्मध्यानं गुणालये ।
दिगम्बरीयमन्तव्ये, युक्तिस्तु तेन दर्शिता ॥२८८॥
सम्यग्दृष्टिमनुष्याणां, श्रेणिप्रारम्भपूर्वके ।
धर्मध्यानं तु मन्तव्यं, श्रेण्यारम्भस्तु चाष्टमात् २८६
अतोष्टमादिकात्प्राक्च, गुणेषु धर्मध्यानकम् ।
सूक्ष्मबुध्या विचारस्तु, कर्त्तव्यो गुणकांक्षिणा २६०
अष्टमादि गुणस्थाने, धर्मध्यानस्य सम्भवः ।
वस्तुगत्या प्रचारश्च, केनापि नैव वार्यते ॥२६१॥
अनाद्यनन्तलोकस्तु, स्थित्युत्पादव्ययात्मकः ।
तस्याकृतेर्विचारश्च, संस्थानविचयात्मकः ॥२६२॥
विभिन्नद्रव्यगानन्तपर्यायपरिवर्त्तनात् ।
सर्वदाऽऽसक्ततां नैव रागादौ मानसीं भजेत् २६३॥
क्षायोपशमिकाद्याश्च, भावाः स्युर्धर्मध्यानके ।
लेश्याः क्रमेण शुद्धाः स्युः, तेजः पीताश्च शुक्लकाः ॥

योगप्रवृत्तिचिह्नं च, प्रथमं परिभाष्यते ।
आरोग्यं लोभता हीनमनैष्ठुर्यं च सर्वदा ॥२६५॥
मूत्रपुरीषमल्पत्वं, शुभो गन्धश्च देहजः ।
कान्तिः प्रसादता चैव, स्वरेषु सौम्यता तथा २६६
इह लोके फलान्येव, निगद्यन्ते विशेषतः ।
योगशास्त्रीय श्लोकेन, प्रमाण दृढ़भावतः ॥२६७॥
त्यक्तसंगास्तनुं त्यक्त्वा, धर्मध्यानेन योगिनः ।
ग्रैवेयकादिस्वर्गेषु, भवन्ति त्रिदशोत्तमाः ॥२६८॥
महामहिमसौभाग्य, शरच्चन्द्रनिभप्रभम् ।
प्राप्नुवन्ति वपुस्तत्र, स्रग्भूषाम्बरभूषितम् ॥२६९॥
विशिष्टवीर्यबोधाढ्यं, कामार्त्तिज्वरवर्जितः ।
निर्विघ्नं परिसेवन्ते, सुखं चानुपमं चिरम् ॥३००॥
इच्छासम्पन्नसर्वार्थं, मनोहारि सुखामृतम् ।
निर्विघ्नमुपभुञ्जानाः, गतं कालं न जानते ॥३०१ ॥
अतः स्वर्गापवर्गस्य, हेतुत्वं धर्मध्यानके ।
अपवर्गैकहेतुत्वं, शुक्लध्याने प्रकीर्त्तितम् ॥३०२॥
धर्मध्यानस्य पुष्टयर्थमात्मबोधो निगद्यते ।
अध्यात्मज्ञानताहीनं ध्यानं सर्वं निरर्थकम् ॥३०३॥

शुद्धात्मबोधरूपोहि, मोक्षमार्गः प्रकीर्त्तितः ।
मग्नता यस्य तत्रैव, भावसाधुः समुच्यते ॥३०४॥
आत्मज्ञानेषु लीनत्वं, बालक्रीड़ासमं परम् ।
इन्द्रजालनिभं सर्वं, मन्यते शुद्धयोगिराट् ॥३०५॥
व्यवहारो विना ज्ञानं, प्रोच्यते केनचित्कथम् ।
आदर्शखण्डके रत्नं, रत्नमादर्शखण्डकम् ॥३०६॥
उत्तरकालिके ज्ञेयं, काचं काचं मणिर्मणिः ।
रज्यति सत्यध्यानेषु, विषयेषु परांमुखः ॥३०७॥
मुक्तिमार्गं तु दृष्ट्वा वै, मानसेऽतीव हृष्यति ।
आत्मज्ञानी स मन्तव्यः, अन्ये तु जनवञ्चकाः ३०८
आत्मपरिणतिस्त्रेधा, बहिरात्मा तु चैककः ।
अन्तरात्मा द्वितीयः स्यात्तृतीयः परमात्मकः ३०९॥
देहादौ चात्मबुध्यैव, आत्मत्वमानने खलु ।
बहिरात्मा तदा ज्ञेयः चित्तभ्रान्तिप्रदोषतः ॥३१०॥
देहात्मादौ विवेकत्वं, यस्य स्वान्ते च जागृतम् ।
आत्मा विभिन्नरूपः स्याच्छुद्धः सर्वप्रकाशकः ३११
देहस्तु जडतारूपः मांसादेः सम्भृतः।
अशुचिपूतिगन्धत्वं, वैरविरोधकारणम् ॥३१२॥

शरीराद्भिन्नरूपेण, य आत्मा परिमन्यते ।
सोन्तरात्मा सदा ज्ञेय, कर्मणां मर्मवित्तथा ३१३॥
घातिकर्मविनाशेन, यो जातः शुद्धरूपकः ।
परमात्मा स विज्ञेयः शुद्धरूपो निरञ्जनः ॥३१४॥
इन्द्रियबलतादौ च, आत्मबुद्धित्वयोगतः ।
अहंकारत्वभावः स्याद्, बहिरात्मा तु तत्र वै ॥३१५
अलक्ष्यो देहव्यापो स्यान्निरंजनो विशुद्धिभाग् ।
देहात्मात्वाभिमानेन, अरिमित्रादिकल्पनम् ॥३१६॥
स्वकीयपरकीयत्वकल्पना भ्रममूलिका ।
अशुद्धव्यवहारेण, तादृशो कल्पना भवेत् ॥३१७॥
पुत्रादिकल्पना ज्ञेया, बहिरात्मप्रयोगतः ।
पुद्गलीय पदार्थेषु, ममत्वबुद्धियोजनम् ॥३१८॥
बाह्यदृष्टिप्रचारेण, रूपादिकं विलोक्यते ।
अन्तरदृष्टिसद्भावे, मोहदृष्टिर्विनश्यति ॥३१९॥
मोहदृष्टिपरित्यागे, गुणसृष्टिगृहे[1] सदा ।
रूपिणं वीक्ष्य रूपत्वं, रक्तपीतादि कल्पनम् ॥३२०

---

१ स्वगृहे सदा

ग्रहणयोग्यतां त्यक्त्वा, गृहीतं नैव वर्जयेत् ।
सर्वस्वभावज्ञाता यः स स्वपरप्रकाशकः ॥३२१॥
शुक्तौ रजतभ्रान्त्या वै, यतते बालिशो यथा ।
देहात्मभ्रमबुद्ध्या च, बहिरात्मा तथा मतः ॥३२२॥
यथा रजतभ्रांतिश्च, शुक्तिं दृष्ट्वा निवर्तते ।
शुद्धात्मज्ञानसद्भावे, देहभ्रमोऽपि नश्यति ॥३२३॥
यथा योगे च भोगे च, स्वपिसि यं विना च त्वम् ।
अतीन्द्रियस्वरूपत्वं, त्वदीयं सर्वदा मतम् ॥३२४॥
ज्ञानिनां सर्वसंसारे, सम्बन्धः कोऽपि नो भवेत् ।
जगत्कषायरूपत्वं, जगदन्धसमं मतम् ॥३२५॥
बहिरात्मस्वरूपस्य, त्यागे चान्तररूपता ।
यत्र विकल्पता-नैव, तत्रैव परमात्मता ॥३२६॥
या दृढवासना तत्र, शुद्धात्मपदहेतुका ।
इलिका भ्रमरीध्यानाद्यथा वै भ्रमरी भवेत् ॥३२७॥
जिनमतिर्जिनेन्द्रे च, दद्याज्जिनपदं तथा ।
यत्र जडेषु विश्वासः, तत्र च सर्वथा भयम् ॥३२८
यत्र जडे न विश्वासः तत्र निर्भयता सदा ।
रुध्वा चेन्द्रियवृत्तिं च, विभावं सर्वथा त्यजेत् ३२६

अन्तरात्मा तु दृश्येत, शुद्धात्मपदहेतुकः ।
भिन्नं देहादिकं ज्ञेयं, त्वं सदा भिन्नरूपकः ३३०

शुद्धात्मपथदीपत्वं, तदा स प्रकटीभवेत् ।
ततः शुद्धात्मता प्राप्तिः, वीतराग-स्वरूपता ॥३३१॥
भेदज्ञानसुखास्वादी क्रिया कष्टं च नो भजेत् ।
विना ज्ञानं तपः कारे, भवान्तो नैव प्राप्यते ॥३३२
पुद्गलाभिनिवेशाश्च, जायन्ते ज्ञानिनां कथम् ।
सर्वमदविनाशो च, सहजोद्योतता भवेत् ॥३३३॥
क्षमादिधर्मसद्भावे, धर्मसन्यासतोद्भवेत् ।
कल्पितभवभावेषु, औदासीन्यं च नो कथम् ३३४
यथा हि रज्जुज्ञानेन, अहिज्ञानं निवर्तते ।
तथात्मज्ञानसद्भावे, भवाबोधो निवर्तते ॥३३५॥
अरूपिचेतनं द्रव्यं, सधर्मः[1] परिकीर्त्तितः ।
परहितं न तादृक्षं द्रव्यं मनसि ज्ञायताम् ॥३३६॥
रागादि परित्यज्यैव, कुरु गुणगवेषणाम् ।
तदा स्वान्ते चिदानन्दस्वरूपं प्रकटीयते ॥३३७॥

---

१ पुद्गल परिणामं

रागादिपरिणामेन, मानसेऽनन्तसंसृतिः ।
रागादि रहिते तत्र शिवपदं समीपकम् ॥३३८॥
भवप्रपञ्चस्वान्तं च तन्मृषा रूपतां भजेत् ।
स्तोकदिनान्तके सर्वं रजो रूपं प्रभासते ॥३३९॥
रागादि परित्यज्यैव, कुरु गुणगवेषणम् ।
विशुद्धरूपता चित्ते, तदा च प्रकटीयते ॥३४०॥
औदासीन्ये च संसारे ज्ञानध्यानामृताञ्जनम् ।
मुनिनाष्टाङ्गयोगेन, तत्त्वामृतं प्रसूयते ॥३४१॥
अनासङ्गमतिध्याने, रागद्वेषविच्छेदनम् ।
सहजभावलीनत्वमौदासीन्यप्रसूतिकम् ॥३४२॥
ममताराक्षसी यस्य, समीपे सर्वदा वसेत् ।
निर्ममता सुखास्वादः, कदापि नैव लभ्यते ३४३
ममताविषसंयुक्ते, अन्तरगुणवृन्दता ।
परिणश्यति शीघ्रं सा, अनन्तदोषपोषिका ३४४
ममताविषनाशे च, समता निकटे वसेत् ।
गुणवृन्दप्रकाशश्च, शीघ्रं हि परिजायते ॥३४५॥
वासना मोहजन्या सा ज्ञानिनां प्रतिकूलता ।
मिथ्याश्रुतनिमित्ता सा, अहंकारप्रसूतिका ३४६॥

मोहतिमिरमग्नानामन्धकारोदयः सदा ।
मिथ्याज्ञानं च मूढानां, रागद्वेषविवर्धनम् ॥३४७॥
रोगिणां च यथा क्षीरं, सन्निपाताय जायते ।
भाववैराग्यपुष्टित्वे, समता निश्चला भवेत् ॥३४८
ममता पङ्कता चातः, सर्वथा परिणश्यति ।
भावज्वरेण पुष्टां च, दाहतृष्णां, विनाशयेत् ३४९
विवेकगारुडीमन्त्रैः, रागाहिविषनाशनम् ।
सर्वथा शान्तिसद्भावः, तत एव प्रजायते ॥३५०
अहो मोहस्य माहात्म्यमज्ञानिना न ज्ञायते ।
ज्ञानिना सर्वरूपेण ज्ञातं ततो न चित्रकम् ३५१
रागाहिविषनाशाय, विवेकमन्त्रतां भज ।
भववनसमुच्छेदः, सर्वथा परिजायते ॥३५२॥
पुष्करावर्त्तसादृश्ये, धर्मे हर्षविशालता ।
तथा द्वेषहुताशेन, चिन्तातापस्तु जन्यते ॥३५३॥
यथा यथा च संसारे, वासना मोहहेतुका ।
जायते च तथा नैव, शुद्धभावः कदाचन ॥३५४॥
विषयविषरूपश्च, भववासोऽपि दोषकृत् ।
घोरकषायभावश्च, तदा तु प्रकटीयते ॥३५५॥

दुष्टकषायछेदाय, शुद्धचित्तं विधीयते ।
शुभभावनिमित्तेन, तच्छेदः सर्वथा भवेत् ॥३५६

शुद्धौषधि क्षमायाश्च, प्रयोगशुद्धियोगतः ।
क्रोधादि मोहतापश्च, शीघ्रमेव विनश्यति ॥३५७

क्षमा चन्दन निःस्यन्दरसैः स्वान्तं च सिच्यताम् ।
दयावल्लिवितानानां, मण्डपः फुल्लितो भवेत् ३५८

चिदानन्दमयो देहः, चेतनस्य सुकोमलः ।
क्रोधाग्निदाहयोगेन, भस्मीभूतः प्रजायते ॥३५६॥

तथा यत्नश्च कर्त्तव्यः, यथा न स्याद्विनाशता ।
अपूर्वशुद्धदेहस्य रक्षणं परमं मतम् ॥३६०॥

बिना खेदेन शान्त्या च, सुखसाम्राज्यता भवेत् ।
यादृशं कारणं चैव कार्यं च तादृशं भवेत् ॥३६१॥

मानमहीधराणां च, शिखराण्यष्टकानि वै ॥
तत्रारोहिमनुष्याणां, शुद्धालोकः कथं भवेत् ॥३६२॥

मृदुता पविधातेन मानपर्वतछेदनम् ।
क्रियतां लघुकालेन, तदाश्चर्यं भवेत्खलु ॥३६३॥

संसाराटविमध्येषु, मायावल्लिगृहं खलु ।
मूढेन तस्य सङ्गेन, ज्ञाननेत्रं विनाशितम् ॥३६४॥

बाह्यकोमलता स्वच्छा, कार्येषु वक्रता सदा ।
मायानागयाश्च दंशेन, गुणाढ्यं परिनाशितम् ३६५
तस्य निग्रहकार्याय, स्वान्ते विचारतां कुरु ।
ऋजुता जांगुली मन्त्रैः, पाठसिद्धैश्च वश्यता ॥३६६
लोभमहावनारोहः, तृष्णावल्ल्या विधीयते ।
खेदपुष्पेन वृद्धित्वं, दुःखफलस्य हेतुका ॥३६७॥
आकरः सर्वदोषाणां, गुणधनापहारकः ।
व्यसनवल्लिकन्दश्च, लोभपाशः प्रकीर्त्तितः ॥३६८॥
लोभमेघस्य दार्ढ्येन, पापपङ्कः प्रवर्धते ।
धर्महंसो रतिं नैव, लभते कुत्रचित्कदा ॥३६९॥
स्वयम्भूरमणानां च, पारं प्राप्नोति कर्हिचित् ।
तथाऽपि लोभसामुद्रं, पारं प्राप्नोति नो कदा ॥३७०
तोषागस्तिमुनीनां च, सागरः शौचरूपकः ।
येनाञ्जलिसमं मत्वा, प्रपीतस्तेन सर्वथा ॥३७१॥
यदा तृष्णात्वलाम्पट्यं, तदा चित्तं तु भ्राम्यति ।
सन्तोषसेतुबन्धेन, लोभ सागरतां तर ॥३७२॥
धनार्थं गिरिमृत्स्नायै, दुर्ध्यानेनैव भ्राम्यति ।
अक्षयज्ञानभंडारः, स्वसमीपे न पश्यति ॥३७३॥

यदा तु चित्तचाञ्चल्यं, तदा सुखं न प्राप्यते ।
यत्रैव स्थिरतावासः, तदा सुखं समीपगम् ॥३७४॥
स्वान्ते वचसि काये च, स्थिरता पूर्णरूपतः ।
यस्य तस्यैव साम्राज्यं, ग्रामेऽरण्ये दिवानिशि ३७५
इन्द्रियवश्यतां ह्रीरुक्[1], कषायविजयोनहि ।
अत इन्द्रियताधीने, कर्त्तव्ये सहजं सुखम् ॥३७६॥
स्वाकार्यपरिकर्त्तव्ये, परसुखं न गण्यते ।
प्रीतिर्न केनचित्साकं, इन्द्रियं दुर्जनो भजेत् ॥३७७॥
न धर्मं नैव नीतिं च, गणयेन्नैव किञ्चन ।
अत्र परत्र दुःखानां, खानिरिन्द्रियता मता ॥
स्वेच्छाचारिपदार्थेषु, इन्द्रियग्रामता व्रजेत् ।
पादे धृत्वा वशं कुर्याज्ज्ञानवंशसहायतः ॥३७६॥
उन्मार्गगामिनोऽवश्याः, चपलेन्द्रियघोटकाः ।
आकृष्य नरकारण्ये नीयन्ते नात्र संशयः ॥३८०॥
अन्तरङ्गारियोद्धृणां, दृढसेनाधिपं खलु ।
क्षणे हत्वेन्द्रियाण्येव, नाशयन्ति श्रुतं शुभम् ३८१

१ विना

एकेन्द्रियत्वकार्मुकैः, प्राणांश्च शतशो हरेत् ।
पञ्चेन्द्रियत्वधानुष्कैः, किं किं कार्यं न तन्यते ३८२
अप्रमादत्ववज्रेण, मोहमल्लस्य ताडनात् ।
ज्ञानी स्वात्मपदं प्राप्य, चिदानन्देन शोभते ३८३
सर्वभ्रान्तिविनाशश्च, ज्ञानोद्योतेन जायते ।
विषयभ्रमजालश्च, ज्ञानिनामपि मोहयेत् ॥३८४॥
स्वविलासं परिदर्श्य, असत्यकुम्भितां भजेत् ।
इन्द्रजालीसमां तां च, मत्वा तस्यां न मोदते ३८५
चर्माच्छादितवामा सा मूत्रपुरीषभाजनम् ।
कामकीटसमाकूला, तां च त्यागी परित्यजेत् ३८६
कुचफलस्य काठिन्यं, विशालपरिराजता ।
हासपुष्पपल्लवौष्ठप्रियासु विषवल्लिता ॥३८७॥
विषयत्यागभावेन, सर्वं त्यक्तं समाधिना ।
नदीतरणताऽभ्यासं, विनोदधिर्न तीर्यते ॥३८८॥
लालामिश्रितमस्थित्वलेहनं श्वा करोति वै ।
तथा विषयभोगेषु, मोदते जडभृज्जनः ॥३८९॥
दुर्दम्यदलनार्थं तु यत्नं करोतु सर्वदा ।
स्वान्तजयेन जीतं तदिन्द्रियमिति मन्यताम् ३९०

विषयग्रामसीमायां, स्वेच्छाचारी च गच्छति ।
जिनाज्ञांकुशतां धृत्वा, कुर्यान्मनोगजं वशम् ३६१
बाह्यपदार्थजालेषु, चित्तं भ्राम्यति सर्वदा ।
स्वस्मिन्नात्महितं नैव, पश्यति मूढमानुषः ॥३६२
मृगतृष्णा समा ज्ञेया, विषयवासना खलु ।
तदुपेक्षा च कर्त्तव्या, ज्ञानिना ज्ञानचक्षुषा ३६३
प्रियाप्रियकुलाचारः, रुचिपूर्वो न धार्यताम् ।
अङ्गजा वल्लभा पुत्राः, स्वकीयत्वबहिर्मुखाः ३६४॥
यथा पुत्रादिस्वीयाश्च, यूकादिकास्तथा न किम् ।
अतो नैव स्वकीयास्ते, परकीयाः परे न वै ॥३६५॥
एक एव समुत्पन्नः, एक एव विपद्यते ।
न स्वीयाः परकीया नो, अतः सर्वं विभाव्यताम् ३६६
धर्मध्यानप्रसङ्गेन, समताज्ञा विलोकिता ।
साम्यभावं विना दृष्ट्वा, ध्यानं कर्त्तुं न शक्यते ३६७
समताभावप्राधान्यं, जिनाज्ञास्तु विलोक्यताम् ।
अतोहि समता रूपं, यत्किञ्चित्प्रविचारितम् ३६८
धर्मध्यानं समाश्रित्य, ये भव्याः शुद्धचेतसा ।
संसारसागरं शीघ्रं, तरन्ति ते महाशयाः ३६९

धर्मध्यानस्य भेदाश्च, प्रपञ्चेन विचारिताः ।
पिण्डस्थादिकध्यानानां, स्वरूपं प्रविचार्यते ॥४००॥
पिण्डस्थं च पदस्थं च, रूपस्थं रूपवर्जितम् ।
ध्यानं चतुर्विधं प्रोक्तं, ध्यानार्थियोगिनां कृते ४०१
पिण्डस्थे परिध्यानेषु, धारणा पञ्चकीर्त्तिताः ।
सुसंयमं समाश्रित्य, ज्ञानी कर्मविनाशयेत् ॥४०२
पार्थिवी च तथाग्नेयी, मारुती वारुणो तथा ।
तत्रभूः पञ्चमी चेति, पिण्डस्थोयाः प्रदर्शिताः ४०३
यदालम्ब्य सदाचारी, तरति भवसागरम् ।
पार्थिवीधारणायां च, चिन्तनीयं विचार्यते ४०४
तिर्यग्लोकसमंध्यानी चिन्तयेत्क्षीरसागरम् ।
तत्र सहस्रपत्राढ्यं, पङ्कजं स्वर्णसादृशम् ॥४०५॥
जम्बूद्वीपसमं तच्च, चान्तः केशरशोभितम् ।
स्फुरत्पिङ्गप्रभांचितां, सुमेरुसदृशीं तथा ॥४०६॥
विशुद्धां कर्णिकां तत्र, तां योगी परिचिन्तयेत् ।
श्वेतसिंहासनस्थं तं, कर्मोच्छेदसमुद्यतम् ४०७
स्वात्मानं ध्यायते तत्र, पार्थिवी सा च धारणा ।
तादृशी धारणाऽप्यत्र, ध्यातव्या ध्यानकांक्षिभिः ४०८

शारदचन्द्रसादृश्यं, तत्रैव श्वेतवर्णकम् ।
विष्टरमुच्चतायुक्तं, तत्र स्थितं स्वकं स्मरेत् ४०६
तत्रस्थं स्वीयमात्मानं, एतादृशं स्मरेत्तदा ।
रागादिसर्वदोषाणां नाशने पूर्णशक्तिकम् ॥४१०
भवोद्भूतानि कर्माणि, तेषां सन्तानशातने ।
प्रोद्यमशीलतायुक्तं स्वंसर्वथा विचिन्तयेत् ॥४११॥
ततो दृढप्रयासेन नाभिमण्डलमध्यगम् ।
षोडशदलसंयुक्तं, पङ्कजं परिचिन्त्यताम् ॥४१२॥
तत्पद्मकर्णिकायां च, स्वरमालासुशोभितम् ।
प्रतिदलसमासीनं, महामंत्रं तु ध्यायताम् ॥४१३॥

अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ए ओ औ अं अः ।

रेफबिन्दु कलाक्रान्तं, महामन्त्रे यदक्षरम् ॥
रेफात्शनैश्च निष्क्रान्तिं, धूमशिखां तु चिन्तयेत् ।
स्फुलिङ्गानां ततिं ध्यायेज्ज्वालामालामनन्तरम् ।
ततो ज्वालासमूहेन, हृदिस्थं कमलं दहेत् ॥४१५॥
तदष्टकर्मनिर्माणमष्टपत्रमधोमुखम् ।
दहत्येव महामंत्रध्यानोत्थः प्रबलानलः ॥४१६॥

ततो बहिः शरीरस्य, त्रिकोणं चाग्निमण्डलम् ।
ध्यायेज्ज्वालाकलापेन, ज्वलन्तमिव वाडवम् ४१७
ततः त्रिभुवनाभोगं पूरयन्तं समीरणम् ।
चालयन्तं गिरीनब्धीन् क्षोभयन्तं तु चिन्तयेत् ४१८
तावद्भस्मरजस्तेन, क्षिप्रमुद्धूयवायुतः ।
दृढाभ्यासैः प्रशांतिं तं, आनयेन्मारुतीं ततः ॥४१९॥
दाह्याभावात्स्वयं शान्तिं, याति वह्निः शनैः शनैः ।
ततश्च वारुणी चेव, धारणा समयः खलु ॥४२०॥
स्मरेद्वर्षत्सुधासारैः घनमालाकुलं नभः ।
ततोऽर्धेन्दुसमाक्रान्तं, मण्डलं वारुणांकितम् ४२१
नभस्तलं सुधामेघैः प्लवयेत्तत्पुरं ततः ।
तद्रजः कायसम्भूतं, क्षालयेदिति वारुणी ॥४२२॥
सप्तधातुत्वराहित्य, राकेन्दुपूर्णकान्तिकम् ।
सर्वज्ञसमस्वात्मानं, शुद्धभावेन संस्मरेत् ॥४२३॥
पश्चात्सद्विष्टरासीनं, सर्वातिशयराजितम् ।
विदग्धाशेष कर्माणां, पूर्णकल्याणकांक्षिणम् ॥४२४॥
स्वाङ्गमध्ये निराकारं, संस्मरेदिति तत्रभूः ।
दृढाभ्यासश्च पिण्डस्थे, ध्यानी शुद्धसुखं स्मरेत् ४२५

अविश्रान्तस्यपिण्डस्थे, दृढाभ्यासस्य ध्यानिनः ।
प्रभवन्ति न दुर्विद्याः मन्त्रमण्डलशक्तयः ॥४२६॥
डाकिन्यः तुच्छयोगिन्यः पिशाचाश्च पलाशनाः ।
तत्काले एव त्रस्यन्ति, तस्य तेजोऽसहिष्णवः ४२७॥
दुष्टाः सिंहगजेन्द्राश्च, भल्लुकाः पन्नगास्तथा ।
जिघांसवोऽपि तिष्ठन्ति, स्तंभिता इव दूरतः ॥४२८॥
पवित्रपदमालंब्य, योगिना यद्विधीयते ।
पदस्थध्यानता ज्ञेया, नैक नयविशारदैः ॥४२९॥
तत्र षोडशपत्राढ्ये, नाभिकन्दगतेऽम्बुजे ।
स्वरमाला यथापत्रं, भ्रमन्तीं चिन्तयेत्ततः ॥४३०॥

क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण
त थ द ध न प फ ब भ म

चतुर्विंशति पत्रं च, हृदि पद्मसकर्णिकम् ।
वर्णान् यथाक्रमं तत्र, चिन्तयेत्पञ्चविंशतिम् ४३१॥
वक्त्राब्जेऽष्टदले वर्णाष्टकमन्यत्ततः स्मरेत् ।
संस्मरेन्मातृकामेवं, स्याच्छ्रुतज्ञानपारगः ॥४३२॥
य र ल व श ष स ह

पङ्कजदलमध्येषु, ध्यायति चाजवर्णकान् ।
नष्टपदार्थबोधं तु, ध्यातुः संपद्यते क्षणात् ॥४३३॥
सर्वमन्त्रपदाधीशं, समग्रतत्त्वस्वामिनम् ।
आद्यन्तमन्त्रभेदेन, अज्झलेन समुद्भवम् ॥४३४॥
ऊर्ध्वाऽधोरेफसम्बन्धं, हकारं बिन्दुलाञ्छितम् ।
अनाहतेन संयुक्तं, तत्त्वं श्रीमन्त्रराजकम् ॥४३५॥
देवासुरैर्नतं तत्त्वं, स्वाज्ञानध्वान्तभास्करम् ।
ध्यायन् शिरःस्थचन्द्रांशुकलयाक्रान्तदिङ्मुखम् ४३६
बुद्धं केचिद्धरिं केचित्केचिदजं महेश्वरम् ।
शिवं सार्वं तथेशानं, तं वर्णं कथयामि वै ॥४३७॥
अर्हमित्यक्षरं प्राणप्रान्तसंस्पर्शिपावनम् ।
ह्रस्वं दीर्घप्लुतं सूक्ष्ममतिसूक्ष्मं ततः परम् ॥४३८
ग्रन्थींश्च दारयन्नाभि, कन्द हृद् घण्टिकादिका ।
सुसूक्ष्मध्वनिना मध्य, मार्गस्थं यं स्मरेत्ततः ॥४३९
पश्चात्तत्रान्तरात्मानं, प्लाव्यमानं विचिन्तयेत् ।
बिन्दु तप्तकलानिर्यत्क्षीरगौरामृतोर्मिभिः ॥४४०॥
ततः सुधासरः सूतषोडशाब्जदलोदरे ॥
स्वात्मानं स्थाप्य पत्रेषु, विद्यादेवीश्च षोडश ४४१॥

शुद्धस्फटिकभृङ्गार, क्षरत्क्षीरसितामृतैः ।
आभिराप्लाव्यमानं स्वमात्मानं परिचिन्तयेत् ॥४४२
तथास्यमन्त्रराजस्याभिधानं परमेष्ठिनम् ।
अर्हन्तं मस्तके ध्यायेच्छुद्धफटिकस्वच्छकम् ॥४४३॥
तद्ध्यानावेशतः सोऽहं, सोऽहमित्यवदन्मुहुः ।
निःशङ्कमेकतां विद्यादात्मानः परमात्मना ॥४४४॥
ततोऽरागमद्वेष—ममोहं सर्वदर्शिनम् ।
देवार्च्यमीश्वरं चैव, कुर्वाणं धर्मदेशनाम् ॥४४५॥
ध्यायन्नात्मानमेवेत्थमभिन्नं सर्वदर्शिना ।
प्राप्नोति परमात्मत्वं, ध्यानी निर्धूय कल्मषम् ४४६
महानत्त्वमिदं ध्यानी, ध्यायति च यदैव सः ।
तदैवा-नन्द-संपद्भूमुक्ति श्रीरुपतिष्ठते ॥४४७॥
रेफबिन्दुकलाहीनं, ध्यायेच्छुभ्रं ततोऽक्षरम् ।
ततोऽनक्षरतां प्राप्तमनुच्चार्यं तु चिन्तयेत् ॥४४८॥
निशाकरकलाकारं, सूक्ष्मं भास्करभास्वरम् ।
अनाहताभिधं देवं, विस्फुरन्तं विचिन्तयेत् ४४९
तदेव हि क्रमात्सूक्ष्मं, ध्यायेद् बालाग्रसन्निभम् ।
क्षणमव्यक्तमोक्षेत, जगज्ज्योतिर्मयं ततः ॥४५०॥

प्रचाल्यमानसंल्लक्ष्याद्लक्ष्ये द्धतः स्थिरम् ।
ज्योतिरक्षयमत्यक्षमन्तरुन्मीलति क्रमात् ॥४५१॥
तथा हृत्पद्ममध्यस्थं, शब्दब्रह्मैकहेतुकम् ।
अज्भलेनैव संवीतं, वाचकं परमेष्ठिनः ॥४५२॥
मस्तकस्थितचन्द्रांशुकलामृतरसान्वितम् ।
कुम्भकैः प्रणवं ध्यायेन्महामन्त्रस्वरूपकम् ॥४५३॥
पीतं च स्तम्भकार्येषु, अरुणं वश्यकृत्यके ।
क्षोभणे विद्युताकारं, श्यामं विद्वेषकार्यके ॥४५४
चन्द्रकान्तिसदृग् रूपं कर्मनाशे च चिन्तयेत् ।
प्रणवं भिन्नकार्येषु चिन्तनीयं तु सम्मतम् ४५५
यद्यपि कर्मघातार्थियोगिनां चन्द्ररूपकम् ।
प्रणवं चिन्तनं प्रोक्तं, ध्यानिनं उपरिस्थितम् ॥४५६
तथापि द्रव्यक्षेत्रादि, सामग्रीवशातः किल ।
पीतादिवर्णरूपेण, ध्यानं कर्त्तुमनर्हकम् ॥४५७॥
पुण्यरूपमिदं मंत्रं, जगत्रयेषु पावनम् ।
योगी तु शुद्धरूपं हि, पञ्चपरमेष्टिनं स्मरेत् ४५८
अष्टदलं सिताम्भोजे कर्णिकायां कृतस्थितिम् ।
आद्यं सप्ताक्षरं मंत्रं, पवित्रं परिचिन्तयेत् ॥४५९॥

सिद्धादिकं चतुष्कं च, दिग्दलेषु यथाक्रमम् ।
चूलापदं चतुष्कं च, विदिग्दलेषु चिन्तयेत् ॥४६०
मोक्षलक्ष्मीं च संप्राप्ताः, अत्र ध्यानिमहाशयाः ।
मन्त्रराजमिदं ध्यात्वा, वैमानिकीं गतिं गताः ४६१
महात्म्यमस्य सम्पूर्णं योगिभिर्नैव कथ्यते ।
अनभिज्ञो जनो वक्तुं, शक्नोति न कदाचन ४६२
अयमेवहि संसारे, दुःखितानां च बान्धवः ।
अमुं त्यक्त्वा च जीवानां, नाऽभ्योऽस्तिकरुणापरः
सम्पूर्णकष्टपाताले, अटत्संसृति सागरे ।
अनेनैव जगत्सर्वमुद्धृत्य नीयते शिवे ॥४६४॥
कृत्वा पापसहस्राणि, हत्वा जन्तुशतानि च ।
अमुं मंत्रं समाराध्य, तिर्यञ्चोऽपि दिवं गताः ४६५
अष्टोत्तरशतं ह्यस्य, त्रिशुध्या चिन्तयन्मुनिः ।
भुञ्जानोऽपि चतुर्थस्य प्राप्नोति निर्मलं फलम् ४६६
गुरुपञ्चकनामोत्था, विद्या तु षोडशाक्षरा ।
जपञ्शतद्वयं तस्या चतुर्थस्याप्नुयात्फलम् ॥४६७॥
विद्याभिधानम्—
अरिहंत-सिद्ध-आयरिय-उवज्झाय-साहु ।

शतानि त्रीणि षड् वर्णं, चत्वारि चतुरक्षरम् ।
पञ्चावर्णं जपन् योगी चतुर्थफलमश्नुते ॥४६८॥
अरहंत-सिद्ध-अरिहंन । पञ्चावर्णमकारमेव ।
प्रवृत्तिहेतुरेवैतदमीषां कथितं फलम् ।
फलं स्वर्गापवर्गौतु, वदन्ति परमार्थतः ॥४६९॥
पञ्चवर्णमयीपञ्चतत्त्वाविद्योद्धृता श्रुतात् ।
अभ्यस्यमानासततं, भवक्लेशं निरस्यति ४७०
ह्राँ ह्रीँ ह्रूँ ह्रौँ ह्रः असिआउसा नमः ।
मङ्गलोत्तमशरणपदान्यव्यग्रमानसः ।
चतुःसमाश्रयाण्येव, स्मरन्मोक्षं प्रपद्यते ॥ ४७१॥
चतुर्मङ्गलं चतुरुत्तमं चतुः शरणं ।
अरिहंतसिद्ध-साधुधर्मसमाश्रयाणि ।
मुक्तिं सौख्यप्रदां ध्यायेद्विद्यापञ्चदशाक्षराम् ।
सर्वज्ञाभं स्मरेन्मंत्रं, सर्वज्ञानप्रकाशकम् ॥४७२॥
ॐ ह्रीँ श्रीँ अर्हं नमः ।
अस्य प्रभावसामर्थ्यं, कैश्चिद्वक्तुं न शक्यते ।
विना सर्वज्ञं देवं च कुत्रचित्कर्हिचित्खलु ॥४७३॥
पञ्चवर्णं स्मरेन्मन्त्रं, कर्मनिर्मूलनाशकम् ।

वर्णमालाञ्चितं मन्त्रं ध्यायेत्सर्वाभयङ्करम् ॥४७४

नमो सिद्धाणं ॥

ॐ नमोऽर्हते केवलिने परमयोगिने विस्फुर दुरुशुक्लध्यानाग्निनिर्दग्धकर्म बीजाय प्राप्तानन्त चतुष्टयाय सौम्याय शान्ताय मङ्गलवरदाय अष्टादशदोषरहिताय स्वाहा ।

चन्द्रबिम्बादिवोद्भूतां, श्रवन्तीममृतं सदा ।
विद्यां क्ष्वीँ इति भालस्थां ध्यायेत्कल्याणकारकम्
क्षीराम्भोधे विनिर्यान्तीं प्लावयन्तीं सुधाम्बुभिः ।
भाले चन्द्रकलां ध्यायेत्सिद्धिसोपानपद्धतिं ॥४७६॥
अस्याः स्मरणमात्रेण त्रुट्यद्भवबन्धनः ।
प्रयाति परमानन्दकारणपदमव्ययम् ॥४७७॥
नासाग्रे प्रणवः शून्यमनाहतमिति त्रयम् ।
ध्यायन् गुणाष्टकं लब्ध्वा, ज्ञानमाप्नोति निर्मलम्
ॐ हं । अणिमाद्याः । अष्टगुणाः ॥
शङ्खकुन्दशशाङ्काभांस्त्रीनमून् ध्यायतः सदा ।
समग्रविषयज्ञानप्रागल्भ्यं, जायते नृणाम् ॥४७८॥
द्विपार्श्वप्रणवद्वन्द्वं, प्रान्तयोर्माययावृतम् ।
सोऽहं मध्ये विमूर्धानं अर्हम्लीँ कारं विचिन्तयेत्

ह्रीँ ॐ ॐ सो अहम्लीँ हँ ॐ ॐ ह्रीँ

कामधेनुमिवाचिन्त्यं फलसम्पादनक्षमाम् ॥
अनवद्यां जपेद्विद्यां गणभृद्वदनोद्गताम् ॥४८१॥

विद्या—ॐ जोग्गे मग्गे तच्चे भूए भविस्से अन्ते पक्खे जिणपार्श्वे स्वाहा ॥

षट्कोणेऽप्रतिचक्रे फडिति प्रत्येकमक्षरम् ।
सव्ये न्यसेद्विचक्राय स्वाहा बाह्येऽपसव्यतः ॥४८२
भूतान्तं बिन्दुसंयुक्तं तन्मध्ये न्यस्य चिन्तयेत् ।
नमो जिणाणमित्याद्यै रोँ पूर्वैर्वेष्टयेद्बहिः ॥४८३॥

ॐ नमो जिणाणं। ॐ नमो ओहिजिणाणं। ॐ नमो परमोहि जिणाणं । ॐ नमो सव्वोसहि जिणाणं ।
ॐ नमो अनन्तोहिजिणाणं। ॐ नमो कुट्ठबुद्धीणं।
ॐ नमो पदानुसारिणं। ॐ नमो सम्भिन्नसोआणं ।
ॐ नमो उज्जुमईणं । ॐ नमो विपुलमईणं ।
ॐ नमो चाउद्दसपुव्वीणं । ॐ नमो दसपुव्वीणं ।
ॐ नमो अट्ठंगमहानिमित्तकुसलाणं ।
ॐ नमो विउव्वणइड्ढिपत्ताणं ।
ॐ नमो विज्जाहराणं । ॐ नमो चारणाणं ।

ॐ नमो पण्णसमणाणं। ॐ नमो आगासगामीणं।

ॐ ज्सों ज्सों श्री ह्री धृतिकीर्त्तिबुद्धिलक्ष्मी स्वाहा।

इति पदैर्वलयं पूरयेत्, पञ्चनमस्कारेण पञ्चाङ्गुली-
न्यस्तेन सकली क्रियते।

ॐ नमो अरिहंताणं ह्राँ स्वाहा। अङ्गुष्ठे।

ॐ नमो सिद्धाणं ह्रीँ स्वाहा। तर्जन्यां।

ॐ नमो आयरियाणं ह्रूँ स्वाहा। मध्यमायाम्॥

ॐ नमो उवज्झायाणं ह्रैँ स्वाहा। अनामिकायाम्॥

ॐ नमो लोए सव्वसाहूणं ह्रौँ स्वाहा कनिष्ठायाम्

एवं वारत्रयमङ्गुलीषु विन्यस्य मस्तकोपरि पूर्व-
दक्षिणापरोत्तरेषु भागेषु विन्यस्य जपं कुर्यात्॥

अष्टदलाम्बुजे ध्यायेदात्मानं दीप्रतेजसम्।
प्रणवाद्यस्य मन्त्रस्य वर्णान्पत्रे यथाक्रमम्॥४८४॥

पूर्वाशाभिमुखः पूर्वमधिकृत्यादिमण्डलम्।
एकादशशतान्यष्टाक्षरं मन्त्रं जपेत्ततः॥४८५॥

पूर्वाशानुक्रमादेवमुद्दिश्यान्यदलान्यपि।
अष्टरात्रं जपेद्योगी सर्वप्रत्यूहशान्तये॥४८६॥

अष्टरात्रे व्यतिक्रान्ते क्रमस्यास्यप्रवर्तिनः।

निरूपयति पत्रेषु वर्णानेतानुक्रमम् ॥४८७॥
भीषणाः सिंहमातङ्गरक्षः प्रभृतयः क्षणात् ।
शाम्यन्ति व्यन्तराश्चान्ये ध्यानप्रत्यूहहेतवे ॥४८८॥
मंत्रप्रणवपूर्वोऽयं फलमैहिकमिच्छुभिः ।
ध्येयः प्रणवहीनस्तु निर्वाणपदकांक्षिभिः ॥४८६॥
ॐ नमो अरिहंताणं । नमो अरिहंताणं ।
चिन्तयेदन्यमप्येनं मन्त्रं कर्मौघशान्तये ॥
स्मरेत्सत्त्वोपकाराय विद्यां तां पापभक्षिणीम्॥४६०
ऋषभादिवर्धमानेभ्यो नमः । पापभक्षिणीमिति ।
ॐ अर्हन् मुखकमलवासिनि पापात्मक्षयंकारि
श्रुतज्ञानज्वालासहस्र ज्वलिते सरस्वति मा पापं
हन हन दह दह क्षाँ क्षीँ क्षूँ क्षौँ क्षः क्षीरवरधवले
अमृत सम्भवे वँ वँ हूँ हूँ स्वाहा इत्येवं लक्षणम् ॥
प्रसीदति मनः सद्यः पापकालुष्यमुज्झति ।
प्रभावातिशयादस्याः ज्ञानदीपः प्रकाशते ॥४६१॥
ज्ञानवादिभिः समाम्नातं वज्रस्वाम्यादिभिः स्फुरत्
विद्यावादात्समुद्धृत्य बीजभूतं शिवः श्रियः ॥४६२
जन्मदाह हुताशस्य प्रशान्तनवषारिदम् ।

गुरूपदेशतो ज्ञेयं सिद्धचक्रं विचिन्तयेत् ॥४६३॥

पिण्डस्थ ध्यानस्वरूपम् ।

शिवश्री सम्मुखीनस्य विध्वस्ताखिलकर्मणः ।
चतुर्मुखस्य सम्पूर्ण भुवनाभयदायिनः ॥४६४॥
चन्द्रमण्डलसादृश्यच्छत्रत्रितयशोभिनः ।
लसद्भामण्डलाभोग विडम्बितविवस्वतः ॥४६५॥
दिव्यदुन्दुभिः निः स्वानगीतसाम्राज्यसम्पदः ।
रणद्द्विरेफझङ्कार मुखराशोकशालिनः ॥४६६॥
सिंहासननिषण्णस्य वीज्यमानस्य चामरैः ॥
देवासुरशिरोरत्नदीप्रपादनखद्युतेः ॥४६७॥
दिव्यपुष्पोत्कराकीर्णा सङ्कीर्णपरिषद्भुवः ।
उत्कन्धरैर्मृगाकुलैः पीयमानकलध्वनेः ॥४६८॥
शांतवैरेभसिंहादि समुपासितसन्निधेः ।
प्रभोदिव्यसभास्थस्यमुख्यतःपरमेष्ठिनः ॥४६९॥
रागद्वेषमहामोहविकारैरकलङ्कितम् ।
शान्तं कान्तं मनोहारि सर्वलक्षणलक्षितम् ॥५००
तीर्थिकैरपरिज्ञात योगमुद्रामनोरमम् ।
अक्ष्णोरमन्दमानन्दं निःस्पन्दं ददद्भुतम् ॥५०१॥

जिनेन्द्रप्रतिमारूपमपिनिर्मलमानसः ।
निर्निमेषदृशाध्यायन् रूपस्थध्यानवान् भवेत् ॥५०२
योगी ह्याभ्यासयोगेन, तन्मयत्वमुपागतः ।
सर्वज्ञीभूतमात्मानमवलोकयति स्फुटम् ॥५०३॥
सर्वज्ञो भगवान्योऽयमहमेवास्मि सध्रुवम् ।
एवं तन्मयतां यातः, सर्ववेदीति मन्यते ॥५०४॥
वीतरागो विमुच्येत, वीतरागं विचिन्तयन् ।
रागिणं तु समालम्ब्य, रागी स्यात्क्षोभणादिकृत् ॥
येन येन हि भावेन, युज्यते यंत्रवाहकः ।
तेन तन्मयतां याति, विश्वरूपो मणिर्यथा ॥५०६॥
नासध्यानानि सेव्यानि, कौतुकेनापि किन्त्विह ।
स्वनाशायैव जायन्ते, सेव्यमानानि तानि यत् ५०७
सिध्यन्ति सिद्धयः सर्वाः, स्वयं मोक्षावलम्बिनाम् ।
सन्दिग्धा सिद्धिरन्येषां, स्वार्थभ्रंशस्तु निश्चितः ५०८

॥ रूपातीतस्वरूपम् ॥

अमूर्त्तस्य चिदानन्दरूपस्य परमात्मनः ।
निरञ्जनस्य सिद्धस्य, ध्यानं स्याद्रूपवर्जितम् ॥५०९॥

इत्यजस्रं स्मरन् योगी, तत्स्वरूपावलम्बिनः ।
तन्मयत्वमवाप्नोति, ग्राह्यग्राहकवर्जितम् ॥५१०॥
अनन्यशरणी भूय, तस्मिंश्चलीयते तथा ॥
ध्यातृध्यानो-भयाऽभावे, ध्येयेनैक्यं यथा व्रजेत्५११
सोऽयं समरसीभावस्तदेकीकरणं मतम् ।
आत्मायदपृथक्त्वेन लीयते परमात्मनि ॥५१२॥
अलक्ष्यं लक्ष्यसम्बन्धात्स्थूलात्सूक्ष्मं विचिन्तयेत् ।
सालम्बाच्च निरालम्ब तत्त्ववित्तत्वमंजसा ॥५१३॥
पिण्डस्थादिकध्यानानां स्वरूपं परिकीर्त्तितम् ।
योगशास्त्रस्थश्लोकेन न तु स्वीयविचारतः ॥५१४
मादृशां मन्दबुद्धीनामनुभववियोगतः ।
तादृशं शुद्धज्ञानं च न भवेन्नात्र संशयः ॥५१५॥
पिण्डस्थं धारणाद्यैश्च ध्येयस्वरूपचिन्तनम् ।
पदस्थं पदमालम्ब्य पवित्रं प्रविधीयते ॥५१६॥
मन्त्रविद्यास्वरूपाणि अरिहन्तपदानि च ।
समालम्ब्यैव कर्त्तव्यं पदस्थं ध्यानमुच्यते ॥५१७॥
समवसरणस्थस्य तीर्थेशस्य जगद्विभोः ।
प्रातिहार्यादियुक्तस्य पूर्णातिशयशोभिनः ॥५१८

पञ्चत्रिंशद्गुणाढ्यस्य वाणीनां सर्वगामिनाम् ।
तादृशार्हद्रूपस्य रूपस्थं ध्यानमुच्यते ॥५१६॥
स्वरूपं चिंतनं सम्यक् जगदानन्ददायिनः ।
केवलालोकरूपस्य जगदुद्धारकारिणः ॥५२०॥
पुद्गलाकारशून्यानां सिद्धानां परमात्मनाम् ।
चिदानन्दस्वरूपाणां शास्वतसुखशालिनाम् ॥५२१
निरञ्जनस्वरूपाणां, पूर्णकर्मविनाशिनाम् ।
सिद्धानां शुद्धध्यानं तद्रूपातीत प्रकीर्त्तितम् ॥५२२
पिंडस्थादि चतुर्भेदं ध्यानं च परिकीर्त्तितम् ।
चतुर्धाधर्मध्यानानां, स्वरूपं प्राग् विलोकितम् ॥५२३
मोक्षस्य स्वर्गाणां च, कारणं धर्मध्यानकम् ।
मोक्षैककारणं सम्यग्, शुक्लध्यानं प्रकीर्त्यते ॥५२४
साक्षात्स्वर्गस्य हेतुत्वं, धर्मध्याने विचारितम् ।
पारम्पर्येण मोक्षस्य, हेतुत्वमपि सम्मतम् ॥५२५॥
आद्यद्वयस्य शुक्लस्य, अनुत्तरविमानता ।
अस्तीति परिमन्तव्या, मोक्षसुखं च सम्मतम् ५२६
उत्तरद्वयशुक्लस्य, सर्वथा मोक्षहेतुता ।
केवलिभिर्विना नैव, योगरोधो विधीयते ॥५२७॥

शैलेशीमपि चावस्थामन्यत्रनैव प्राप्नुयात् ।
विना केवलज्ञानेषु, इति सर्वं व्यवस्थितम् ॥५२८॥

॥ इति ॥

शास्त्रविशारदजैनाचार्य जैनसाहित्यधर्मोद्धारक-
देशिविदेशिविद्वज्जनानेकराजन्यप्रतिबोधक
ज्ञानप्रचारकानेकसाहित्यग्रन्थनिर्मापक
सूरिचक्रचक्रवर्तिशासनसम्राट् जङ्गम-
युगप्रधानपरमाराध्यदेवपूज्यपादसाधु-
जनवन्दनीय श्रीविजय धर्म सूरि
शिष्येण न्यायविशारद न्याय-
तीर्थोपाध्यायमङ्गलविजयेनविर-
चिते योगप्रदीपे ध्यानाख्य-
सप्तमयोगान्तर्गत धर्मध्यान पिंड
स्थादिध्यानचतुष्कवर्णननामा-
एकोनविंशतितमप्रकाशः
समाप्तः ॥

---

अधोलोकेषु स्वर्गेषु, तिर्यग्लोकस्थितेषु च ।
यान्येव जिनबिम्बानि, ध्येयरूपाणि सर्वदा ॥१॥
भवनपतिस्थानेषु, व्यन्तरनिलयेषु च ।
वानमन्तरस्थानेषु, ज्योतिष्के च स्थिरास्थिरे ॥२॥
वैमानिके च सर्वत्र, जिनबिम्बानि यानि च ।
भक्त्या च बहुमानेन, तानि वन्दे निरन्तरम् ॥३॥
यत्र प्रस्तुतग्रन्थस्य, निर्माणं क्रियते मया ।
त्रिलोकी जनवन्द्यं तं, सम्मेतशिखरे स्थितम् ॥४॥
द्विविधरिपुनिर्नाशकर्त्तारं योगरोधिनम् ।
पूर्णलक्ष्म्याश्च भर्त्तारं, जगदुद्धारकारकम् ॥५॥
तादृशं पार्श्वदेवेशं, शुक्लध्यानचतुर्थके ।
स्थितं तं सर्वथा वन्दे, त्रिशुद्ध्या बहुभक्तितः ॥६॥
अज्ञानपङ्कतो येन, उद्धृतो मादृशो जनः ।
प्रच्छन्नपापपङ्केन, विलिप्तोऽनादिकालतः ॥७॥
मादृशदुष्टजन्तूनामुद्धारो येन कारितः ।
विश्ववन्द्यं च तं धर्मसूरीशं प्रणमाम्यहम् ॥८॥
जिनेन्द्रदेवतां नत्वा, धर्मसूरिं गुरुं तथा ।
शुक्लध्यानस्य व्याख्यानं क्रियते योगशास्त्रतः ॥६

आद्यं संहननं येषां, पूर्वादिश्रुतवेदिनाम् ।
अष्टप्रावचनं ज्ञानं येषां माषतुषादीनाम् ॥१०॥
तेषामेवाधिकारश्च, अत्र शास्त्रे च वर्णितः ।
त एव मोक्षलक्ष्मीणां ज्ञायन्ते स्वामिनः सदा ११
स्वल्पसारादिजन्तूनामधिकारो न विद्यते ।
सामग्रीपरिपूर्णेन, पूर्णकार्यं प्रजायते ॥१२॥

प्रोक्तं योगशास्त्रे—

छिन्ने भिन्ने हते दग्धे, देहे स्वमपि दूरगम् ।
प्रपश्यन् वर्षवातादिदुःखैरपि न कम्पते ॥१३॥
न पश्यति तदा किञ्चिन्न शृणोति न जिघ्रति ।
स्पष्टं किञ्चिन्न जानाति, लेप्यनिर्मितमूर्तिवत् १४
आत्मार्थं श्रय सर्वत्र, मुञ्च मोहावनिं तथा ।
वैराग्यं च विवेकं च, भो समाश्रय सर्वथा ॥१५॥
आत्माऽहितं परित्यज्य, हिते मनो नियुज्यताम् ।
शरीरात्मविभेदं च, भावयस्व निरन्तरम् ॥१६॥
अनन्तसुखताधारमनन्तदुःख नाशनम् ।
तादृशे शुक्लध्याने च, प्रयत्नः प्रविधीयताम् ॥१७॥

अत्यन्तनिर्मलं तच्च, मोक्षसुखनिदानकम् ।
तद्ध्यानं येन सम्प्राप्तं, तेभ्यो नमोस्तु सर्वदा १८
बाह्यक्रियाविहीनं यदिन्द्रियविषयातीतम् ।
सर्वथेच्छाविनिर्मुक्तं, स्वरूपे स्थितमानसम् ॥१६॥
तादृशैर्लक्षणैर्युक्तं, गुणश्रेणिषु विद्यते ।
तच्छुक्लमिति ज्ञातव्यं, जैनदर्शनवेदिभिः ॥२०॥
आद्यसंहननानां च, शुक्लेऽधिकारता यदि ।
अन्त्यसंहननानां च, उपदेशो निरर्थकः ॥२१॥
इति संशयसंजाते, समाधानं विधीयते ।
बिना समाधिसम्बोधं, संशयात्मा विनश्यति ॥२२
ऐदंयुगीनजीवानां, यद्यपि नाधिकारता ।
तथापि सम्प्रदायानामविच्छेदाय कीर्त्यते ॥२३॥
पृथक्त्वसवितर्कं च आद्यं हि सविचारकम् ।
एकत्वमपृथक्त्वं च, अविचारं द्वितीयकम् ॥२४॥
सूक्ष्मक्रियास्वरूपं चाप्रतिपातितृतीयकम् ।
व्युच्छिन्नक्रियकं चैव, चतुर्थं परिकीर्त्तितम् ॥२५॥
एषां चतुर्विभेदानां, स्वरूपं लक्षणं तथा ।
कथ्यते स्वीयबोधाय, परकल्याणहेतवे ॥२६॥

वितर्कः श्रुतज्ञानं स्यात्पृथक्त्वभिन्नरूपकम् ।
अर्थव्यञ्जनयोगानां, सङ्क्रान्तिश्च विचारता २७
पूर्वगतश्रुतज्ञानविषयकत्वरूपकम् ।
अर्थव्यञ्जनयोगानां, संक्रमणं परस्परम् ॥२८॥
तादृग्विचारकर्त्तव्यपूर्वकं द्रव्यपर्यवे ।
तथागुणेषु संचारसम्बन्धिशुभध्यानकम् ॥२९॥
वितर्कसविचाराख्यं, पृथक्त्वेनैव संयुतम् ।
प्रथमं शुक्लध्यानं तत्कीर्त्तितं सुखहेतवे ॥३०॥
अथवाचापराश्रयं, विना लब्ध्वा तदातने ।
विशुद्धविमलात्मत्वस्वरूपचिन्तनं सदा ॥३१॥
तदपि शुक्लध्यानं तत्प्रथमं परिभाष्यते ।
तृतीयं लक्षणं चैव कथ्यते बोधहेतवे ॥३२॥
अथवा जीवरूपस्य, अजीवस्य च वस्तुनः ।
स्वभावस्य विभावस्य, पृथक्करणपूर्वके ॥३३॥
द्रव्यपर्यायतत्त्वानां पृथक् पृथक्त्वचिन्तने ।
गुणानां पर्यायेषु, पर्यायाणां गुणे तथा ॥३४॥
संक्रमणस्य कर्त्तव्ये, सततं प्रविचारता ।
तदपि शुक्लध्यानं तत्प्रथमं प्रणिगद्यते ॥३५॥

सवितर्कविचाराणां, संयोज्य च पृथक्त्वतः ।
स्वल्पांशे चैव चाश्वत्थतरङ्गिसागरैः समम् ॥३६॥
असंक्षुब्धदशावच्च, दशानुभवरूपकम् ।
तदपि शुक्लध्यानं च, प्रथमं परिकीर्त्तितम् ॥३७॥

भावार्थः—

षड्द्रव्याणां च मध्येषु, एकस्मिन् द्रव्यरूपके ।
उत्पादव्ययध्रौव्यादिपर्यायस्य पृथक् पृथक् ॥३८॥
विचारश्च वितर्केण, सहचरिततायुतः ।
यत्रैव सविधीयेत, तद्ध्यानमपि आद्यकम् ॥३९॥

द्वितीय शुक्लध्यानस्वरूपम्—

एकत्वेन वितर्केण, अप्रविचारयुक्तकम् ।
वातानाहतदीपेन, समं स्थिरत्वप्रापणम् ॥४०॥
एकत्वप्रवित्तर्कं च, अविचारं द्वितीयकम् ।
तादृशीध्यानता ज्ञेया जगत्कल्याणहेतुका ॥४१॥

तृतीयशुक्लध्यानरूपम्—

सूक्ष्मक्रियास्वरूपाच्च अपरिभ्रष्टरूपकम् ।
सूक्ष्मक्रियाऽप्रतिपाति, शुक्लध्यानतृतीयकम् ॥४२

चतुर्थशुक्लध्यानस्वरूपम्—

शैलेशीं च दशां प्राप्ताः, योगत्रयविहीनकाः ।
पञ्चह्रस्वस्वराणामुच्चारणकालसादृशम् ॥४३॥
तावत्समयमानं यत्तद्ध्यानं प्रविधीयते ।
समुच्छिन्नक्रियाऽनिवृत्त्याख्यं ध्यानं चतुर्थकम् ॥४४
सिंहावलोकन्यायेन, आद्ये द्वे शुक्लध्यानके ।
लक्षणगर्भितैःश्लोकैः, स्वरूपं प्रविचार्यते ॥४५॥
पूर्वगतेषु भङ्गिकश्रुतानुसारतस्तथा ।
अर्थव्यञ्जनयोगान्तराणां च यत्र संक्रमः ॥४६॥
तत्र निरोधकर्त्तव्ये, प्रथमं परिकीर्त्तितम् ।
उत्पादव्ययध्रौव्यादि, पर्यवस्य हि चैकतः[1] ॥४७।
पर्याये निष्प्रकम्पत्वपूर्वश्रुतानुसारिणा ।
चेतसा चिन्तनं चैव, शुक्लध्यानं द्वितीयकम् ॥४८॥

तात्पर्यार्थः—

आद्यद्वयस्य शुक्लस्य एकद्रव्यं हि चाश्रयः ।
पूर्वधरेषु चाद्यस्य, ध्यानद्वयस्य सम्भवः ॥४६॥

---

१ एकस्मिन्

अतो ध्यानद्वयं चैव, सवितर्कं निगद्यते ।
सहितं श्रुतज्ञानेन, अतः समानमुच्यते ॥५०॥
विभिन्नताऽपि या दृष्टा साऽपि चात्र प्रदर्श्यते ।
प्रथमे भेदप्राधान्यं, द्वितीयेऽभेदरूपता ॥५१॥
पृथक्त्वैकत्वशब्देन सर्वत्र प्रतिपादिता ।
अर्थव्यञ्जनयोगानां, संक्रान्तिः प्रथमे मता ॥५२॥
द्वितीये संक्रमो नैव, सर्वथा विद्यते खलु ।
सविचारमतो ज्ञेयं, ध्यानं तु प्रथमं सदा ॥५३॥
निर्विचारं द्वितीयं तद् ध्यानं विभिन्नमुच्यते ।
ध्याता पूर्वधरो यत्र, पूर्वश्रुतानुसारतः ॥५४॥
कस्यचित्परमाणोश्च अन्यस्य जडवस्तुनः ।
तथात्मद्रव्यतत्त्वेषु, उत्पादस्थिरनाशिनाम् ॥५५॥
मूर्त्तत्वामूर्त्ततादीनां, पर्यायाणां च सर्वदा ।
द्रव्यास्तिकनयेनैव, भेदप्राधान्यरूपतः ॥५६॥
चिन्तनं परिकर्त्तव्यं, योगिना ध्यानपूर्वके[1] ।
एकद्रव्यार्थरूपस्य चान्ये द्रव्यार्थरूपके ॥५७॥

१ आद्ये शुक्लध्याने

पर्यायस्यैकरूपस्य, अन्यपर्यायरूपके ।
अर्थतः शब्दरूपे च, शब्दतश्चार्थरूपके ॥५८॥
चिन्तने परिकर्त्तव्ये, प्रथमशुक्लध्यानता ।
मानसिकादि योगेषु, एकं त्यक्त्वा हि चापरे ॥५६
तादृशे चिन्तने कार्ये, नाना[1] वितर्कता मता ।
सप्रविचारतारूपं, प्रथममत्र कथ्यते ॥६०॥
अत्रैव श्रुतज्ञानस्य चालम्बनं हि मुख्यतः ।
एक द्रव्यस्थपर्यायाणाञ्च विभिन्नदृष्टितः ॥६१॥
विचारः क्रियते चात्र, प्रथमे शुक्लध्यानके ।
वितर्कमवलम्ब्यैव, एकार्थतोह्यन्यार्थके ॥६२॥
एकस्माच्छब्दतश्चैव, अन्यशब्दे च संक्रमः ।
एकस्माद्योगतश्चैव, अन्ययोगे च संक्रमः ॥६३॥
यदा ध्याता श्रुताधारे, कं चिदेव च पर्यवम् ।
अर्थं चाश्रित्य तत्रैव, अभेदेनैव चिन्तयेत् ॥६४॥
मानसिकादियोगेषु, मध्ये चैकत्र योगके ।
निश्चलतां च सम्प्राप्य, शब्दार्थांश्च विचिन्तयेत्

---

1 पृथक्त्व

तथैव भिन्नयोगेषु संक्रमं च करोति न।
तदेकत्ववितर्कत्वनिर्विचारं द्वितीयकम् ॥६६॥
आलम्बनं हि चैकस्य चिन्तनं चैव मुख्यतः।
तथार्थशब्दयोगानां, संक्रमः सर्वथा नहि ॥६७॥
उभयध्यानमध्येषु, यत्र भेदप्रधानता।
तत्राऽभ्यासैर्दृढीकृत्य पश्चाद्भेदप्रधानके ॥६८॥
योग्यता परिप्राप्नुयाद्यथा च स्वशरीरके।
व्याप्तः सर्पविषाणाञ्च, गारुडिमन्त्रयोगतः ॥६९॥
दंशस्थानेषु चैकत्रीक्रियते मन्त्रवादिना।
तथैव सर्वविश्वेषां भिन्नविषयवस्तुषु ॥७०॥
अस्थैर्यतो भ्रमत्स्वान्तं ध्यानेनैवैकवस्तुषु।
आनीय स्थैर्यतारूपं कार्यते योगिना सदा ॥७१॥
स्वान्ते दृढे च सञ्जाते, यथा च काष्ठराशिषु।
बहुकाष्ठं च निष्कास्य, अवशिष्टं च वह्नितः ॥७२॥
दाहेन भस्मतां यायात्तथैवात्र विचार्यताम्।
अथवा पूर्णकाष्ठानि निष्कास्य वाह्निस्थानतः ॥७३॥
प्रदीप्तरूपवह्निश्च, स्वयमेवोपशाम्यति।
तथोपर्युक्तशैल्या च, एकवस्तुषु मानसम् ॥७४॥

स्थिरतां परिप्राप्नुयात् पर्यन्ते तन्मनस्तथा ।
चाञ्चल्यं च परित्यज्य, निष्प्रकम्पं प्रजायते ॥७५॥
तत्काले परिणामश्च महतीं शुद्धितां भजेत् ।
ज्ञानावरणसम्पूर्णं तदा विनाशतां भजेत् ॥७६॥
तदा सर्वज्ञभावश्च, प्राप्यते ध्यानयोगतः ।
द्वयध्यानस्वरूपस्य, व्यवस्था परिदर्शिता ॥७७॥
तृतीयशुक्लध्याने च, स्वासोच्छ्वाससमाक्रिया ।
कायिकी चैव विद्येत, तद्ध्याने पातनस्य च ॥७८॥
सम्भवो नैव कुत्रचित्कदापि, विद्यते खलु ।
ततः सूक्ष्मक्रियाऽप्रतिपातिध्यानमुच्यते ॥७९॥
चतुर्थध्यानरूपेषु, सूक्ष्मक्रियाऽपि नो भवेत् ।
तत्र चात्मप्रदेशानां निष्प्रकम्पत्वरूपता ॥८०॥
सर्वथा च सदा ज्ञेयं, अतो ध्यानचतुर्थकम् ।
क्रियानिवृत्तिरूपं[१] च, कथ्यते ध्यानशास्त्रके ॥८१॥
एतद्ध्यानप्रभावेन, सर्वाश्रवस्यद्वारकम् ।
तथा सर्वस्यबन्धस्य, द्वारं सर्वं निरुध्यते ॥८२॥

१ समुच्छिन्नक्रियानिवृत्तिरूपम्

अवशिष्टस्य चाघातिकर्मणो हि विनाशतः ।
मोक्षप्राप्तिस्ततश्चैव, परममुक्तिता भवेत् ॥८३॥
निरञ्जनो निराकारः, सिद्धः कर्मविनाशतः ।
साद्यनन्तस्थितीनां च, भोक्ता स परमेश्वरः ॥८४॥
द्विदृष्ट्या शुक्लध्यानस्य, अधिकारित्वमुच्यते ।
गुणस्थानकदृष्ट्या च, परा च योगदृष्टितः ॥८५॥
गुणस्थानं समुद्दिश्य, विचारो यदि तन्यते ।
तदा चतुर्षु शुक्लेषु, आद्यौ द्वौ च प्रकारकौ ॥८६॥
एकादशे च द्वादशे, गुणस्थाने च वर्तिषु ।
पूर्वधरेषु प्राप्येते अन्यत्र नैव तौ मतौ ॥८७॥
अत एकादशे चैव, द्वादशे गुणवर्त्तिनः ।
पूर्वधराश्च नो चेद्धि तदा शुक्लं न विद्यते ॥८८॥
परन्तु धर्मध्यानत्वं, मन्तव्यं तत्र धीमता ।
तदपि प्रायिकं ज्ञेयं, माषतुषादिसाधुतः ॥८९॥
मरुदेवादिव्यक्तिषु, दृष्टिवादस्य शून्यता ।
पूर्वधरत्वता नैव, विद्यते इति मन्यताम् ॥९०॥
शुक्लध्यानं च तत्रापि, कथितमागमे खलु ।
बाहुल्येन च तद्ध्यानं, पूर्वधरेषु ज्ञायताम् ॥९१॥

अन्यत्र धर्मध्यानं च, तद् द्वयगुणस्थानके ।
इत्याद्यद्विशुक्लानां, विचारः परिकर्त्तितः ॥९२॥
तृतीयशुक्लध्यानस्य, चतुर्थस्य तथैव च ।
केवलिनोऽधिकारिणः, तत्र नैव विवादता ॥९३॥
त्रयोदशे गुणे चैव, तथा चतुर्दशे खलु ।
केवलिनं विना नैव, विद्यन्ते चान्ययोगिनः ॥९४॥
पूर्वधरेषु चाद्यौ द्वौ, प्रकारौ सर्वदा मतौ ।
केवलिषु हि चान्त्यौ द्वौ प्रकारौ सर्वथा मतौ ॥९५
योगदृष्ट्या विचारे च, कर्त्तव्ये योगधारिषु ।
त्रिकयोगवतीव्यक्तिरधिकारवती मता ॥९६॥
कायादित्रिकयोगानां, योगत्रिकत्वधारिणाम् ।
प्रथमशुक्लध्यानस्य, स्वामिनस्ते हि सम्मताः ॥९७॥
त्रिकयोगेषु मध्ये च, कस्यचिद्योगधारिणः ।
योगिनो हि द्वितीयस्य, शुक्लस्य चाधिकारिणः ॥९८
केवलकाययोगत्वधारी ध्यानतृतीयके ।
सर्वथा योगहीनाश्च, चतुर्थशुक्लधारिणः ॥९९॥
सर्वथा संवरश्चैव, चतुर्थशुक्लध्यानके ॥
बाह्याऽभ्यन्तररूपो हि, मन्तव्यो ध्यानिना तदा १००

चतुर्षु शुक्लध्यानेषु, मोक्षहेतुत्वमुच्यते ।
आभ्यन्तरतपोरूपं, तथा संवररूपकम् ॥१०१॥
नव्यकर्मनिरोधेन, पुरातनस्य निर्जरात् ।
शुद्धात्मतत्त्वस्य सम्प्राप्तिः, सैव मोक्षो निगद्यते ॥१०२
जैनतत्त्वप्रदीपाऽऽख्यस्वीयग्रन्थानुसारतः ।
विचारः शुक्लध्यानस्य, कृतश्च मन्दबुद्धिना ॥१०३
योगशास्त्रानुसारेण, विचारः प्रविधीयते ।
योगमूर्त्तिस्वरूपाणां, हैमयोगानुवादतः ॥१०४॥
पूज्येन हेमचन्द्रेण, प्रभुणा नैकदृष्टितः ।
यथा विचारता दृष्टा, तथा चात्र प्रदर्श्यते ॥१०५॥
एकस्मिन्परमाण्वादौ, द्रव्ये पर्यायवस्तूनाम् ।
उत्पादस्थितिभङ्गानां, मूर्त्तत्वामूर्त्ततादीनाम् ॥१०६
नैकविधनयेनैव, द्रव्यपर्यायतार्थिकैः ।
यदनुचिन्तनं शास्त्राद् दृष्टिवादानुसारतः ॥१०७॥
तदाद्यशुक्लध्यानंतदर्थव्यञ्जनवस्तुषु ।
तथा योगन्तरेष्वेव, संक्रमयुक्तमाद्यकम् ॥१०८॥
विज्ञेयं ध्यानवित्सर्वमत्रैव प्रथमं हि तत् ।
अर्थव्यञ्जनभावेषु, तथा योगान्तरेषु च ॥१०९॥

मनसः संक्रमादेव, तत्र स्थैर्यं कथं भवेत् ।
इति संशयसम्प्राप्ते, उत्तरं प्रविधीयते ॥११०॥
एकद्रव्यादिवस्तुषु, मनसः स्थैर्यसम्भवात ।
अतो हि ध्यानता तत्र, अविरुद्धा निगद्यते ॥१११॥
पूर्वगतानुसारेण, एकपर्यायताश्रितम् ।
एकत्वसवितर्काख्यं, द्वितीयं शुक्लमुच्यते ॥११२
अर्थव्यञ्जनयोगेषु, संक्रमो यत्र नो भवेत् ।
निष्प्रकम्पनिवातस्थप्रदीपमिवमानसम् ॥११३॥
यत्र ध्याने भवेत्तद्धि, द्वितीयं स्पष्टरूपकम् ।
मोक्षगमनकाले च, मनोवाग्योगरोधिते ॥११४॥
बादरे काययोगे च, सार्वेण रोधिते सति ।
सूक्ष्मोच्छ्वासनिश्वासादि, कायक्रिया च यत्रः वै ॥
अनिवर्ति तथा चैव, शुक्लध्यानं तृतीयकम् ।
चतुर्थशुक्लध्यानस्य, स्वरूपं प्रतिपाद्यते ॥११६॥
शैलेशीगत सार्वस्य, शैलवन्निश्चलस्य च ।
उत्सन्नक्रियतारूपं, अप्रतिपातितूर्यकम् ॥११७॥
त्रियोगेषु च प्राथम्यं, एकयोगे द्वितीयकम् ।
शरीरयोगिनां चैव, तृतीयं परिकीर्त्तितम् ॥११८॥

अयोगिनां चतुर्थं स्यादितिध्यानं व्यवस्थितम् ।
कार्ययोगस्वरूपं च, प्रोच्यते लेशमात्रतः ॥११६॥
पञ्चशरीरयुक्तस्य, जीवस्य वीर्यवस्तुनः ।
परिणति विशेषत्वं, काययोगो निगद्यते ॥१२०॥
अन्ययोगस्वरूपं तु, जैनतत्त्वप्रदीपके ।
ग्रंथे च दर्शितं ज्ञेयं, वक्ष्ये तत्त्वप्रदीपके ॥१२१॥
ननु च शुक्लध्यानस्योपरिभेदद्वये मनः ।
केवलिषु च सर्वथा, विद्यते न कदाचन ॥१२२॥
तथा च मनसोऽभावे, कथं मानसस्थैर्यकम् ।
ध्यानं च विद्यते तत्र, इति शङ्का प्रजायते ॥१२३
छद्मस्थस्य यथा स्थैर्यं, मानसं ध्यानमुच्यते ।
तथा केवलिनश्चैव, निश्चलयोगयोगकम् ॥१२४॥
योगत्वाव्यभिचारेण, ध्यानशब्दाभिधायकम् ।
ज्ञातव्यं ज्ञानिना चैव, इति सर्वं व्यवस्थितम् ॥१२५
तथापितूर्यशुक्ले च, निरुद्धकाययोगिनि ।
काययोगविहीने च, ध्याने चातिप्रसङ्गता ॥१२६॥
तत्र ध्यानं कथं वाच्यं, शंका च महती हृदि ।
समाधानं च तस्याश्च, क्रियते योगशास्त्रतः ॥१२७

मनसः संक्रमादेव, तत्र स्थैर्यं कथं भवेत् ।
इति संशयसम्प्राप्ते, उत्तरं प्रविधीयते ॥११०॥
एकद्रव्यादिवस्तुषु, मनसः स्थैर्यसम्भवात् ।
अतो हि ध्यानता तत्र, अविरुद्धा निगद्यते ॥१११॥
पूर्वगतानुसारेण, एकपर्यायताश्रितम् ।
एकत्वसवितर्काख्यं, द्वितीयं शुक्लमुच्यते ॥११२
अर्थव्यञ्जनयोगेषु, संक्रमो यत्र नो भवेत् ।
निष्प्रकम्पनिवातस्थप्रदीपमिवमानसम् ॥११३॥
यत्र ध्याने भवेत्तद्धि, द्वितीयं स्पष्टरूपकम् ।
मोक्षगमनकाले च, मनोवाग्योगरोधिते ॥११४॥
बादरे काययोगे च, सार्वेण रोधिते सति ।
सूक्ष्मोच्छ्वासनिश्वासादि, कायक्रिया च यंत्रः वै ॥
अनिवर्ति तथा चैव, शुक्लध्यानं तृतीयकम् ।
चतुर्थशुक्लध्यानस्य, स्वरूपं प्रतिपाद्यते ॥११६॥
शैलेशीगत सार्वस्य, शैलवन्निश्चलस्य च ।
उत्सन्नक्रियतारूपं, अप्रतिपातितूर्यकम् ॥११७॥
त्रियोगेषु च प्राथम्यं, एकयोगे द्वितीयकम् ।
शरीरयोगिनां चैव, तृतीयं परिकीर्त्तितम् ॥११८॥

अयोगिनां चतुर्थं स्यादितिध्यानं व्यवस्थितम् ।
कार्ययोगस्वरूपं च, प्रोच्यते लेशमात्रतः ॥११९॥
पञ्चशरीरयुक्तस्य, जीवस्य वीर्यवस्तुनः ।
परिणति विशेषत्वं, काययोगो निगद्यते ॥१२०॥
अन्ययोगस्वरूपं तु, जैनतत्त्वप्रदीपके ।
ग्रंथे च दर्शितं ज्ञेयं, वक्ष्ये तत्त्वप्रदीपके ॥१२१॥
ननु च शुक्लध्यानस्योपरिभेदद्वये मनः ।
केवलिषु च सर्वथा, विद्यते न कदाचन ॥१२२॥
तथा च मनसोऽभावे, कथं मानसस्थैर्यकम् ।
ध्यानं च विद्यते तत्र, इति शङ्का प्रजायते ॥१२३
छद्मस्थस्य यथा स्थैर्यं, मानसं ध्यानमुच्यते ।
तथा केवलिनश्चैव, निश्चलयोगयोगकम् ॥१२४॥
योगत्वाव्यभिचारेण, ध्यानशब्दाभिधायकम् ।
ज्ञातव्यं ज्ञानिना चैव, इति सर्वं व्यवस्थितम् ॥१२५
तथापितूर्यशुक्ले च, निरुद्धकाययोगिनि ।
काययोगविहीने च, ध्याने चातिप्रसङ्गता ॥१२६॥
तत्र ध्यानं कथं वाच्यं, शंका च महती हृदि ।
समाधानं च तस्याश्च, क्रियते योगशास्त्रतः ॥१२७

यथा कुलालचक्रं हि, भ्रमिनिमित्तदण्डके ।
अभावेऽपि च पूर्वाभ्यासाद्भ्रमति विलोक्यते ॥१२८
तथा च मानसादीनां, योगानां चैव सर्वथा ।
उपरमेऽपि योगीनां, ध्यानं भवति निश्चलम् ॥१२९
यद्यपि शब्दतो योगाः न सन्ति चेति मन्यते ।
तथापि सार्वरूपस्य, ईशस्य परमात्मनः ॥१३०॥
उपयोगत्वरूपस्य, भावमानसयोगतः ।
ध्यानमयोगिनां चैव, मन्तव्यमिति निश्चितम् ॥
यद्वा ध्यानस्य कार्यस्य, निर्जरणस्य हेतुतः ।
ध्यानं स्यादिति मन्तव्यं, तद्दृष्टान्तेन दर्श्यते ॥
यथा च पुत्रकार्यस्य, कर्त्तव्येऽपुत्रकः खलु ।
पुत्र इति निगद्येत, तथैवात्र विलोक्यताम् ॥१३३॥
भवति चास्य सार्वस्य, भवोपग्राहिकर्मणाम् ।
निर्जरारूपकार्यं तदन्यत्र प्रतिपाद्यते ॥१३४॥
शब्दार्थस्य बहुत्वेन, अथवा ध्यानता भवेत् ।
यथा च हरिशब्दस्य, अर्कमर्कटकादयः ॥१३५॥
बहवोऽर्थाश्च विद्यन्ते, एवं ध्यानपदस्य च ।
ध्यै धातुश्च चिन्तायां, ध्यै काययोगरोधके ॥१३६॥

ध्यैं चायोगिकत्वेऽपि, वदन्ति शुद्धज्ञानिनः ।
प्रमाणं परिदर्श्येत, विना मानं न मन्यते ॥१३७॥
निपाताश्चोपसर्गाश्च, धातवश्चेति ते त्रयः ।
अनेकार्थाः स्मृताः सर्वे, पाठस्तेषां निदर्शनम् ॥१३८
आगमश्चोपपत्तिश्च, सम्पूर्णं दृष्टिलक्षणम् ।
अतीन्द्रियाणामर्थानां, सद्भावप्रतिपत्तये ॥१३९॥
गृहीत्वैकमर्थं शास्त्रादर्थान्तरे ततो व्रजेत् ।
ततः शब्दं च शब्दाद्धि, पुनरर्थं च योगतः ॥१४०
योगान्तरे ततो गच्छेत् सुधीरेवं क्रमेण वै ।
सङ्क्रामति च शीघ्रं वै, अर्थादिषु च ध्यायकः १४१
अनेनैव प्रकारेण, व्यावर्तते स्वयं तथा ।
पृथक्त्वे सुदृढाऽभ्यासः, जायते योगिनो यदा १४२
प्रकटितात्मसामर्थ्यः, तदैकत्वस्य योग्यता ।
उत्पादस्थितिनाशादिपर्यवस्यैकयोगकः ॥१४३॥
ध्यायति पर्यवं चेकं, एकत्वमविचारकम् ।
त्रिलोकीविषयं ध्यानादणुसंस्थं मनः क्रमात् ।
धारयेद्देहगं विषं दंशे मंत्रेण मांत्रिकाः ।
ज्वलति चैव ध्यानाग्नौ, समुज्ज्वले च योगिनः १४५

दहन्ति निखिलान्येव, घातिकार्माणि तत्क्षणे ।
ज्ञानदृष्टेश्च ह्यावारं, मोहं तथान्तरायकम् ॥१४६॥
एतानि घातिकर्माणि, विलयं यान्ति तत्क्षणात् ।
केवलज्ञानदृष्टी च, सम्प्राप्य दुर्लभे ततः ॥१४७॥
योगी पश्यति जानाति, लोकालोकं यथार्थकम् ।
सर्ववस्तुत्वज्ञानेन सर्वज्ञः परिकथ्यते ॥१४८॥
सर्वस्य दर्शनेनैव, सर्वदर्शी निगद्यते ।
सत्त्वादित्रिगुणानां च, अभावे निर्गुणो भवेत् ।१४९
ज्ञायिकज्ञानसद्भावे, सगुणः परिकथ्यते ।
स वीतरागः सर्वज्ञः केवली भगवान् किल ॥१५०॥
यावदायुष्कसद्भावः, तावत्कालपर्यन्तकम् ।
विहरति क्षमायां च, सुरासुरनरोरगैः ॥१५१॥
प्रणतोऽनन्तसामर्थ्यः, विहरति च तैः सह ।
भव्यजीवप्रबोधाय, जगन्नाथः सतीर्थपः ॥१५२॥
वाग्ज्योत्स्नयाऽखिलान्येव, भव्यकमलबोधोनि ।
बोधयति च तत्कालं, मिथ्यात्वं च विनाशयेत् ।१५३
तन्नामस्मृतिमात्रेण, अनादिकालसम्भवम् ।
दुःखं च भव्यजीवानां, क्षयं याति न संशयः १५४

सर्वातिशयतत्त्वानां, श्रीवीतरागस्त्रोत्रके ।
स्वरूपं विस्तरेणैव कथितं परिज्ञायताम् ॥१५५॥
स्वरूपज्ञानलिप्सुभिः, स ग्रन्थः प्रविलोक्यताम् ।
ग्रन्थवृद्धिभयेनैव, अत्र न प्रतिपाद्यते ॥१५६॥
वाग्गुणाः पञ्चत्रिंशच्च, जायन्ते घातिनाशतः ।
अष्टौ च प्रातिहार्यादिगुणावलिर्विराजते ॥१५७॥
तादृशी खलु शक्तिश्च, तीर्थङ्करेषु जायते ।
अन्येषां तादृशी गुणावलिर्न प्रकटीयते ॥१५८॥
क्षायिकाश्च गुणाः सर्वे, केवलिषु भवन्ति वै ।
ततोऽघातिविनाशेन, सिद्धा भवन्ति शाश्वताः ॥१५६

प्रोक्तं योगशास्त्रे—

तीर्थङ्करनामसंज्ञं न यस्य कर्मास्ति सोऽपि
योगबलात् ।
उत्पन्नः केवलः सन् सत्यायुषि बोधयत्पुर्वीम् ।१६०।
सम्पन्नकेवलज्ञानदर्शनोऽन्तर्मुहूर्त्तशेषायुः ।
योगी चार्हति ध्यानं, तृतीयमपिऽ कर्त्तुमचिरेण ॥
सर्वे च योगिनो ध्यानं, चाविशेषेण चान्यथा ।
आरभन्ते तृतीयं च, विशेषमुत चास्ति वै ॥१६२॥

तत्स्वरूपविज्ञानार्थं, स्पष्टरूपं निगद्यते ।
स्वच्छचित्तेन श्रोतव्या, तृतीयध्यानकालता ॥१६३॥
आयुष्ककर्मणां यावत्स्थितिः शेषा च तावती ।
कर्मणो वेदनीयस्य, यदि स्याच्च तदा तथा ॥१६४॥
आरभते तृतीयं तदथायुःस्थितिकस्य वै ।
सकाशाच्च द्राघीयसी, स्थितिश्च वेदनीयके १६५
स्थितिरसादिवस्तूनां, घाताद्यर्थं तदा खलु ।
समुद्घातं करोत्येव, सर्वज्ञो भगवान् तदा ॥१६६॥

तथा च प्रोक्तं योगशास्त्रे—

केवलिनः पुनर्यस्य, कर्म भवत्यायुषोऽतिरिक्ततरम् ।
स समुद्घातं भगवानथ, गच्छति तत्समीकर्त्तुम् ॥
समुद्घातस्य शब्दार्थः, स्पष्टरूपेण कथ्यते ।
अपुनर्भावताद्योतिसंशब्दः परिकीर्त्तितः ॥१६८॥
उत्प्राबल्यार्थके चेत्र, हननं घातरूपकम् ॥
तच्च देहबहिर्जीवप्रदेशस्य निःसारणम् ॥१६९॥

---

१ अथवाऽऽयुष्ककर्म

तस्य विधिक्रमश्चैव, स्वबोधार्थं निगद्यते ।
यदि च तत्र त्रुटिः स्यात्प्रेषणीया समीपके ॥१७०॥
प्रथमे समये एव, स्वदेहतुल्यमानकम् ।
ऊर्ध्वमधश्च ह्यायतं, लोकान्तगामिनं तथा ॥१७१॥
जीवप्रदेशसङ्घातं दण्डाकारं च केवली ।
करोतीति च विज्ञेयं, द्वितीयसमये खलु ॥१७२॥
तदेव दण्डकं चैव, पूर्वापरदिशाद्वये ।
प्रसारणाद् च पार्श्वाद्धि कपाटवत्कपाटकम् ॥१७३॥
लोकान्तगं करोत्येव, तृतीये समये किल ।
तदेवं च कपाटं वै, दक्षिणोत्तरदिग्द्वये ॥१७४॥
प्रसारणाच्च मन्थानमिव लोकान्तगामिनम् ।
मन्थानं च करोत्येव, एवं च लोगभागकम् ॥१७५
बहुपूरितकं प्रायो, जीवप्रदेशकैस्तथा ।
चतुर्थसमये चैव, मन्थान्तराणि पूरयेद् ॥१७६॥
लोकनिष्कुटकैः साकं, तान्येव पूरयेत्खलु ।
ततश्च सकलो लोकः जीवप्रदेशपूरितः ॥१७७॥
लोकपूरणगीतेन, आत्मविभुत्वं चापरैः ।
स्वीकृतमिति विज्ञेयं स्तोके च सर्वकालिकम् १७८

तथा चोक्तम्—

विश्वतश्चक्षुरुत विश्वतो मुखं विश्वतो बाहुरुत-
विश्वतः पात् इत्यादि ॥१७६॥

अज्ञजनोपरिष्टाच्च दयाभावो वितन्यते ।
चतुर्थसमये चैव, लोकान्तव्यापिता भवेद् ॥१८०॥
सर्वकालिकता नैव, आत्मविभुत्वकं वदेत् ।
अतो ज्ञानं परित्यज्य, सम्यक्तया विचार्यताम् १८१
युक्तिप्रमाणदृष्ट्या च विभुत्वं नैव सिध्यति ।
अतो मिथ्यात्वभावश्च महाशयेन त्यज्यताम् १८२
पञ्चमसमये पूर्वक्रमेण प्रतिलोमकम् ।
मन्थान्तराणि जीवस्य, सकर्मकप्रदेशकम् ॥१८३॥
सङ्कोचयति सर्वज्ञः, मन्थानस्योपसंहृतिः ।
घनतरस्य सङ्कोचनात् क्रियते क्षणषष्ठके ॥१८४॥
सप्तमे समये चैव, संह्रियते कपाटकम् ।
दण्डात्मनि च सङ्कोचात् तादृशी जायते स्थिति ॥
अष्टमे समये दण्डं, उपसंहृत्य देहगः ।
भवति सर्वज्ञो देवः, कर्त्तव्यकरणेन च ॥१८६॥
समुद्घातस्य कालेष, मनोवाग्योगव्यापृतिः ।

प्रयोजनस्य राहित्याद् योगिना न वितन्यते ॥१८७॥
काययोगस्य व्यापृतिः, केवलैव तदा भवेत् ।
आद्याष्टमक्षणे चौदारिककायस्य योगता ॥१८८॥
द्वितीयषष्ठकाले[1] च, पुनरौदारिकं ततः ।
वहिष्ट्वगमनेनैव, कार्मणवीर्यस्पन्दतः ॥१८९॥
औदारिकेन कार्मण्ये[2], मिश्रता प्रविमन्यते ।
औदारिकत्वकार्मणमिश्रयोगो निगद्यते ॥१९०॥
तृतीय चतुर्थे चैव, पञ्चमे समये किल ।
कार्मणयोगता सा च केवलैव निगद्यते ॥१९१॥

भावार्थ :—

औदारिकाद् बहिर्बहुतरप्रदेशव्यापृतेः ।
असहायककार्मण्ययोग एवावतिष्ठते ॥१९२॥

तथा चोक्तं योगशास्त्रे :—

औदारिकप्रयोक्ता, प्रथमाष्टसमय-रसाविष्टः ।
मिश्रौदारिकप्रयोक्ता, सप्तमषष्ठद्वितीयेषु ॥१९३॥

---

1 सप्तमे—2 कार्मणस्य

कार्मणशरीरयोगी, चतुर्थके पञ्चमे तृतीये च ।
समयत्रयेऽपि तस्मिन्भवत्यनाहारको नियमात् ॥
परित्यक्तसमुद्घातः, योगत्रिकं च कारणात् ।
व्यापर्त्यपि यथाऽनुत्तरसुरः पृष्ठो मानसम् ॥१९५॥
योगसत्यं च ह्यसत्याऽमृषां वा प्रयुंक्ते खलु ।
एवमामन्त्रणादौ च, वाग्योगमपि नेतरौ ॥१९६॥
द्वौ भेदौ च द्वयोरपि, औदारिकं शरीरकम् ।
काययोगत्वव्यापकं, फलकप्रतिदानके ॥१९७॥
अन्तर्मुहूर्त्तकाले च, योगरोधश्च योगिना ।
क्रियते तत्स्वरूपं च अनुक्रमेण दर्श्यते ॥१९८॥
त्रेधा योगोऽपि ज्ञातव्यः सूक्ष्मो बादररूपकः ।
केवलोत्पत्तिकादुत्तरकालश्चजघन्यतः ॥१९९॥
अन्तर्मुहूर्त्तमात्रं च, देशोनोत्कृष्टतस्तथा ।
पूर्वकोटिप्रमाणं च, तावत्कालं विहारवान् ॥२००॥
अन्तर्मुहूर्त्तमात्रं हि, यदायुरवशिष्यते ।
तदा सयोगिसर्वज्ञः, बादरकाययोगतः ॥२०१॥
प्रथमं बादरो चैव, वाङ्मानसयोगकौ ।
निरुणद्धि ततः पश्चात्सूक्ष्मकायस्य योगताम् ॥२०२

बादरकाययोगं च, निरुणद्धि ततः परम् ।
सति तस्मिंश्च सूक्ष्मयोगस्य रोद्धुमशक्यतः ॥२०३
धावन् सन् नरो नैव, वारयंति च वेपथु ं ।
बादरयोगसर्वस्य, निरोधानन्तरं तथा ॥२०४॥
सूक्ष्मेण काययोगेन, सूक्ष्मौ वाङ्मानसौ किल ।
निरुणद्धि च तौ योगौ, सूक्ष्मक्रियांमनैवृति ॥२०५॥
तृतीयं शुक्लध्यानं तत्स्वात्मनैव करोति सन् ।
सूक्ष्मकायिकयोगं च, निरुणद्धि च केवली ॥२०६॥
चतुर्थशुक्लध्यानं च, आविर्भवेद्योगके ।
अस्यान्ते चैव क्षीयन्ते, चत्वार्यघातिकानि च २०७
लघुपञ्चकवर्णोत्थोच्चारणकालतुल्यकम् ।
कालमवाप्य शैलेशीं, युगपत्क्षपयेत् खलु ॥२०८॥
वेद्यायुर्नामगोत्राणि, परितः परिनाशयेत् ।
औदारिकं च तैजस्यं, कार्मणं भवमूलकम् ॥२०९॥
त्यक्त्वेह ऋजुश्रेण्यैव, याति लोकान्तकं खलु ।
एकेन समयेनैव, कर्त्तव्यो नात्र संशयः ॥२१०॥
ननु चोपरि गच्छन् सन् लोकान्तादपि चोर्ध्वकम् ।
गच्छति च ततः किं न, देहत्यागभूमेरधः ॥२११॥

तिर्यग्वा किं न गच्छेच्च, इति शङ्का प्रजायते ।
उत्तरं योगन्यायेन, अत्रैव परिदृश्यते ॥२१२॥
गतिसहायकं तत्त्वं, धर्मास्तिकायनामकम् ।
स्थितिसहायकं चैवाऽधर्मास्तिकायरूपकम् ॥२१३॥
तत ऊर्ध्वं च तत्त्वस्य, तद्द्वयस्य वियोगतः ।
न गच्छतीति मन्तव्यं, प्रमाणस्य प्रदर्शनात् ॥२१४
तत्त्वद्वयस्य सिद्धिस्तु, द्रव्यप्रदीपशास्त्रके ।
युक्तिप्रमाणरूपेण दर्शिता तत्र लोक्यताम् ॥२१५॥
अधोगमनहेतुकं, गौरवं नैव विद्यते ।
अधो याति ततो नैव, काययोगवियोगतः ॥२१६॥
योगप्रयोगताऽभावे न तिर्यगपि गच्छति ।
अतः पूर्वोक्तशङ्कायाः अवसरो न विद्यते ॥२१७॥
मृदष्टलेपलिप्तं च, यथाऽलाबुजले क्षिपेत् ।
यावत्तल्लेपसद्भावः, तावज्जले निमज्जति ॥२१८॥
मृल्लेपक्षालनेनैव, शुद्धालाबु यदा भवेत् ।
तदा जलस्य चोपरिष्टादागच्छति तुम्बकम् ॥२१९
नोर्ध्वं याति जलाभावात्, लेपाभावादधस्ततः ।
न यातीति च मन्तव्यं युक्तिप्रमाणयोगतः ॥२२०॥

वायूनां प्रेरणेनैव, किन्तु तिर्यक् च गच्छति ।
तथा च सिद्धजीवानां दृष्टान्तं प्रविचार्यताम् ॥२२१
कर्माष्टकस्य लेपेन, जीवतुम्बं भवोदधौ ।
मज्जति योगमार्गेण, दृष्टान्तं प्रविचार्यताम् ॥२२२
जीवतुम्बं च लोकान्तं धर्माधर्मावधिस्तथा ।
तावत्पर्यन्तकं याति, नोर्ध्वं ततोऽपि गच्छति ॥
कर्माष्टकवियोगेन, गौरवस्य वियोगतः ।
नाधोऽपि याति सिद्धश्च परप्रेरणशून्यतः ॥२२४॥
तिर्यगपि न याता सः अतो लोकान्तके स्थितः ।
साद्यनन्तस्थितिकत्व, पर्यन्तं परितिष्ठति ॥२२५॥
साद्यनन्तस्वरूपं तदनुपमं स्वभावजम् ।
अव्याबाधं च तत्सौख्यं, सर्वज्ञेनैव प्राप्यते ॥२२६

शङ्कासमुत्थानम्—

सादिकथमनन्तं स्याद्युक्तया च नैव युज्यते ।
सादित्वं यत्र दृष्टं वै, तस्य विनाशता ध्रुवम् ॥२२७
यथा घटादिकं सादि तस्य ध्वंसो विलोक्यते ।
तथैव सिद्धिसौख्यस्य, विनाशो नैव संशयः ॥२२८

समाधानम् :—

इति शङ्काकुले लोके, समाधानं वितन्यते ।
तेनैव घटज्ञातेन, साद्यनन्तकतां भजेत् ॥२२६
प्रध्वंसो हि घटादीनां, जातश्च मुद्गरादितः ।
प्रध्वंसस्य क्षयो नास्ति, अनन्तत्वमतो मतम् ॥२३
प्रध्वंसस्य क्षयश्चेद्धि, मन्यते मन्दबुद्धिना ।
तदा तु घटसद्भावः, तत्कालेऽपि प्रसज्यते ॥२३१॥
अनन्तत्वं प्रध्वंसे च, नैयायिकेन स्वीकृतम् ।
सर्वदर्शनकारैश्च, तत्रानन्त्यं निगद्यते ॥२३२॥
तथा च घटध्वंसे हि, सादित्वं घटध्वंसतः ।
अनन्तत्वं प्रध्वंसे च, विनाशस्य वियोगतः ॥२३३
साद्यानन्त्यं च युक्त्या वै मोक्षसुखे विभाव्यताम् ।
युक्तिप्रमाणदानेन, साधितं नात्र संशयः ॥२३४॥
स्वाभाविकं च तज्ज्ञेयमात्मस्वरूपमात्रतः ।
न कारणान्तरादेव, एवं सुखं प्रजायते ॥२३५॥
मुक्तौ सुखादिकं नैव, वैशेषिकैश्च मन्यते ।
आत्मविशेषभावानां, गुणानां समुच्छेदता ॥२३६।
यत्रैव जायते तत्र, मोक्षत्वं प्रविमन्यते ।

इत्यादि बालचापल्यमज्ञानिनां च ज्ञायताम् ॥२३७॥
गुणानां समुच्छेदश्च, यदि मोक्षो निगद्यते ।
गुणहीनं शिवं चैव, अभिलषति को जडः ॥२३८॥
जडत्वं यदि मुक्तौ चेत्तदा शृगालता वरा ।
कदाचिज्ज्ञानमात्रा च, तत्रापि प्रविलोक्यते ॥२३६
अतः प्रोक्तं मल्लिषेणसूरिभिः—
वरं वृन्दावने रम्ये, क्रोष्टुत्वमभिवाञ्छितुम् ।
न तु वैशेषिकीं मुक्तिं, गौतमो गन्तुमिच्छति २४०
गुणशून्यश्च मोक्षश्चेत्कथं संसारतां त्यजेत् ।
योगाङ्गपालने कष्टं, कथं त्वया विधीयते ॥२४१॥
चार्वाकसदृशैर्भावैः सुखेन परिजीव्यताम् ।
कथं कारं च वैराग्यं, ब्रह्मचर्यं च धार्यते ॥२४२॥
अतो मातृमुखा एते, युक्तिविकलभाषिणः ।
तेऽपि न योगयोग्याः स्युरिति सर्वं व्यवस्थितम् ॥
सांख्यबौद्धादिकाः सर्वे, मुक्तिसुखविहीनकाः ।
सम्यग्दर्शनहीनास्ते, प्राप्नुवन्ति कथं सुखम् ॥२४४
सवेद्यं योगिनामेव, परेषां श्रुतिगोचरम् ।
उपमाऽभावतो व्यक्तमभिधातुं न शक्यते ॥२४५

कीदृशी सुखता तत्र, इति वक्तुं न शक्यते ।
उपमाऽभावता तत्र, अतो न प्रतिपाद्यते ॥२४६॥
नालिकेरीयद्वीपस्थः, जनोऽपि दैवयोगतः ।
समागतो नगर्यां च, प्रचुरा यत्र भोज्यता ॥२४७॥
सुस्वादु तत्र मिष्टान्नं, नैकविधं च विद्यते ।
नैके जनाश्च भुक्त्यर्थं, तत्रैव समुपस्थिताः ॥२४८॥
केनचिच्च दयाभावाद्, भुक्त्यर्थं स निमन्त्रितः ।
कुक्ष्यवगाहपर्यन्तं, यथेष्टं च भुनक्ति सः ॥२४९॥
आगतः स्वगृहे भुक्त्वा, पुत्रादिकैश्च पृच्छ्यते ।
भवान् कुत्र गतो यद्वा, किं भुक्तं तन्निगद्यताम् ॥
नालिकेरं बिना नैव, किमप्यन्यं च विद्यते ।
ज्ञाप्यते च कया रीत्या, इति चिन्तातुरो महान् ।
य[illegible]नं धृतं तेन, तावत्पुनश्च पृच्छ्यते ।
स्वादितं वस्तुतत्त्वं च, ज्ञापितं नैव शक्यते २५२
तथा मोक्षसुखं नैव, ज्ञापितं शक्यते जनैः ।
संसारे तादृशं वस्तु, न विद्यते कदाचन ॥२५३॥
सादृश्याऽभावतः तद्धि उपमितुं न शक्यते ।
उपमानादितश्चैव, यद्युपमेयके गुणाः ॥२५४॥

अधिकाश्चैव विद्यन्ते, तदा तत्रोपमानता ।
अत्राधिकगुणाश्चैव, तत्सुखापेक्षया यदि ॥२५५॥
विद्यन्ते च तदा तत्र उपमानं विधीयते ।
संसारे तादृशं वस्तु, कदाचिन्नैव विद्यते ॥२५६॥
उपमाऽभावतश्चैव, अभिधातुं न शक्यते ।
इति यदुक्तकं तच्च, सुसत्यं परिमन्यताम् ॥२५७॥
निराबाधं सुखं शुद्धं, मोक्षे च प्रतिपादितम् ।
तदर्थं यत्नता चैव, कर्त्तव्या सर्वदा जनैः ॥२५८॥
संसारे च सुखं नैव, विद्यते हि कदाचन ।
अतोऽपि तत्र मोहत्वमज्ञानं किं ततः परम् २५९
अनन्तज्ञानदृष्टित्व, सुखवीर्यमयः खलु ।
प्रमाणसिद्धमोक्षश्च, जैनशासनसम्मतः ॥२६०॥
तत्र श्रद्धा सदा कार्या, तदर्थमुद्यमोयताम् ।
अन्यत्सर्वं परित्यज्य, तत्र यत्नो विधीयताम् २६१
एवं च शुक्लध्यानस्य, स्वरूपं कथितं मया ।
स्वस्यैव प्रतिबोधाय, परेषां सुखहेतवे ॥२६२॥
इति श्रीशास्त्र-विशारदजैनाचार्य जगद्विख्यात-
धर्मिजनमान्यशासनरक्षकजङ्गमयुगप्रधान-

जगद्गुरुदेशिविंदश्यनेकजनसंशयभञ्जन-
सूरिचक्रचक्रवर्त्ति अनेकग्रन्थनिर्मा-
पकानेकशिक्षणसंस्थासंस्थापकानेक-
जीर्णोद्धारकश्रीविजयधर्मसूरीश्व-
रशिष्यन्यायतीर्थन्यायविशारदो-
पाध्यायमङ्गलविजयेन विनि-
र्मिते योगप्रदीपे शुक्लध्यान-
वर्णननामाविंशतितमः
प्रकाशः समाप्तः ॥

# समाधिनिरूपणम् ।

समाधिरूपता यैश्च, प्राप्ता च जगदीश्वरैः ।
तेभ्यः समाधिरूपेभ्यः, श्रीपार्श्वेभ्यो नमोनमः ॥१

यस्माच्छ्रद्धागुणः प्राप्तः, यस्माच्च ज्ञानबिन्दुता ।
यस्माच्चारित्र सम्प्राप्तिः, तस्मै श्रीगुरवे नमः ॥२॥

सत्समाधिस्वरूपं च, अत्रैव परिवर्ण्यते ।
अज्ञानदोषसङ्गेन, त्रुटिश्चेत् क्षम्यतां सता ॥३॥

समाधिस्तु तदेवार्थमात्राभासकरूपकम् ।
ध्येयस्य ध्यानता ध्याने, समाधौ ध्येयरूपता ॥४॥

यदर्थं क्रियते ध्यानं, तदेवार्थस्वरूपकम् ।
समाधौ प्रकटीयेत, अतस्तत्रैव श्रेष्ठता ॥५॥

सारसामाधितादृष्टिः, पूर्णप्रवृत्तिरूपिका ।
स्वस्वभावेषु ज्ञातव्या, चन्द्रवद्बोधदर्शिका ॥६॥

व्यतिचार[1] पदोयोगी, अत्रैव परिदृश्यते ।
नातिचारस्वलेशो[1] हि, सूक्ष्मोऽपि प्रणिगद्यते ॥७॥

---

१ केवलित्वादतिचारलेशोऽपि समाध्यवस्थायां न दृश्यते

आरोहाऽऽरूढसादृक्षो, अस्य गतिश्च तादृशी ।
चन्दनगन्धतुल्या च, क्षमाप्यत्रैव दृश्यते ॥८॥
आसंगरहिताप्यत्र, क्रिया स्वगुणपोषिका ।
शिक्षातश्च यथारत्नयोजकदृष्टिभिन्नता ॥९॥
तथा तस्य नियोगेन, अपूर्वयत्नयोगतः ।
केवल क्षमता तस्य, जायते शक्तिशालिनः ॥१०॥
सर्वज्ञः क्षीणदोषश्च, सर्वलब्धिसमन्वितः ।
परोपकारिपूर्णश्च, शिवसुखं भजेत्ततः ॥११॥
योगनिरोधतां कृत्वा, अयोगिभावतां भजेत् ।
सर्वशत्रुक्षयादेव, सर्वव्याधिविनाशता ॥१२॥
पूर्णसर्वसमीहश्च, सर्वार्थयोगके यथा ।
जाता ततोऽपि चानन्तगुणा तस्य निरीहता ॥१३॥
तृतीयशुक्लध्यानेषु, सम्प्रज्ञातसमाधिता ।
योगनिरोधताकाले, सूक्ष्मा क्रिया च तत्र वै ॥१४॥
चतुर्थशुक्लध्यानेषु, सर्वथाश्रवरोधता ।
शैलेशीं च दशां प्राप्तः, असंप्रज्ञातता ततः १५
सर्वाश्रवप्रवृत्तीनां, सर्वथा तत्र शून्यता ।
सर्वसंवरता तत्र, सर्वथा प्रकटीयते ॥१६॥

योगग्रन्थानुरोधेन, सर्वमेतत्प्रपञ्चितम् ।
द्वेधा समाधिता चैव, संक्षेपेन निरूपिता ॥१७॥
तृतीयतूर्यध्यानस्य शुक्लस्य प्रतिपादने ।
समये कथितं सर्वमतोऽत्र न निगद्यते ॥१८॥
प्रासङ्गिकं च यत्किञ्चिद्योगविषयकं तथा ।
निरूपणेऽवकाशं च, दृष्ट्वाऽत्र प्रतिपाद्यते १६
योगिनो द्विविधा ज्ञेया, कुलप्रवृत्तयोगिनः ।
योगिकुलेषु ये जाता, तद्धर्मे चानुरागिणः ॥२०॥
ते कुलयोगिनो ज्ञेयाः, कथ्यन्ते योगिनः परे ।
दयावन्तश्च सर्वत्र, परोपकारिणः सदा ॥२१॥
सुश्रूषादिगुणानां च सेवने तत्पराः खलु ।
प्रवृत्तचक्रयोगिनः, त एव परिकीर्त्तिताः ॥२२॥
शुद्धभाववती या च, भावशून्या च या क्रिया ।
तद्द्वयोरन्तरं ज्ञेयं, भानुखद्योतवत् यथा ॥२३॥
तथाऽत्र द्वययोगीनामन्तरं परिज्ञायते ।
यद् हृदि छद्मनास्त्येवाऽशुद्धभावप्रकाशकम् ॥२४॥
गुह्यदोषादिसेवित्वं तस्याग्रे परिकथ्यताम् ।
जनकल्याणयुक्तस्य, यत्र रागादिशान्तिता ॥२५॥

यच्चित्ते भेद भावश्च, तस्य गुह्यं न कथ्यते ।
योग्यायोग्यविभागस्य, अज्ञानिनो जनस्य च २६
तस्याग्रे नैव वक्तव्यं, गुह्यभावप्रकाशनम् ।
वक्तव्ये दोषवृद्धिः स्याद् गुणानां च विनाशता २७
विशुद्धज्ञानिना चैव, योग्यायोग्यविभागताम् ।
ज्ञात्वैव परिवक्तव्यं, परेषां गुणपुष्टये ॥२८॥
योगस्तु द्विविधः प्रोक्तः, जैनेतरीययोगके ।
प्रथमः सम्प्रज्ञातः स्याद्द्वितीयोऽसम्प्रज्ञातकः ॥२६॥
जैनयोगानुसारेण, तुलना च विधीयते ।
अध्यात्मभावनायोगो, ध्यानं च समता तथा ॥३०॥
वृत्तिसंक्षयतारूपः पञ्चमः परिकीर्त्तितः ।
एतेषां पञ्चयोगानां, मध्ये पञ्चमयोगके ॥३१॥
द्विविधस्यापि योगस्य, समावेशस्तु पञ्चमे ।
येन रूपेण जायेत, तत्प्रकारो निगद्यते ॥३२॥
आत्मनः स्थूलसूक्ष्माणां, चेष्टानां च तद्धेतूनां ।
कर्मसंयोगयोग्यत्वानां च क्रमेण ह्रासता ॥३३॥
वृत्तिसंक्षयरूपत्वं, तत्रैव परिभाष्यते ।
वृत्तिसंक्षयता साऽपि, ग्रंथिभेदेन भाविनी ॥३४॥

उत्कृष्टमोहबन्धानां, सम्बन्धस्य विनाशतः ।
प्रारभ्यते ततश्चैव, त्रयोदशगुणालये ॥३५॥
परिपूर्णत्वमाप्नोति, विशेषत्वं निगद्यते ।
अष्टमगुणस्थानाच्च, द्वादशे गुणस्थानके ॥३६॥
पृथक्त्वसवितर्काख्यध्यानं, च प्रथमं मतम् ।
एकत्वसवितर्कं च, शुक्लध्यानं द्वितीयकम् ॥३७॥
तत्रैव द्विप्रकारेषु, समावेशो विधीयते ।
सम्प्रज्ञाताख्ययोगस्य, योगिभिःपरिज्ञायताम् ॥३८॥
निर्वितर्कविचारानन्दास्मितानिर्भासित्वकम्[1] ।
पर्यायरहिते तत्र, शुद्धद्रव्यत्ववस्तुके ॥३९॥
शुक्लध्याने द्वितीये च, एकत्वसवितर्कके ।
सम्प्रज्ञातस्य योगस्य, अन्तर्भावो विधीयते ॥४०॥
असम्प्रज्ञातयोगस्तु, केवलज्ञानप्राप्तितः ।
त्रयोदशाख्यके चैव, चतुर्दशाख्यके तथा ॥४१॥
गुणस्थाने च संस्कारशेषरूपोऽवशिष्यते ।
अघातिकर्मसम्बन्धः, संस्कारशेषता खलु ॥४२॥

---

१ निर्भासाऽऽख्यकम

संस्कारशेषतारूपो ह्यसम्प्रज्ञातयोगकः ।
तादृशी च दशायां च, मतिज्ञानविशेषकः ॥४३॥
संस्कारसम्भवो नैव, भावस्वान्तवियोगतः ।
अतः संस्कारशेषेण, अघातिकर्मरूपकः ॥४४॥
सम्बन्धः परिज्ञातव्यः नान्योऽपि कुत्रचिद् भवेत् ।
अतोऽप्यसम्प्रज्ञातत्वयोगो ध्यानद्विरूपकः ॥४५॥
तृतीयशुक्लध्यानं च चतुर्थशुक्लध्यानकम् ।
तत्रैव ध्यानरूपे च, समावेशो विभाव्यते ॥४६॥
परैर्द्वियोगता प्रोक्ता, जैनैर्ध्यानचतुष्ककम् ।
केवलनामभिन्नत्वं, परैः प्रोक्तं स्वशास्त्रके ॥४७॥
वास्तविकार्थसम्प्राप्तिः, परत्र नैव दृश्यते ।
यादृशीस्फुटरूपाऽत्र, तादृशी नैव कुत्रचित् ॥४८॥
अन्त्यद्विशुक्लतारूपः, असम्प्रज्ञातयोगकः ।
जैनशास्त्रेषु ज्ञातव्यः, योगिना योगकांक्षिणा ॥४९॥
योगप्रदीपनामाख्यं, यच्च शास्त्रं विनिर्मितम् ।
पातञ्जलादिशास्त्राणां, यथामत्या विलोकनात् ५०
यादृशं जैनशास्त्रेषु, योगानां च निरूपणम् ।
तादृशं नैव चान्यत्र, सूक्ष्मावलोकनं तथा ॥५१॥

सर्वज्ञागममध्येषु, सम्पूर्णं प्रतिपादितम् ।
कुत्रचिद् दृष्टिरूपेण, कुत्रचिद्योगनामतः ॥५२॥
तत्तत्सर्वं विलोक्यैव, मया च मन्दबुद्धिना ।
सर्वेषां योगरूपं हि, यथा मत्या प्रकाशितम् ॥५३॥

॥ इतिश्रीशास्त्रविशारदजैनाचार्यश्रीमद्विजय-
धर्मसूरीश्वरशिष्येण न्याय विशारद-
न्यायतीर्थोपाध्यायमङ्गलविजयेन
विनिर्मिते योगप्रदीपे समाधि
स्वरूप वर्णननामा एक-
विंशतितमः प्रकाशः
समाप्तः ॥

---

# योगदर्शनविचारणा।

॥ नमो नमः श्रीप्रभुधर्मसूरये ॥

परं ज्योतिर्नमस्कृत्य, धर्मसूरिं गुरुं तथा।
मीमांसा योगशास्त्रस्य, क्रियते जैनदृष्टितः ॥१॥
चित्तवृत्तिनिरोधश्च, कथितं योगलक्षणम्।
उभययोगसाम्येन, ग्रन्थकृता निरूपितम् ॥२॥
सर्वचित्तस्य वृत्तीनां, निरोधो योग उच्यते।
असम्प्रज्ञातयोगेषु, घटते लक्षणं तदा ॥३॥
अन्ययोगाङ्गभेदेषु, चित्तवृत्तिसमुद्भवात्।
लक्षणं युज्यते नैव, अव्याप्तिदोषता ततः ॥४॥
विना च सर्वशब्दस्य, दोषनिवारणं नहि।
सर्वशब्दप्रयोगे च, निर्दोषं लक्षणं सदा ॥५॥
अयं भाष्याभिप्रायस्तु, सर्वथा दोषयुग् मतः।
अध्याहारे कृते दोषः, अकृतेऽपि तथैव च ॥६॥
अध्याहारस्य सर्वस्य, न कृते सम्प्रज्ञातके।
यद्यपि संग्रहो जातः, अतिव्याप्तिर्विक्षिप्तके ॥७॥

चित्तवृत्तिनिरोधस्तु, तत्रापि जायते तथा ।
लक्षणस्यैव सद्भावे, अतिव्याप्तिर्भवेद्ध्रुवम् ॥८॥
यद्यध्याहारता कार्या, इति चेदुच्यते तदा ।
योगाङ्गेषु परेष्वेव, अव्याप्तिर्निश्चिता भवेत् ॥९॥
अतोऽध्याहारकर्त्तव्ये, अकर्त्तव्ये तथैव च ।
अतिव्याप्तिरव्याप्तिश्च, जायते योगलक्षणे ॥१०॥
द्विपाशारज्जुको न्यायः, आगतोऽत्र विलोकयताम् ।
सर्वदोषनिरासाय, क्लिष्टशब्दस्तु चेद्भवेत् ॥११॥
क्लिष्टचित्तीयवृत्तीनां, निरोधो योग उच्यते ।
तदा तु दोषता नैव, सम्पूर्णं किन्तु नो भवेत् ॥१२॥
सन्ध्यावन्दनकार्येषु, देवपूजादिके तथा ।
योगस्याभावता ज्ञेया, योगाङ्गे नैव संग्रहः ॥१३॥
व्यापारो धार्मिको यो यः, तत्र योगस्तु सम्मतः ।
सन्ध्यावन्दनकार्ये च, योगता नैव त्वन्मते ॥१४॥
धार्मिकव्यापृतौ योगे, स्वीकृते नैव दोषता ।
तद्व्यापारश्च सर्वत्र, निरवद्यश्च धार्मिकः ॥१५॥
जैनशैल्यनुसारेण, योगलक्षणमुच्यते ।
स्वभावोन्मुखरूपा या, समितिगुप्तिरूपिका ॥१६॥

सर्वाक्रिया तु विज्ञेया, योगात्मिका च सर्वथा ।
निरवद्या च निष्पापा, मोक्षदा सा क्रिया मता ॥१७
अल्पज्ञानां मते सर्वमपूर्णं परिदृश्यते ।
जैनयोगे तु ज्ञातव्यं, प्रमाणपरिपूर्वकम् ॥१८॥
सूत्रैकादशपर्यन्तं रोधव्याः पञ्चवृत्तयः ।
निरूपणं च तासां वै सूत्रभाष्ये यथोचितम् ।१९।
वृत्तीनां पञ्चभेदास्तु, दृष्टव्या नैव तात्त्विकाः ।
स्वेच्छायाः परिणामस्तु, मुख्यतः कारणं भवेत् २०
विकल्पस्मृतिनिद्राख्याः, यथार्थेतरभेदजाः ।
द्विरूपा परिज्ञातव्याः, समावेशो विचार्यते ॥२१॥
प्रमाणे चाप्रमाणे च, सर्ववृत्तिप्रवेशनम् ।
वास्तविक्याः प्रमाणेषु, इतरस्या विपर्यके ॥२२॥
अतो द्विभेदकर्त्तव्ये, सूत्रे च लघुता भवेत् ।
लघुसूत्रं परित्यज्य, गुरुत्वे न हि विज्ञता ॥२३॥
कांश्चिद्विशेषतां प्राप्य, पञ्चता यदि मन्यते ।
क्षयोपशमवैचित्र्याद् भेदाऽसंख्यमवाप्यते ॥२४॥
वस्तूनां सर्वथाऽभावे, शब्दज्ञानबलेन वै ।
यो बोधः परिजायेत, यथा खपुष्पकं किल ॥२५॥

शशविषाणशब्देन, कश्चिद्बोधस्तु जायते ।
सोऽयं वैकल्पिको बोधः विकल्पकोटिको मतः ।२६।
अप्रमाणस्वरूपत्वात् समावेशो विपर्यके ।
आत्मचैतन्यशब्देन, भेदबोधकषष्ठीतः ॥२७॥
आत्मचैतन्ययोर्भेदः, भासते शब्दयोगतः ।
भेदनयप्रधानेन, प्रमाणांशस्वरूपकः ॥२८॥
विकल्पः स यथार्थः स्याद्वास्तववस्तुबोधतः ।
विकल्पव्यवहारस्तु, शास्त्रप्रमाणसम्मतः ॥२९॥
अर्थवन्नामराहित्याद्विभक्तिरन्यथा कथम् ।
अर्थवन्नामतश्चैव, विभक्तिः परिकीर्त्तिता ॥३०॥
एष वन्ध्यासुतो याति, शशशृङ्गधनुर्धरः ।
स्नात्वा च कूर्मदुग्धेषु, खपुष्पकृतशेखरः ॥३१॥
वैकल्पिकं विना बोधं, प्रयोगास्तादृशाः कथम् ।
अतः सोऽपि हि मन्तव्यः, प्रयोगप्रविलोकनात् ३२
यथार्थेतरभेदेन, द्विविधः परिकीर्त्तितः ।
प्रयोगास्तादृशा ज्ञेयाः, यथा बोधानुसारतः ॥३३॥
कदाचिद्भेदप्राधान्यभेदस्यापि कुत्रचित् ।
व्यवहर्तृमनुष्यस्य, दृष्टिद्वयविलोकने ॥३४॥

प्रमाणं परिभासेत, यथा दृष्ट्यनुसारतः ।
स एव नयबोधः स्यादंशिभावप्रकाशकः ॥३५॥
वस्तुगत्या विचारे तु, चैतन्यमात्मरूपकम् ।
तस्यानेकस्वरूपेषु, यदा चैतन्यवस्तुनः ॥३६॥
उपस्थितं च वक्तव्यं, तदा तु भेद दृष्टीनाम् ।
प्राधान्यं तत्र संस्थाप्य, प्रामाणिकैर्निगद्यते ॥३७॥
चैतन्यमात्मनो रूपं, सर्वेषां तच्च सम्मतम् ।
एतत्कथनयोगेन, इदमेव प्रसिद्धति ॥३८॥
आकाशपुष्पवैकल्पः, विपर्ययस्वभावतः ।
अशास्त्रीयश्च सर्वत्र, मन्तव्यः सर्वथा मतः ॥३६
मनुष्यस्य स्वरूपाख्याः, चैतन्यादिविकल्पकाः ।
शास्त्रीयाः सर्वमन्तव्याः, तत्रैव नयरूपतः ॥४०
प्रमाणैकांशरूपास्तु, कथं न नयरूपकाः ।
नयस्वरूपबोधे च नो भवेद्प्रमाणता ॥४१॥
एकान्ताभावरूपाऽपि निद्रावृत्तिर्न कथ्यते ।
तत्र ह्रस्त्यस्वभावानां, कदाचिद्भासता भवेत् ॥४२
स्वप्नावस्थाऽपि त्वेकेन, निद्राप्रकारता मता ।
अतः सत्या प्रभासेत, दृष्टं च तादृशं किल ॥४३॥

नैकशो जागृतावस्थासु यदनुभवो भवेत् ।
निद्रायामपि तादृक्षः, यादृग् जागृद्दशास्वपि ॥४४
तेनैव हेतुना ज्ञेया, निद्रावृत्त्यां च सत्यता ।
अयथार्था च कुत्रचित् सद्बोधाऽभावतः खलु ॥४५
अयथार्थायथार्थाभ्यां, भेदाभ्यां द्विविधा मता ।
इत्येवं परिमन्तव्यं, सार्वशास्त्रानुसारतः ॥४६॥
स्मृतिरपि च वृत्तीनां, तिसृणां ज्ञेययोगतः ।
प्रमाणेतररूपेषु, अन्तर्भावो विभाव्यते ॥४७॥
रजते राजतो बुद्धिः, यदि च स्मर्यते सदा ।
यथार्थबोधता तत्र प्रमाणेन विलोक्यताम् ॥४८॥
शुक्तौ च राजती बुद्धिः, यदा च स्मर्यते खलु ।
तदाऽयथार्थबोधः स्यादप्रमाणे विभाव्यताम् ॥४९॥
वृत्तीनां पञ्चतां त्यक्त्वा, अतो द्वेधा निरूप्यताम् ।
प्रमाणेतररूपेषु, अन्तर्भावः प्रदर्शितः ॥५०॥
षोडशसूत्रग्रन्थेषु, अपरापरभेदतः ।
वैराग्यं द्विविधं ज्ञेयं, सूत्रकारस्य सूचनात् ॥५१॥
आपातधर्मसंन्यासः, प्रथमं परिभाव्यते ।
विषयागतदोषाणां, प्रारम्भे दोषदृष्टितः ॥५२॥

वैराग्यं यादृशं भूयात्तादृशमपरं मतम् ।
परवैराग्यरूपं च, कथ्यते जैनदृष्टितः ॥५३॥
तात्त्विकधर्मसंन्यासः, विषयेषु पराङ्मुखात् ।
यः स्वरूपस्य चिन्तायाः, प्राबल्यात्परिजायते ॥५४॥
अष्टमगुणस्थानेषु, शुद्धवैराग्यमुच्यते ।
सम्यग्दर्शनचारित्रधर्माश्च मिश्रभावतः[1] ॥५५॥
क्षायोपशमिकयवस्थाऽपूर्णतां परित्यज्य वै ।
क्षायिकभावपूर्णत्वं, प्राप्यते योगज्ञानतः ॥५६॥
तत्रैव परवैराग्यं, विज्ञेयं शुद्धधर्मतः ।
अन्यत्रापरता ज्ञेया, वैराग्यस्य विभेदतः ॥५७॥
द्विस्वरूपस्य वैराग्यं, भाष्यकारेण नोदितम् ।
भगवत्पाठकेनैव, शुद्धरूपं प्रपञ्चितम् ॥५८॥
अष्टादशसु सूत्रेषु, द्वौ योगौ परिकीर्त्तितौ ।
सम्प्रज्ञातस्तु चेकः स्यादपरोऽसम्प्रज्ञातकः ॥५९॥
तद्द्वियोगस्य चर्चायाः, स्वरूपं प्रविचार्यते ॥
सर्वज्ञशास्त्रयोगेन, शुद्धबुध्या च चर्च्यते ॥६०॥
अध्यात्मभावनाध्यानसमतावृत्तिसंक्षयाः ।
तेषु च योगभेदेषु, पञ्चमो वृत्तिसंक्षयः ॥६१॥

1 क्षयोपशमैर्योगतः

तत्रैव द्रव्ययोगानां, समावेशः प्रजायते ।
आत्मनः स्थूलसूक्ष्मायाः, क्रियाया हेतुतस्तथा ॥६२
कर्मसंयोगयोग्यस्य, क्रमादुघातिप्रभावतः ।
वृत्तिसंक्षयता तत्र, जायते ग्रन्थिभेदतः ॥६३॥
भवदुत्कृष्टमोहस्य, कर्मबन्धस्य नाशतः ।
प्रारम्भः परिजायेत, वृत्तिसंक्षयवस्तुनः ॥६४॥
अष्टमगुणस्थानेषु, प्रारम्भस्तस्य सम्मतः ।
त्रयोदशगुणाख्ये च परिपूर्णत्वमाप्यते ॥६५॥
अष्टमगुणस्थानाच्च, द्वादशगुणस्थानके ।
पृथक्त्वैकत्ववैतर्कसविचाराविचारके ॥६६॥
शुक्लध्यानस्य द्वौ भेदौ, अत्रैव सम्मतौ सदा ।
सम्प्रज्ञाताख्ययोगस्य, अन्तर्भावो विभाव्यते ६७॥
निर्वितर्कविचारानन्दास्मितानिर्विभासता[1] ।
सम्प्रज्ञातोऽपि पर्यायरहितशुद्धद्रव्यके ॥६८॥
शुक्लध्याने च तस्यैव, अन्तर्भावो निगद्यते ।
असम्प्रज्ञातयोगस्तु, केवलज्ञानप्राप्तिके । ६९॥

---

1 निर्भासता ।

अर्थात्त्रयोदशाच्चैव, चतुर्दशगुणालये ।
प्राप्यते चेति मन्तव्यं, एतद् द्वयगुणालये ॥७०॥
अघातिकर्मसम्बन्धसंस्कारः परितिष्ठति ।
असम्प्रज्ञातयोगस्तु, संस्कारशेषकालिके ॥७१॥
द्रव्यमानससत्त्वेऽपि, भावमनो न विद्यते ।
अतः संस्कारशेषत्वं, तत्रैव प्रणिगद्यते ॥७२॥
प्रकृतौ च विदेहे च, भवप्रत्यययोगता ।
भवप्रत्ययशब्देन, जन्मतोऽवधिज्ञानता ॥७३॥
साऽपि तस्यैव सिद्धान्ते, घटते नैव युक्तितः ।
जन्मतोऽवधिज्ञानस्य, विदेहेषु च पूर्णता ॥७४॥
अत्र विदेहशब्देन, एकावतारिता भवेत् ।
सा च सर्वार्थसिद्धेषु, देवेषु घटते सदा ॥७५॥
म्रियते श्रेणिसम्प्राप्तः, पूर्णायुषो वियोगतः ।
लवसत्तमाहीनेन, परिणामस्य शुद्धितः ॥७६ ॥
मृत्वा तत्रैव जायेत, सर्वार्थसिद्धनामके ।
एकावतारितां प्राप्य, सिध्यति नात्र संशयः ॥७७॥
चतुर्विंशतिमारभ्य, षड्विंशतिकसूत्रके ।
परमेश्वररूपत्वं, भाष्यकारेण दर्शितम् ॥७८॥

भाष्यटीका कृता चैव, सूत्रकारीयमान्यताम् ।
दर्शयता प्रधानेन, षड्धर्मास्तत्र दर्शिताः ॥७९॥
ईशे सत्त्वगुणानां च प्राकट्यं केवलं मतम् ।
द्वितीयं सृष्टिकर्तृत्वं एकत्वं च तृतीयकम् ॥८०॥
अनादिशुद्धता चैव, तूर्या च नित्यमुक्तता ।
पञ्चमी सर्वज्ञातृत्वमनुग्रहाभिलाषिता ॥८१॥
प्रथमद्विगुणानां च, स्वीकारो नैव युज्यते ।
कर्माऽभावे च प्राकट्यं, सत्त्वगुणस्य नो भवेत् ॥८२
जडप्रकृतितत्त्वस्य सत्त्वगुणो निगद्यते ।
जडप्रकृतिशून्ये च सर्वज्ञे, नैव युज्यते ॥८३॥
मोहजन्यगुणा एते मोहाभावे च ते कथम् ।
जगत्कर्तृत्वरूपत्वं, वीतरागे न युज्यते ॥८४॥
निरूपितं मया तत्र, तत्त्वाख्याने विभाव्यताम् ।
उत्तरत्रिगुणानां च, एकत्वाऽनादिशुद्धते ॥८५॥
अनुग्रहाभिलाषानां, समन्वयः कथं भवेत् ।
सर्वज्ञत्वस्य मन्तव्ये, योगे च प्रविवेचितम् ॥८६॥
उत्तरत्रिगुणानां च, विवेचनं विधीयते ।
एकत्वशब्दभावार्थः संख्यासादृश्यरूपकः ॥८७॥

ईश्वरैकत्वसंख्या तु, ईश्वरे नैव युज्यते ।
सर्वे मुक्तात्मनो ज्ञेया, निराकारा निरञ्जनाः ॥८८॥
ईश्वरपदवाच्या ये, तत्रैकत्वं न युक्तियुक् ।
अनादिसिद्धमुक्तत्वं, कदापि नैव सिध्यति ॥८६॥
शुद्धता कर्मराहित्यमनादित्वे कथं भवेत् ।
यत्काले कर्मराहित्यं, तत्काले हि विशुद्धता ॥६०॥
तर्हि कथमनादित्वं, शुद्धतायां प्रयुज्यते ।
अनादित्वं च शुद्धत्वं, माता वन्ध्या समं मतम् ॥६१
अनुग्रहाभिलाषित्वं, रागरूपं प्रकीर्तितम् ।
यत्र रागश्च तत्रैव, द्वेषोऽपि प्रणिगद्यते ॥६२॥
रागद्वेषसमायुक्ते, ईश्वरत्वं न मन्यते ।
अनुग्रहाभिलाषित्वं, दोषत्वान्नैव युज्यते ॥६३॥
ईश्वरध्यानयोगेन, आत्मशुद्धिरवाप्यते ।
योगिना येन तत्रैव, तद्धेतुत्वं निगद्यते ॥६४॥
एतावता च मन्तव्यः, अनुग्रहस्तु चेश्वरे ।
वास्तविकीदृशा चैव, कदापि नैव युज्यते ॥६५॥
ईश्वरे सर्वज्ञत्वं च यादृशं योगदर्शने ।
तादृशं जैनधर्मे च, विशेषस्तु प्रदर्श्यते ॥६६॥

रागादिदोषनाशेन, सर्वज्ञत्वं प्रजायते ।
नित्यमुक्तत्वस्वीकारे, तस्योत्पत्तिः कथं भवेत् ॥९७
विना रागादिदोषाणां, नाशेन नैव जायते ।
दोषाणां परिनाशे च, आयाति मुक्तता खलु ॥९८
नित्यमुक्तत्वमीशे च, कया रीत्या प्रदर्श्यते ।
युक्तिशून्येन मन्तव्ये, बुद्धिमत्ता न तिष्ठति ॥९९॥
वन्ध्यापुत्रसमं ज्ञेयं, द्वयमपि च सर्वथा ।
दोषाणां परिनाशे च, नित्यत्वं नैव मुक्तके ॥१००॥
दोषनाशस्य राहित्ये, मुक्तता नैव युज्यते ।
मुक्ततायां च दोषाणामभावः सर्वथा मतः ॥१०१॥
दोषनाशकसामग्रीं, विना नाशो न सम्भवेत् ।
यत्काले तादृशी पूर्णा, सामग्री खलु विद्यते १०२
तत्काले जायते नाशः, तदा तत्र न नित्यता ।
अतोऽपि नित्यमुक्तत्वं, सर्वथा शशशृङ्गवत् १०३
नेश्वरे षड्गुणानां च, योगोक्तानां हि सम्भवः ।
अतः षड्गुणता तस्य, युक्तियुक्त्या न युज्यते ॥१०४
त्रयत्रिंशत्तमे सूत्रे, प्रोक्ता मैत्र्यादिभावना ।
चित्तशुद्धेश्च हेतुत्वं, प्रोक्तं तत्र विचार्यते ॥१०५॥

सुखिप्राणिषु मैत्री च, भावना परिदर्शिता ।
सङ्कुचितविचारोऽत्र, विशालता नैव दृश्यते १०६
सा च सुखिमनुष्येषु, देवेषु च तथैव च ।
युज्यते मैत्रिभावश्च, अन्यत्र न कदाचन ॥१०७॥
सर्वप्राणिषु मन्तव्यः, मैत्रिभावश्च सर्वदा ।
सुखिते दुःखयुक्ते च, सर्वत्र शुभचिन्तनम् ॥१०८॥
मा कार्षीत्कोऽपि पापानि, मा चाभूत्कोऽपि दुःखितः
मुच्यतां जगदप्येषा, मतिर्मैत्री निगद्यते ॥१०६॥
क्व सुखिजीवव्यक्तौ च, मैत्रीभावविचिन्तनम् ।
क्व प्राणिमात्रके वर्गे, मैत्रिभावविचिन्तनम् ॥११०॥
सुखिषु सुखवाञ्छत्वं, दुर्लभं तन्न विद्यते ।
समस्तप्राणिवर्गेषु, सुखाशा दुर्लभा मता ॥१११॥
वस्तुगत्या विचारे तु, न केऽपि सुखिनो जनाः ।
यत्रैव मोहसम्बन्धः, तत्र च सुखिता कथम् ॥११२॥
चतसृभावनायाश्च, स्वरूपं योगशास्त्रके ।
प्रोक्तं विस्तृतरूपेण, अत्र नैव विवेचितम् ॥११३॥
अतो हि योगशास्त्रेषु, भावना न समीचिना ।
दर्शिता चाल्पबुद्धित्वात्सार्वशास्त्रे न तादृशी ११४

प्राणायामोऽपि मन्तव्यः, चित्तशुद्धेर्न कारणम् ।
हठेन कार्यकर्त्तव्ये, चित्तव्याकुलता भवेत् ॥११५॥
हठयोगस्य बाहुल्यं, प्राणायामे भवेत्खलु ।
चित्तव्याकुलसद्भावे, कदापि नैव शान्तिता ॥११६॥
जैनयोगानुसारेण, द्रव्यभावस्वरूपतः ।
हठयोगस्य नोसत्ता, अतो हि चित्तशान्तिता ११७
ध्येयविषयचित्तस्य, समानाकारवृत्तिता ।
समापत्तिस्तु विज्ञेया, इतरयोगदर्शने ॥११८॥
सवितर्कनिर्वितर्कौ, यदा ध्येयस्य स्थूलता ।
तदा तु द्वौ भवेयातां, दृश्यते चैव द्वौ परौ ॥११९॥
यदा तु ध्येयसूक्ष्मः स्यात्सनिर्विचारकौ तथा ।
तदा विभावितौ द्वौ तु सर्वसङ्कलने ततः ॥१२०॥
समापत्तिः समाख्याता, चतुर्भेदस्वरूपिका ।
सबीजाश्चैव ज्ञातव्याः, सम्प्रज्ञानस्वरूपिका ॥१२१
जैनशास्त्रीययोगेषु, समापत्तिर्विचार्यते ।
भावनातः समुत्पादः, भावना परिदर्श्यते ॥१२२॥
या भावना च चित्तेषु, एकाग्रत्वं नियोजयेत् ।
यस्या अनुभवः सद्भिः, शुक्लध्याने वितन्यते १२३

सपर्यायबृहद्द्रव्यभावना परिभाव्यते ।
सावितर्कसमापत्तिः, विज्ञेया प्रथमा तदा ॥१२४॥
अपर्यायबृहद्द्रव्यभावना परितन्यते ।
निर्वितर्कसमापत्तिः द्वितीया परिकीर्त्तिता ॥१२५॥
सपर्यायकसूक्ष्मस्य, द्रव्यस्य भावना यदा ।
सविचारसमापत्तिः, तृतीया परिभाषिता ॥१२६॥
अपर्यायकसूक्ष्मस्य, द्रव्यस्य परिभावना ।
निर्विचारसमापत्तिः, चतुर्थी परिकीर्त्तिता ॥१२७॥
आसां हि भावनानां च, मोहोपशमश्रेणिके ।
सम्प्रज्ञात तुल्यत्वं सबीजत्वं विलोक्यते ॥१२८॥
क्षपकश्रेणिभावेषु, असम्प्रज्ञातसादृशम् ।
निर्बीजत्वं सदा ज्ञेयं, योगिभिः योगकांक्षिभिः १२९
समापत्तेस्तद्रूपत्वं, स निर्बीजस्वरूपतः ।
यादृशं चिन्तितं जैनैरन्यत्र नैव तादृशम् ॥१३०॥
परिस्फुटस्वरूपेण, यथा भेदा विचारिताः ।
तादृशा पष्टरूपत्वमल्पज्ञत्वे कुतो भवेत् ॥१३१॥
ऋतम्भराप्रज्ञायाश्च, स्वरूपं परिचिन्तितम् ।
यादृशं जैनयोगेषु अन्यत्र नहि तादृशम् ॥१३२॥

अष्टमगुणस्थानेषु, जातसामर्थ्ययोगतः ।
तद्बलात्प्रकटीभूता, या समाधिजप्रज्ञता ॥१३३॥
शास्त्रतः प्रतिपाद्यत्वं, यद्वस्तुषु न शक्यते ।
तेषामतीन्द्रियाणां च, वस्तूनामवगाहिनी ॥१३४॥
केवलज्ञानरूपा न, न श्रुतज्ञानरूपिका ।
रात्र्यवसानकाले च, सूर्योदयस्य पूर्वके ॥१३५॥
संध्यारात्रिदिनानां च, भिन्नरूपा च या दशा ।
माध्यमिकस्वरूपा सा, विज्ञेया सर्वसज्जनैः ॥१३६॥
तथाऽत्र श्रुतज्ञानान्ते, केवलज्ञानपूर्वके ।
अरुणोदयसादृक्षी, ज्ञेयानुभवरूपिका ॥१३७॥
यदनुभवता ज्ञेया, तत्काले दीर्घदर्शिनी ।
अन्यैस्तु परिगीयेत, ऋतम्भराभिधानका ॥१३८॥
शुद्धानुभवता सर्वा, केवलज्ञानप्राक्क्षणे ।
श्रुतज्ञानान्तिमावस्थायां सैव परिप्राप्यते ॥१३९॥
जैनयोगप्रसिद्धा ये दृश्यन्तेऽन्यत्र नो तथा ।
ते पातञ्जलयोगेषु, सन्ति कदापि नो खलु ॥१४०॥
भवप्रत्ययशब्दस्तु, देवनारकयोनिषु ।
अवधिज्ञानप्रस्तावे, दर्शितो भवप्रत्ययः ॥१४१॥

स्पष्टं तत्त्वार्थसूत्रेषु, अध्याये प्रथमे खलु ।
स्पष्टरूपेण सम्प्रोक्तं, पातञ्जले तथैव च ॥१४२॥
सवितर्कनिर्वितर्कौ, सविचाराविचारकौ ।
महाव्रतादिशब्दाश्च, कृतकारितशब्दकौ ॥१४३
अनुमोदितशब्दश्च, अन्येऽपि तादृशास्तथा ।
पातञ्जले समायाताः, प्रसिद्धा जैनदर्शने ॥१४४॥
ध्यानविशेषरूपार्थे, अध्याये नवमे तथा ।
प्रतिपादितदृष्टव्याः, सवितर्कादिशब्दकाः ॥१४५
प्रथमं सविचारं तद् द्वितीयमविचारकम् ।
शब्दार्थज्ञा न वैकल्पैः, सङ्कीर्णसवितर्कका: ॥१४६
समापत्तिर्विज्ञातव्या, सार्वभौमा महाव्रतम् ।
कृतकारितशब्दस्तु, जैनयोगे पदे पदे ॥१४७॥
आचाराङ्गादिसूत्रेषु, तत्त्वार्थादिकसूत्रके ।
उपस्थापनकाले च, महाव्रतं नियुज्यते ॥१४८॥
सर्वतो विरतिश्चैव महाव्रतं निगद्यते ।
यस्मिन्नर्थे च ये शब्दाः, पातञ्जलीयदर्शने ॥१४९
प्रयुक्ताश्च तदेवार्थे, दृश्यन्ते जैनदर्शने ।
कुत्रचिद्भिन्नता स्वल्पा, यथाऽस्ति दृश्यते तथा १५०

अनुमोदितशब्दस्तु, पातञ्जलेषु दृश्यते ।
अनुमतिप्रयोगस्तु, जैनेषु प्रविलोक्यताम् ॥१५१॥
प्रकाशाऽवरणाद्याश्च, शब्दाः पातञ्जले मताः ।
ज्ञानाऽऽवरणशब्दास्तु, तत्स्थाने जैनदर्शने ॥१५२॥
निरुपक्रमशब्दश्च, सोपक्रमस्तथैव च ।
वज्रसंहनकेवल्यौ[1], ज्ञानावरणकर्म च ॥१५३॥
सम्यग्दर्शनशब्दश्च, सम्यग्ज्ञानं च ज्ञायताम् ।
सर्वज्ञादिकशब्दाश्च, अन्येऽपि तादृशाः खलु १५४
चरमदेहशब्दोऽपि, क्षीणक्लेशप्रकारकाः ।
जैनसूत्रेषु सर्वत्र, सुप्रसिद्धा भवन्ति ते ॥१५५॥
वज्रऋषभनाराचसंहननादिशब्दकाः ।
तत्त्वार्थसूत्रभाष्यादौ, दृश्यन्ते बहुधा खलु ॥१५६॥
चरमदेहशब्दोऽपि, दृश्यते तत्र सूत्रके ।
अतो जैनात्समायाता, पातञ्जले ते शब्दकाः १५७
प्रसुप्ततनुविच्छिन्नोदाराऽवस्था चतुर्विधा ।
प्रोक्ताः पातञ्जले योगे, जैने नामान्तरास्तथा १५८
अविद्याद्याश्च मोहाख्यकर्मौदयिकरूपकाः ।
भावविशेषरूपास्ते, ज्ञातव्याः सर्वसज्जनैः ॥१५९॥

---

१ वज्रसंहनन

तेषां प्रसुप्तता चैव, तज्जनकस्य कर्मणः ।
अबाधाकालनाशेन, कर्मनिषेकवस्तुता ॥१६०॥
तनुत्वं चैव विज्ञेयमुपशामस्वरूपकम् ।
क्षयोपशमरूपं वा, विच्छिन्नत्वं निगद्यते १६१
प्रतिपक्षस्वरूपाणां कर्मणामुदयादितः ।
अन्तरिकत्वरूपं च, तथोदारत्वरूपता ॥१६२॥
उदयावलिकायां च, प्राप्तमुदाररूपकम् ।
जैनयोगेषु तेषां वै, नामान्तरं विचारितम् १६३
योगसूत्रे तृतीये च पादे विभूतिवर्णनम् ।
द्विविधा साऽपि ज्ञातव्या, ज्ञानेतरविभेदतः ॥१६४॥
भूताऽनागतज्ञानं च, सर्वस्य रुतज्ञानकम् ।
पूर्वजातेश्च ज्ञानं वै, परचित्तस्य ज्ञानता ॥१६५॥
भुवनज्ञानता चैव, ताराणां व्यूहज्ञानता ।
ज्ञानविभूतिभेदाश्च, शारीरिक्यो विभूतयः[1] १६६
परकायप्रवेशादि, अन्तर्ध्यानाऽणिमादिकाः ।
ऐश्वर्यरूपलावण्य कायसम्पत्तिरूपिका ॥१६७॥

1 लब्धयः

शारीरिक्यश्च याः प्रोक्ताः दृश्यन्ते जैनयोगतः ।
अवधिज्ञानता चैव, मनःपर्यायज्ञानता ॥१६८॥
जातिस्मरणज्ञानं च, इति ज्ञानादिलब्धयः ।
विभूतिशब्दता तत्र, जैनेषु लब्धिसंज्ञकाः ॥१६९
आमौषधिश्च सर्वौषधिश्चैव विप्रुडोषधिः ।
वैक्रियलब्धिता चैव, श्लेष्मौषध्यादिनामकाः १७०
जङ्घाचारणविद्याचारणाऽऽहारकलब्धयः ।
शारीरिक्यश्च विज्ञेयाः, अनेकभेदरूपिका ।१७१।
आवश्यकस्य निर्युक्तौ, तत्त्वार्थसूत्रवृत्तिषु ।
नामान्तरीयरूपेण अनेकास्ताश्च वर्णिताः ॥१७२॥
जैनेषु योगभाष्ये च सोपक्रमादिभेदतः ।
आयुष्कर्मविभेदत्वं बहुधा सादृशं मतम् ॥१७३॥
आर्द्र वस्त्रस्य दृष्टान्तं, तृणराशेश्च ज्ञातकम् ।
यत्प्रोक्तं तत्र निर्युक्तौ, विशेषावश्यके तथा ॥१७४
वृत्त्यादिसर्वशास्त्रेषु दृश्यते खलु साम्यता ।
तत्त्वार्थभाष्यशास्त्रे च, ततोऽप्यधिकमुच्यते ॥१७५
गणितगोचरत्वं तत्तृतीयं परिदर्शितम् ।
तत्त्वार्थभाष्यशास्त्रस्य, व्यासभाष्यादिकस्य वै ॥

बहुधा सादृशं ज्ञेयं, सूक्ष्मदृष्ट्या निरीक्षणे ।
अतः सर्वत्र ज्ञातव्यं, सूक्ष्मदृष्टिप्रधानता ॥१७७॥
यथार्द्रवस्त्रवैतानं, लघुकालेन शुष्यते ।
तथा सोपक्रमायुष्कं, स्वल्पकालेन भुज्यते ॥१७८॥
सम्पीडितं च तद्वस्त्रं, चिरेण परिशुष्यते ।
निरुपक्रमतायुष्कं, चिरकालेषु भुज्यते ॥१७९॥
यथाऽग्निः शुष्ककाष्ठादौ, मुक्तौ वातेन सर्वथा ।
स्वल्पकालेन तत्सर्वं, दहति एकहेलया ॥१८०॥
तथा सोपक्रमायुष्कं, नश्यति एकहेलया ।
तादृशोऽग्निश्च निर्वाते, स्थाने च गुरुकालके ॥१८१
तामेव काष्ठराशिं च, चिरकाले च ज्वालयेत् ।
तथाऽत्रैव विज्ञातव्यं, निरूपक्रमगोचरे ॥१८२॥
यथा संहृतशुष्के च, तृणराशिविभक्तके ।
क्रमेण दह्यमाने च, दाहश्चिरेण जायते ॥१८३॥
तस्याः शैथिल्यभूतासु, प्रकीर्णोपचितासु च ।
सर्वतो ज्वाल्यमानासु एककालं च सर्वथा ॥१८४
भस्मीभूता च सा सर्वा, शीघ्रमेव प्रजायते ।
तथा सोपक्रमादीनां, विनाशः परिज्ञायताम् ।१८५।

गुणकृद्भागहाराभ्यां, राशिच्छेदाच्च तत्र वै ।
संख्यातामपवर्त्तः स्यान्न संख्येयार्थशून्यता ॥१८६
तद्वदुपक्रमेणैव, अभिहतस्तथैव च ।
दुःखैर्मृत्युसमुद्घातैः, आर्त्तश्च कर्मप्रत्ययम् ॥१८७
अनाभोगेन योगेन, उत्पाद्य करणं यथा ।
फलोपभोगलब्ध्वर्थं[१], कर्मापवर्त्तयत्तथा ॥१८८॥
न चास्य फलशून्यत्वं तथाऽत्र प्रविज्ञायताम् ।
धौतपटो यथार्द्रश्च, संहितश्चिरकालिकः ॥१८९॥
शोषं चैवोपगच्छेच्च, निरुपक्रमता तथा ।
दृष्टान्तानां च सादृक्षं, शब्दसाम्येन दृश्यते ॥१९०
योगबलेन योगी वै नैकदेहो विरच्यते ।
योगशास्त्रे च तादृक्षवर्णनं तुर्यपादके ॥१९१॥
वैक्रियादिकलब्धीनां, जैनयोगेषु वर्णनम् ।
बहुधा परिदृश्येत, तत्रापि समता खलु ॥१९२॥
जैनशास्त्रे च वस्तूनां, द्रव्यपर्यायरूपतः ।
तत्त्वार्थे लक्षणं चैव, उत्पादव्ययध्रौव्यकः ॥१९३

---

१ लघुकालेन फलोपभोगार्थं

युक्तं तत्त्वं निगद्येत, एतच्च प्रतिपादितम् ।
योगदर्शनसूत्रेषु, धर्मधर्मिविचारके ॥१६४॥
द्रव्यपर्यायतश्चैव, तथोभयस्वरूपता ।
किं वोत्पादव्ययेनैवं, युक्तं ध्रौव्यं च वस्तुकं ॥१६५
भावार्थस्तादृशश्चैव, सूक्ष्मबुद्ध्या विचारणे ।
भिन्नता तादृशी ज्ञेया, योगे सांख्यानुसारिता ॥
अतेश्च चित्तशक्तेर्वै, भावाश्च परिणामिनः ।
सत्सिद्धान्तं समालम्ब्य, परिणामत्ववादता ॥१६७
अवस्था परिणामस्य, धर्मलक्षणके च वै ।
उपयोगे जडेऽर्थे च, प्रकृतौ च विधीयते ॥१६८॥
पुरुषेषु च तन्नैवं, लेशमात्रं तु मन्यते ।
जैनदर्शनशास्त्रेषु, सर्वे च परिणामिनः ॥१६६॥
भावा भवन्ति सर्वत्र, सर्वज्ञाऽज्ञासमश्रयात् ।
उत्पादव्ययरूपस्य, पर्यायस्योपयोगता ॥२००॥
जडचेतनत[illegible]षु, द्वयेषु परितन्यते ।
तादृग् भिन्नत्वसत्त्वेऽपि तयोर्द्वयोश्च दर्शने २०१
परिणामत्ववा[illegible]स्तु, कथंचिदेकरूपकः ।
अनेकान्तिकसिद्धान्तसमाश्रये न दूषणम् ॥२०२॥

माध्यस्थदृष्टिमाश्रित्य, हरिभद्रेण सूरिणा ।
गुणग्राहकता सर्वा, हृदये प्रकटीकृता ॥२०३॥
स्वान्ते स्याद्वादतायेषां, दृढभावेन चागता ।
स्याद्वादमूर्त्तिरूपाणां, सर्वं तेषां च गोचरम् ॥२०४
पूर्णैश्च तादृशे कार्ये, पूर्णता नैव हीयते ।
अपूर्णानां च कर्त्तव्ये, सर्वं तत्परिणश्यति ॥२०५॥
पूर्णश्रद्धाधनं येषां, मानसे सर्वथा वसेत् ।
मिथ्याश्रुतं तु तेषां वै सम्यग् रूपेण जायते ॥
तादृग्दृष्टान्तमाश्रित्यमादृशैर्नो विधीयते ।
आगामिबालजीवाश्च, नो गच्छेयुर्हि चोत्पथे ॥
चित्तप्रसन्नतायाश्च, बाधा केनापि नो भवेत् ।
तत्तप इति विज्ञेयं, योगमार्गत्वकांक्षिभिः ॥२०८॥
तदेव हि तपः कार्यं, दुर्ध्यानं यत्र नो भवेत् ।
येन योगा न हीयन्ते, क्षीयन्ते नेन्द्रियाणि च ॥
कषायमन्दतावृद्धिहेतुस्त्वाभ्यन्तरं तपः ।
ध्यानपुष्टिनिमित्तं तत्तादृशं जैनशासने ॥२१०॥
द्विविधं च यथा जैने, तथा योगे न दृश्यते ।
विभिन्नताऽच तेनैव, ज्ञातव्या ज्ञानचक्षुषा ॥२११

ईश्वरप्रणिधानस्य, शुद्धत्वं जैनशासने ।
प्रतिक्रियाऽनुष्ठानस्य, कर्त्तव्यसमये यथा ॥२१२॥
लक्ष्यी कृत्य च शास्त्रं वै तदुपदेशकेश्वरम् ।
प्रभुं हि हृदि संस्थाप्य, कर्त्तव्यं प्रणिधानकम् २१३
अविद्याया समावेशः, मिथ्यात्वे परितिष्ठति ।
स्थानांगसूत्रशास्त्रेषु, मिथ्यात्वं दशधा मतम् ॥
असाधुषु च साधुत्वं, साधावसाधुता तथा ।
अजीवे जीवरूपत्वं, जीवेऽजीवस्वरूपता ॥२१५॥
अयुक्ते युक्तरूपत्वं, युक्तेऽयुक्तस्वरूपता ।
सर्वत्र तादृशी बुद्धिः, मिथ्यात्वपरिपोषिका ॥२१६
प्रोक्ताऽविद्या च मिथ्यात्वस्वरूपा प्रतिपादिता ।
अस्मिताऽऽरोपरूपा सा, द्विप्रकारा निगद्यते ॥२१७
प्रपञ्चे चेतनारोपः, चेतने दृश्यवस्तुनः ।
आरोपः सोऽपि मिथ्यात्वस्वरूपो जैनदर्शने ॥२१८
अस्मिता चेदहङ्कारः, ममत्वबीजरूपकः ।
रागद्वेषस्वरूपत्वं, तदा कषायरूपकः ॥२१६॥
कदापि म्रियते नैव, सर्वदा जीव्यते मया ।
सदा मरणभीतिश्च, जीविताऽऽशा च सर्वदा २२०

तत्सर्वं भयसंज्ञात्वं, रूपं जैनै र्निगद्यते ।
परिग्रहादिसंज्ञानां, मैथुनस्य तथैव च ॥२२१॥
अभिनिवेशताऽत्रापि, ज्ञातव्या सूक्ष्मदर्शिना ।
आहारादिकसंज्ञानां भूतवत्ज्ञानिना सदा ॥२२२
सर्वथैव निरुद्धाश्चेदप्रमत्तत्वभावतः ।
तदा त्वभिनिवेशस्य, शून्यता तत्र दृश्यते ॥२२३
सर्वे क्लेशाश्च ज्ञातव्याः, जैनशास्त्रानुसारतः ।
मोहाख्यकामभेदस्य, औदयिकस्वरूपकाः ॥२२४
क्लेशक्षयेण कैवल्यप्राप्तिश्च योगदर्शने ।
मोहक्षयेण कैवल्यप्राप्तिर्जैनेऽपि सम्मता ॥२२५॥
मोहकर्मैकदेशस्य, क्लेशस्य परिनाशतः ।
योगे कैवल्यताप्राप्तिः, पातञ्जलैर्मता सदा ॥२२६॥
सम्पूर्णमोहनाशेन, कैवल्यं जैनदर्शने ।
न त्वेकांशस्य नाशेन कैवल्यं परिजायते ॥२२७
अल्पज्ञदर्शने तादृग्, मिथ्यारूपं प्रभाषितम् ।
सम्पूर्णमोहनाशेन, कैवल्यं कथितं जिनैः ॥२२८॥
दग्धबीजसमाक्लेशनाशे च चित्तनाशता ।
सहमतश्च सूत्रेषु, योगेषु परिवर्णितः ॥२२९॥

मोहप्रधानघातीनां, कर्मणां दग्धबीजवत् ।
द्वादशगुणस्थानेषु, यथाऽऽख्यातेन नाशता ॥२३०
कर्मविपाकतादीनाम् प्रस्तुत सूत्रभाष्यके ।
ईदृशी सप्तवार्तासु, मतभेदः प्रदर्शितः ॥२३१॥
विपाकस्त्रिविधो ज्ञेयः, कर्मबन्धनभेदके ।
क्रमेऽपि चैकरूपत्वं, तथा चात्र प्रदर्श्यते ॥२३२॥
कर्मणां पूर्वबद्धानां, फलं पूर्वं तु चाप्यते ।
पश्चाद् बद्धत्वरूपाणां, फलं पश्चादवाप्यते ॥२३३
वासनाऽनादिकालीना, नैकभविकरूपिका ।
कर्माशये विज्ञातव्या, तथा प्रारब्धता खलु ॥२३४
कर्माशयस्वरूपस्य, जन्मावधिकृतस्य वै ।
फलं तु मरणे चैव, सर्वं पश्चान्मिलिष्यति ॥२३५
तत्काले फलवैमुख्यं, भवनं नैव गौणतः ।
गौणकर्मकतायाश्च, मुख्यकर्मणि चागमः ॥२३६
तत्रापि जैनसिद्धान्तः, स्पष्टरूपेण दृश्यते ।
त्रेधा विपाकता प्रोक्ता, सा तु नैव समीचीना ॥२३७
अधिका परिदृश्येत, वैदिकेऽपि विलोक्यताम् ।
गङ्गामरणताऽदृष्टविशेषफलरूपिका ॥२३८॥

प्रोक्त विपाकभिन्नत्वं, शुद्धदृष्ट्या विलोकने ।
अत्यल्पभेदकार्येऽपि, जायते चाष्टभेदता ॥२३६॥
ज्ञानावरणतादीनां, कर्मणां चाष्टभेदता ।
अवान्तरप्रभेदाश्च, जायन्तेऽनेकरूपतः ॥२४०॥
एतादृग्नियमो नास्ति, पूर्वफलं च पूर्वकम् ।
पश्चाद्बद्धस्य पश्चाच्च, क्वचित्किन्तु विपर्ययः ॥२४१
पूर्वबद्धस्य पश्चाच्च, पश्चाद्बद्धस्य पूर्वकम् ।
यथाम्रादिफलानां च तथाऽत्र परिभाव्यताम् ॥२४२
वासनाऽप्येकरूपेण, कर्मरूपा उदाहृता ।
अतो हि भिन्नता नास्ति कर्मणि सर्वमागतम् २४३
एकभविकता चैव, आयुष्कर्मणि मन्यते ।
ज्ञानावारादिकानां च, नैकभविकता भवेत् ॥२४४॥
प्रारब्धता विपाकौनीय्ये ते चायुष्ककर्मणि ।
दृश्यन्तेऽन्यानि सर्वाणि, कर्माणि गदितानि च २४५
प्रदेशोदययोगेन, भुज्यन्ते नियमस्ततः ।
आयुष्कर्मणि नास्त्येव, अतो हि परिज्ञायताम् २४६
मृत्युं विनापि दुःखं च, क्षेत्रकालादिकं तथा ।
उद्बोधकनिमित्तानि, सन्ति कर्माशये खलु ॥२४७

मरणसमये चैव, अवश्योदयकर्मकम् ।
आयुष्कं तच्च विज्ञेयमतस्तस्य प्रधानता ॥२४८॥
आवागमनता चैव, गौणस्येव प्रधानके ।
संक्रमविधिज्ञानं च, विना तन्नैव ज्ञायते ॥२४६॥
कर्मप्रकृतिशास्त्रेषु, पञ्चसंग्रहशास्त्रके ।
लिखितं विस्तृतेनैव, अतस्ततो विज्ञायताम् ॥२५०
सर्वदृश्यप्रपञ्चानां सूत्रे तु दुःखरूपता ।
विवेकिजनबोधाय, कथिता परिज्ञायताम् ॥२५१॥
तद्वचनं च दृष्ट्या वै, नयदृष्ट्या विलोक्यताम् ।
निश्चयनयरूपेण, सर्वदृश्यप्रपञ्चकम् ॥२५२॥
दुःखरूपं निगद्येत, व्यवहारनयेन वै ।
सुखदुःखोभयं चैव, एकान्ते नैव दुःखता ॥२५३॥
सांख्यसूत्रानुसारेण, सृष्टिसंहारयोः क्रमः ।
सत्कार्यवादरूपेण दर्शितः सर्वरूपतः ॥२५४॥
असदुत्पादता नैव, नासतो भावता भवेत् ।
एकान्तरूपता तत्र सांख्यशास्त्रे च दर्शिता २५५
मिथ्यारूपा तु सा ज्ञेया, तादृशी मान्यता खलु ।
एकान्तस्वीकृतिस्तस्मादतो मिथ्यात्वपोषिका २५६

जैनशास्त्रानुसारेण, एकान्तेनैव मानने ।
प्रागभावप्रध्वंसानामस्वीकारः प्रजायते ॥२५७॥
यतः कार्येष्वनादित्वमानन्त्यं च समानयेत् ।
अतोऽभावद्वयानां च, स्वीकारः सर्वथा मतः २५८
तत्सर्वं समुत्पद्येत, असतश्च कथंचन ।
उत्पादः परिजायेत, सतो विनाशता भवेत् २५९
एतादृग्वस्तुमन्तव्ये, पदार्थमात्रतासु च ।
द्रव्यपर्यायरूपत्वं, घटते नात्र संशयः ॥२६०॥
द्रव्यपर्यायमन्तव्ये, उत्पादव्ययकेन वै ।
ध्रौव्येन युक्तरूपत्वं, घटते वस्तुलक्षणम् ॥२६१॥
यमेषु[1] सार्वभौमत्वं, राहित्याद्देशकालतः ।
जैनशास्त्रानुसारेण, सर्वशब्दनियोजने ॥२६२॥
महाव्रतं निगद्येत, अन्यथा नैव युज्यते ।
वास्तविकस्वरूपं तत्सर्वज्ञेन प्ररूपितम् । ॥२६३॥
देशशब्देन सम्बन्धे, अणुव्रतं निरूपितम् ।
एवं रीत्या विवेकेन, नियमे फलता भवेत् ॥२६४॥
द्वितीयपादसूत्रे च, द्वाविंशत्यभिधानके ।

---

१ सर्वप्राणातिपातादि विरमणं

शुद्धभोजनपानेन, मृत्तिकाजलवस्तुना ॥२६५॥
शरीरस्य च शुद्ध्यर्थं, कृतं तद्बाह्यशौचकम् ।
चित्तदोषविशुद्धित्वमाभ्यन्तरं तु कथ्यते ॥२६६॥
द्रव्यभावप्रभेदेन, जैनैः शौचं निरूपितम् ।
येन शौचेन भावस्य, बाधा नैव प्रजायते ॥२६७॥
तद् द्रव्यशौचता ग्राह्या, अपरा नैव मन्यते ।
यथा शृङ्गारवासेन[१], प्रेरितश्च जलादिना ॥२६८॥
स्नानादिकार्यकर्त्तव्ये द्रव्यशौचं न कथ्यते ।
भावस्य कारणं यत्तु, तद्द्रव्यं प्रणिगद्यते ॥२६९॥
पञ्चाधिके च पञ्चाशत्सूत्रभाष्ये च दर्शितम् ।
इन्द्रियाणां च वश्यत्वं, स्वरूपोपायता तथा ॥२७०
तत्रानेकविचाराणां, भेदं प्रदर्श्य यौगिके ।
परमवश्यतारूपं, शब्दादिविषयैः सह ॥२७१॥
इन्द्रियाणां च, सम्बन्धरोधे परमवश्यता ।
इति भाष्याभिप्रायं च, दृष्ट्वा जैनानुसारतः ॥२७२
विचारभिन्नतां ज्ञात्वा, शुद्धरूपं प्रदर्श्यते ।
इन्द्रियाणां निरोधस्तु, न स्यात्परमवश्यता ॥२७३॥

१ यथा शृङ्गारवासनया ।

शुभाशुभत्वशब्दाद्यैः, सम्बन्धे हृषिकस्य च ।
सत्यपि तत्त्वज्ञानादिबलेन भवतो न यौ ॥२७४॥
कदापि रागद्वेषौ च येन केन प्रकारतः ।
इन्द्रियाणां च सामान्या, परमवश्यता खलु ॥२७५
परमवश्यतायाश्च, उपायो ज्ञानमेव च ।
न हि चित्तनिरोधो वै, केवलं परिमन्यते ॥२७६॥
अध्यात्मभावनाद्वारा, जाता या समभावना ।
तत्सहितं च यज्ज्ञानं, राजयोगः स कथ्यते ॥२७७
चित्तस्य विजये चैव, इन्द्रियाणां जये तथा ।
द्वयोरुपायता मुख्या, ज्ञानरूपा निगद्यते ॥२७८॥
हठयोगादिरूपस्तु, प्राणायामो न मन्यते ।
विकाशमार्गरोधे तु, विघ्नत्वजनको भवेत् ॥२७९॥
येनैव हठयोगस्य, प्राधान्यं स्वीकृतं दृढम् ।
प्रत्याहारादिकं तेन, कदापि नेव लभ्यते ॥२८०॥
प्रत्याहारादियोगाङ्गं, प्रधानं मुक्तिकारणम् ।
सर्वथा चेन्द्रियाणां च प्रत्याहारेषु वश्यता ॥२८१॥
धारणाचित्तवश्यत्वं, ध्यानेनात्मविशुद्धता ।
तादृक् शुद्धक्रमं त्यक्त्वा, को हठयोगमाश्रयेत् ॥२८२

हठयोगस्तु योगो न, किन्तु लोकप्रतारणा ।
तद्द्वारा स्वात्मवञ्चत्वं सद्गतिस्तु कुतो भवेत् २८३
बलात्कारीययोगः सः, मुग्धरञ्जनकारणम् ।
ज्ञानिनां तत्र हास्यं स्यात्संसारपरिवर्धकः ॥२८४॥
हठयोगस्वरूपो यः प्राणायामस्तु केवलः ।
येनैव स्वीकृतस्तेन, मुक्तिमार्गो निषेधितः ॥२८५॥
पञ्चाधिके च पञ्चाशत्सूत्रे च भाष्यकर्त्तृणा ।
सांख्यधर्मानुसारेण, योगसिद्धान्तवर्णितः ॥२८६॥
मुख्यानि तत्र वस्तूनि, दर्शितानि च तत्र वै ।
भोगज्ञानसुखाद्यं च, प्रकृतेश्च विकारजम् ॥२८७
कूटस्थनित्यता ज्ञेया, पुरुषे सर्वदा किल ।
अतो न बद्धता तत्र, मुक्तता नैव दर्शिता ॥२८८
पुरुषे मुक्तताज्ञानं, आरोपितं तु मन्यते ।
जडचेतनभिन्नत्वज्ञानं मुक्तेरुपायता ॥२८९॥
भेदविज्ञानसद्भावेऽविद्यादिक्लेशकर्मणाम् ।
विपाका-नाम-भावश्च, स एव मुक्तिरूपकः ॥२९०॥
मुक्तेः पूर्वं न सार्वत्वं, कस्यचिन्न प्रजायते ।
कस्यचिन्नैव विज्ञेयं, मान्यता चेति सर्वथा ॥२९१॥

यस्य सर्वज्ञता जाता, तस्य मुक्तेरनन्तरम् ।
स्वान्तदेहादिनाशे च, सर्वज्ञत्वं विनश्यति ॥२६२॥
सार्वज्ञ्यंमानसं कार्यमात्मनो नैव विद्यते ।
कूटस्थो निर्विकारश्च, आत्मा चेतनरूपकः ॥२६३॥
एतत्त्रितयवस्तूनां, जैनशास्त्रानुसारतः ।
विचारः परिकर्त्तव्यः, वस्तुतत्त्वप्रकाशने ॥२६४॥
सुखदुःखादिभोगस्तु, संसारिकस्य चात्मनः ।
वास्तविकविकारः स्यात्मनसो नैव युज्यते ॥२६५॥
अतो मुक्तित्वशब्देन, संसारकालिकस्य वै ।
भोगस्यैव विनाशो हि, ज्ञातव्यः सर्वसज्जनैः २६६
नत्वारोपितभोगस्य, चाभावो मुक्तिसम्मतः ।
इत्येवं परिमन्तव्यं, शुद्धवस्तुगवेषकैः ॥२६७॥
विवेकख्यातिशब्देन, सम्यग्दर्शनवस्तुनः ।
कर्मक्लेशादिकानां च, तत्राऽभावे च मोक्षता २६८॥
मूक्तेः पूर्वं च क्लेशानां, निवृत्तिः सर्वसम्मता ।
क्लेशनिवृत्तिसद्भावे, सर्वज्ञत्वं दृढं भवेत् ॥२६९।
मोहनिवृत्तिसद्भावे, क्लेशाऽभावः प्रजायते ।
सर्वथा क्लेशराहित्ये, घातीनां च विनाशता ३००॥

घातिकर्मविनाशे च, सर्वज्ञत्वं च तत्क्षणे ।
ततोऽघातिविनाशे च, मुक्तत्वं प्रकटीयते ॥३०१॥
अतो मुक्तेश्च प्राक्काले, सर्वज्ञत्वं च सर्वथा ।
नियमात्प्रकटीयेत, कर्त्तव्यो नात्र संशयः ॥३०२॥
मोक्षप्राप्तेश्च सद्भावे, सर्वज्ञत्वं न नश्यति ।
सर्वविषयकं ज्ञानं, तदेवात्मस्वभावता ॥३०३॥
संसारिकदशायां च, ज्ञानं तादृक् च नात्मनः ।
आवरणस्य सद्भावे, तज्ज्ञानं नैव जायते ॥३०४॥
यथा सूर्यप्रकाशोऽपि, अभ्रेण परिवेष्ठितः ।
यावत्पर्यन्तता तस्य, सद्भावे न प्रकाशता ॥३०५॥
यदा पवनबाहुल्यान्नश्यन्त्यभ्राणि सर्वथा ।
तदा सूर्यप्रकाशोऽपि, शुद्धरूपः प्रजायते ॥३०६॥
यथा शुद्धात्मताज्ञानं, कर्माभ्रैश्च निरुध्यते ।
यावत्पर्यन्तघातीनां, कर्मणां विद्यमानता ॥३०७॥
तावत्पर्यन्तता तत्र, शुद्धज्ञानं न जायते ।
संवरनिर्जरारूपाद्, वायुनां घातिकर्मणाम् ॥३०८॥
विनाशे सर्वथा जाते, शुद्धात्मज्ञानता तदा ।
यथा बीजे प्रदग्धे च, प्रादुर्भवति नाङ्कुरः ॥३०९॥

तथा ध्यानाग्निना दग्धे, कर्मणि न भवाङ्कुरः ।
तथैव घातिनाशेन, ज्ञानावरणनाशता ॥३१०॥
अतः सर्वज्ञता स्वस्मिन्नागता न विनश्यति ।
साद्यनन्तत्वपर्यन्तं, सा च तिष्ठति सर्वदा ॥३११॥
येन सर्वज्ञता नाशः, स्वीकृतोऽज्ञानिभिर्जनैः ।
तन्मोक्षो नैव मन्तव्यः, यत्र नैव प्रकाशता ॥३१२
अतोऽपि दृढभावेन, मोक्षसर्वज्ञता सदा ।
मन्तव्या स्थिरचित्तेन, निष्कास्यतामज्ञानता ३१३॥
तादृशी ज्ञानता चैव, स्वयमेव प्रजायते ।
तादृशज्ञानमन्तव्ये, कूटस्थता च नात्मनि ॥३१४
जैनशास्त्रानुसारेण प्रकृतिषु न केवलम् ।
उत्पादव्ययताध्रौव्ययुक्तं तत्त्वं समं मतम् ॥३१५॥
जडचेतनतत्त्वेषु, सर्वत्र लक्षणं सदा ।
अतो युक्तिं विभाव्यैव, कूटस्थनित्यतां त्यज ३१६
चतुर्थपादसूत्रेषु, द्वादशसु प्रकाशितम् ।
लिख्यते तस्य भावार्थः, स्पष्टरूपेण कश्चन ३१७॥
प्रत्येकवस्तुधर्माणां, तिस्रोऽवस्था भवन्ति वै ।
भूतभावित्वसत्कालाः, तत्कृत् तत्र विभिन्नता ॥

भूतभाविदशायां च, प्रत्येकं स्वस्वरूपके ।
धर्मेण सह सम्बन्धः, अस्तीति प्रतिपादितः ॥३१९॥
तादृशवस्तुतत्त्वानां, जैनप्रक्रियया सह
संयोजने च सद्भूतं, स्वरूपं परिसिध्यति ॥३२०॥
द्रव्यपर्यायरूपेण, वस्तुतत्त्वे दृढीकृते ।
पूर्वोक्तकालभेदस्य, व्यवस्था घटते सदा ॥३२१॥
द्रव्यपर्यायरूपं हि, सर्वं जगद्विलोक्यते ।
स्वरूपान्तरेण चात्रैव, स्याद्वादोऽयं निषेवितः ३२२॥
स्याद्वादे स्वीकृते चैव, व्यवहारस्तु सर्वदा ।
सर्वप्रकारसंसिद्धः, मन्तव्यो नात्र संशयः ॥३२३॥
स्याद्वादाख्यनरेन्द्रस्य, यत्राज्ञा परिवर्तते ।
तत्रैव वस्तुतत्त्वत्वं, नान्यत्र तद्विलोक्यते ॥३२४॥
प्रकृतितत्त्वमन्तव्ये, स्याद्वादः स्वीकृतो दृढः ।
सप्तभंगीप्रदीपे च, सर्वमेतद्विचारितम् ॥३२५॥
यत्र वैकान्तनित्यत्वं, तादृक् सत्कार्यवादता ।
तत्र सद्वस्तुतत्वानामाशा खपुष्पसादृशी ॥३२६॥
पातञ्जलीय योगस्य, कृता विचारणा मया ।
कृपा च गुरुदेवानां, मुख्यकारणतां भजेत् ॥३२७॥

यशोविजयविज्ञानां, दर्शनपारगामिनाम् ।
युक्तिमालम्ब्य यत्किञ्चिन्मयाऽप्यत्र विचारितम् ॥

॥ इति श्रीशास्त्रविशारदजैनाचार्य विश्ववन्द्य-
पूज्यपादशासनसम्राट्जङ्गमयुगप्रधानाऽऽरा-
ध्यदेवश्रीविजयधर्मसूरीश्वरशिष्येणन्या-
यविशारदन्यायतीर्थोपाध्यायमङ्गल-
विजयेन विरचिते योगप्रदीपे
पातञ्जलयोगविचारात्मक-
द्वाविंशतितमप्रकाशः
सम्मेतशैलशिखरे
समाप्तिमगमतः ॥



# फलनिरूपणपरिशिष्टम् ।

विभूतिवर्णनं चैव, यथायोगे प्रदर्शितम् ।
विभूतिपादप्रस्तावे, अत्रापि तत्प्रदर्श्यते ॥१॥
अहिंसा परिपूर्णा च, योगिना येन पाल्यते ।
तस्य महात्मनो दृष्टिपाताद्वैरादि शाम्यति ॥२॥
विना व्याख्यानकर्त्तव्ये, केवलदृष्टिमात्रतः ।
जन्मजातानि वैराणि, त्यजन्ति जन्तवः सदा ॥३॥
भगवद्देशनाकाले, समवसरणे शुभे ।
प्राणिनः क्रूरहिंसाद्याः आगच्छन्ति च सत्वरम् ॥४॥
मृगा मृगेन्द्रसिंहादिं, दृष्ट्वा च प्रेमभावतः ।
एकस्मिन् स्थानके सर्वे, स्थित्वा शृण्वन्ति देशनाम् ।
अनन्तशक्तियुक्तानां, तीर्थकृतां समीपके ।
अतिशयत्वहेतुश्च, आगतौ यदि कथ्यते ॥६॥
तदाऽत्र किमु कथ्येत, यत्रातिशयता नहि ।
अहिंसा केवला शुद्धा, हेतुत्वेन निगद्यते ॥७॥
येऽतिशयात्प्रमुक्ताश्च बलदेवादिसाधवः ।
तेषां महामुनीनां च, समीपे चागतिः कथम् ॥८॥

अरण्ये देशनां श्रोतुं, तेषां च क्रूरप्राणिनः ।
समागच्छन्ति भावेन, तत्रापि कारणं च तत् ॥९॥
आगत्य प्रेमभावेन, तिष्ठन्ति सर्वदा खलु ।
विस्मृत्य वैरभावं च, भूषयन्ति च पर्षदम् ॥१०॥
अतः पूर्णयमानां च, पालने किमु नो भवेत् ।
मोक्षसुखस्य सम्प्राप्तिः, अन्यस्य तर्हि का कथा ११
देवदानवगन्धर्वा यक्षराक्षसकिन्नराः ।
सेवाभावं च ते सर्वे, दर्शयन्ति विनम्रतः ॥१२॥
देवा अपि नमस्यन्ति देवेन्द्राश्चक्रवर्त्तिनः ।
अन्येषां प्राणिनां तर्हि किं कथ्यते ततः परम् ॥१३
सर्वथा शुद्धरूपेण, नवकोट्यनुसारतः ।
पालयन्ति च येऽहिंसां, तदाग्रे किमु वर्ण्यते ॥१४
विशुद्धसंयमं चैव, अतिचारादिशून्यतः ।
सर्वथा पालयन्ति ये, तेषां स्फुटा विभूतयः ॥१५॥
सर्वेषां संयमानां च मध्ये सा मुख्यरूपिका ।
अहिंसा कथिता ज्ञेया, अन्ये च वृत्तिरूपतः ॥१६॥
अहिंसा परिपूर्णायां, सर्वं पूर्णं निगद्यते ।
तस्याश्च न्यूनतायां हि, सर्वं न्यूनं प्ररूप्यते ॥१७॥

योगाङ्गानां च सर्वेषां, मूलभूता निगद्यते ।
मूलस्य च विनाशेन, शाखादिकं न तिष्ठति ॥१८
दयानदीमहातीरे, सर्वे धर्मास्तृणांकुरः ।
तस्यां शोषमुपेतायां, कियन्नन्दन्ति ते चिरम् १६
यदि मोक्षसुखानां च, आस्वादेच्छा प्रजायते ।
तदा कण्ठगतैः प्राणैः, अहिंसा नैव मुच्यताम् २०
सर्वदुःखविनाशाय, सर्वसुखस्य लब्धये ।
अहिंसा शुद्धधर्माय, सर्वथाऽचोद्यमीयताम् ॥२१॥
ते धन्याः पुरुषा ज्ञेयाः, सर्वश्लाघ्याश्च ते मताः ।
सर्वेषां वन्दनीयास्ते सर्वथाऽहिंसकाश्च ये ॥२२॥
सतां च सर्वजीवानां, अनुकूलं वदन्ति ये ।
तेषां प्राणविघातादिप्रतिकूलं च नो कदा ॥२३॥
तत्सत्यं गीयते सर्वैः, अन्यत्सर्वमसत्यकम् ।
व्युत्पत्तिप्रविबोधेन, एतत्सत्यं निरुपितम् ॥२४॥
प्रवृत्तिः सत्यशब्दस्य, परपीडाकरं वचः ।
प्रमत्तयोगयोगेन, वक्तव्यं न कदाचन ॥२५॥
यद्भूतहितमत्यन्तं, असत्यप्रतिपादकम् ।
अन्यत्सर्वं च मन्तव्यं, तत्सत्यमिति गीयते २६

सर्वासां च क्रियाणां च सत्यवादिमहात्मभिः ।
सर्वफलाश्रयत्वं च, प्राप्यते व्रतपालनात् ॥२७॥
अहिंसायाः फलं यच्च, प्रोक्तं श्रीजैनशासने ।
सत्यस्यापि फलं तादृक्, प्राप्यते नात्र संशयः ॥२८
सत्यासत्ये च मिश्रा च, चतुर्थी व्यवहारजा ।
भाषाणां चतसृणां च, आद्यान्तिमे च भाषके ॥२९॥
नवकोटिस्वरूपेण, अतिचारविहीनकम् ।
सत्यं च पालितं येन, फलं तस्यैव ज्ञायताम् ॥३०॥
भाषणीये सतां चैव, द्वे भाषे सर्वसम्मते ।
अन्ये द्वये परित्याज्ये, इत्याज्ञा पारमेश्वरी ॥३१॥
गुणानुरागतां देवाः कुर्वन्ति च नराधिपाः ।
उद्वहन्ति च तस्याज्ञां, अग्निर्भजति शीतताम् ॥३२॥
अस्तेयव्रतकर्त्तव्ये, अचौर्यं च फलं महत् ।
सर्वरत्नोपस्थानं च, तत्समीपे च सर्वदा ॥३३॥
परस्वहरणे येषां, नियमः शुद्धभाषिणाम् ।
समायान्ति श्रियस्तेषां, स्वयमेव स्वयंवराः ॥३४॥
विघ्नानि दूरतो यान्ति, साधुवादः प्रजायते ।
स्वर्गसौख्यानि ढौकन्ते, अस्तेयव्रतधारिणाम् ॥३५॥

ब्रह्मचर्यप्रतिष्ठाने, ब्रह्मचारिमहात्मनः ।
सम्पूर्णशक्तिलाभश्च, जायते ब्रह्मयोगतः ॥३६॥
दीर्घायुषः सुसंस्थानाः, दृढसंहनना नराः ।
तेजस्विनो महावीर्याः, भवेयुर्ब्रह्मचर्यतः ॥३७॥
प्राणाधारं चरित्रस्य, आत्मशुद्ध्येककारणम् ।
पालको ब्रह्मचर्यस्य, पूजितैरपि पूज्यते ॥३८॥
उभयलोकसंसिद्धिः, देवेन्द्रपरिपूज्यता ।
सम्पूर्णसुखताऽवाप्तिः, जायते ब्रह्मचर्यतः ॥३६॥
ब्रह्मचर्येण वीर्याणां, लाभस्तु परिजायते ।
सद्बुध्याश्च ततः प्राप्तिः, रत्नत्रयं ततो मतम् ॥४०
पूर्णरत्नत्रयाणां च ज्ञानेन पालनं भवेत् ।
ततः सर्वोत्तमं ध्यानं, ततश्च केवलं मतम् ॥४१॥
जन्मकथंत्वसम्बोधः, अपरिगृहस्थैर्यके ।
तृष्णा पिशाचिनो दूरे, गच्छति व्रतधारिणाम् ॥४२
शुद्धात्मगृहप्रावेशो, अन्तरायं करोति सा ।
तद्भावे च तस्यैव, अभावः परिजायते ॥४३॥
समीपे निधयस्तस्य, कामगव्य-नु-गामिनी ।
अमरा दासतां यान्ति, सन्तोषो यत्र तिष्ठति ॥४४

जितान्यक्षाणि मोक्षाय, संसारायेतराणि वै ।
तादृशमन्तरं ज्ञात्वा, यद्युक्तं तत्समाचर ॥४५॥
तपस्विनो मनः शुद्धिपरिहीनस्य सर्वथा ।
ध्यानं खलु मुधाचक्षुर्विकलस्येव दर्पणम् ॥४६॥
तदवश्यं मनःशुद्धिः, कर्त्तव्या सिद्धिमिच्छता ।
ततो यमादिसंप्राप्तिः, किमन्यैः कायदण्डनैः ॥४७॥
अस्ततन्द्रैरतः पुंभिः, निर्वाणपदकांक्षिभिः ।
विधातव्यः समत्वेन, रागद्वेषद्विषत्क्षयः ॥४८॥
मनःशुद्ध्यै च कर्त्तव्यः, रागद्वेषविनिर्जयः ।
कालुष्यं येन हित्वात्मा, स्वस्वरूपेऽवतिष्ठते ॥४९॥
अमन्दानन्दप्राप्तव्ये, साम्यवारिणि मज्जताम् ।
जायते सहसा पुंसां, रागद्वेषविनाशता ॥५०॥
शौचात्स्वाङ्गजुगुप्सा च, परसंसर्गशून्यता ।
जायते चेति वक्तव्यं, शुद्धिश्च द्विप्रकारतः ॥५१॥
द्रव्यशौचाच्छरीरस्य, क्षणं शुद्धिः प्रजायते ।
भावशौचेन जीवानां, कर्ममलो विशुध्यति ॥५२॥
अनुत्तमसुखानां च, संतोषात् लाभसम्भवेत् ।
अतः संतोषता श्रेष्ठा, पालनीया च सर्वथा ॥५३॥

यत्सुखं च नरेद्राणां, यत्सुखं चक्रवर्त्तिनाम् ।
सन्तोषियोगिनश्चाग्रे, तत्सुखं बिन्दुमात्रकम् ॥५४
तपसा निर्जरा चैव, संवरोऽपि प्रजायते ।
आश्रवस्य निरोधेन, सकामा निर्जरा मता ॥५५॥
कायेन्द्रियस्य संसिद्धि, अशुद्धिक्षयतो भवेत् ।
तपसः परिजायेत मन्तव्यं ज्ञानिना सदा ॥५६॥
स्वाध्यायः पञ्चधा कार्यः, वाचनापृच्छनादिभिः ।
सकामानिर्जरा चैषा, यमिनां परिजायते ॥५७॥
आचाराङ्गादिग्रन्थानां, अध्यात्मपरिपोषिणाम् ।
तेषामेवेह स्वाध्यायः, अन्येषां न कदाचन ॥५८॥
ईश्वरप्रणिधानेन, समाधिसिद्धिः भवेत् ।
ईश्वरप्रणिधानं च, अतः कार्यं विवेकिना ॥५९॥
मैत्र्यादिष्वात्मशक्तीनां, प्रादुर्भावः प्रजायते ।
समताभावरूपं तत् आत्मबलं प्रकाशते ॥६०॥
अनित्यादिकभावेषु, संवेगादि प्रजायते ।
निर्वेदता ततश्चैव, शुद्धरूपा प्रकाशते ॥६१॥

सम्यक्त्वशुद्धरत्नस्य, फलं मिथ्यात्वसंक्षयः ।
अनुकम्पाऽपि तस्यैव, ज्ञातव्ये लिंगतां भजेत् ॥६२
आस्तिक्यं च फलं मुख्यं, गीयते जैनशासने ।
अतः सम्यक्त्वरत्नं तत्, पालनीयं प्रयत्नतः ॥६३॥

पातञ्जलयोगे—

सूर्ये संयमकर्त्तव्ये, भुवनज्ञानता भवेत् ।
चन्द्रे संयम कार्ये च, ताराव्यूहस्य ज्ञानता ॥६४॥
ध्रुवे च संयमे कार्ये, तद्गतिज्ञानता भवेत् ।
नाभिचक्रे च कर्त्तव्ये कायव्यूहस्य ज्ञानता ॥६५॥
संयमात्कण्ठकूपे च, क्षुत्पिपासा निवर्त्तते ।
संयमात्कूर्मनाड्यां च, स्थैर्यं तु प्रणिगद्यते ॥६६॥
मूर्धज्योतिषिकर्त्तव्ये, सिद्धिदर्शनता भवेत् ।
प्रातिभादिकसर्वं च, जायते योगयोगतः ॥६७॥
हृदये संयमे कार्ये, चित्तसंवित्प्रजायते ।
बन्धकारणशैथिल्यात्, प्रचारपरिवेदनात् ॥६८॥
चित्तस्य परदेहेषु, प्रवेशः परिजायते ।
उदानवायुजेतव्ये, कम्पकं कण्टकादिषु ॥६९॥

असंगोत्क्रान्तिके चैव, जायते वायुतावशो ।
समानवायुजेतव्येज्वलनं फलरूपकम् ॥७०॥
श्रोत्राकाशस्य सम्बन्धः संयमाद्दिव्यश्रोत्रकम् ।
कायाकाशस्य सम्बन्धः संयमात्प्रतिपाद्यते ॥७१॥
लघुतूलसमापत्तेश्चाकाशगमनं भवेत् ।
स्थूलस्वरूपसूक्ष्मान्वयार्थतत्त्वस्य संयमात् ॥७२॥
भूतजयस्ततश्चैव, अणिमादिकस्य चोद्भवः ।
कायसम्पत्तिस्तद्धर्मानभिघातश्च जायते ॥७३॥
प्राबल्यरूपलावण्यं, वज्रसंहननादिकम् ।
इत्येवं योगवृक्षस्य, फलत्वं प्रतिपादितम् ॥७४॥
पातञ्जलाऽनुसारेण, ईदृशं कथितं फलम् ।
जैनशास्त्रानुयोगेन, विशिष्टं परिदर्श्यते ॥७५॥
विभूतिर्द्विप्रकारा स्याद्धै ज्ञानिकी च देहजा ।
अतीताऽनागते ज्ञाने, जीवानां रुतज्ञानकम् ॥७६॥
पूर्वजातित्वज्ञानं च, जातिस्मरणनामकम् ।
भुवनज्ञानता चैव, परचित्तस्य ज्ञानकम् ॥७७॥
ताराव्यूहस्य सज्ज्ञानं, एता ज्ञानविभूतयः ।
हस्तिबलं च विज्ञेयं, अन्तर्धानं सुयोगजम् ॥७८॥

परकायप्रवेशादि, ऐश्वर्यमणिमादिकम् ।
रूपलावण्यताख्या च, कायसम्पत्प्रकीर्त्तिता ॥७६॥
शारीरिकी विभूतिश्च, ज्ञेया पातञ्जले खलु ।
जैनशास्त्रेषु लब्धित्वरूपा सा प्रणिगद्यते ॥८०॥
मनःपर्यायज्ञानं च, अवधिज्ञानकं तथा ।
जातिस्मरणज्ञानं च, इत्यादि ज्ञानलब्धयः ॥८१॥
आमौषधिश्च विप्रुडौषधिश्लेष्मौषधिश्च वै ।
सर्वौषधिः स्वरूपा च, जङ्घाचारणलब्धयः ॥८२॥
विद्याचारणलब्धिश्च, वैक्रियाहारकादयः ।
शारीरिक्यश्च मन्तव्या लब्धयो ज्ञानिना सदा ८३
योगवृक्षफलं चैतत्, लब्धिरूपं प्रकीर्त्तितम् ।
कैवल्यज्ञानलब्धिश्च, योगस्य फलता मता ॥८४॥
सम्पूर्णकर्मणां चैव, क्षयो योगेन जायते ।
कल्पवृक्षस्वरूपाच्च, योगात्किं किं न जायते ॥८५॥
सम्यक्त्वेनैव मिथ्यात्वं, सहाऽज्ञानेन नश्यति ।
शुद्धतत्त्वेषु वैशुद्धिर्बुद्धिर्यत्र प्रजायते ॥८६॥
श्रद्धादीपप्रकाशश्च, तत्रैव प्रकटीयते ।
सम्यग्दर्शननैर्मल्यं, यतो योगेन संभवेत् ॥८७॥

सावद्ययोगत्यागेन, विरतिः संवरो भवेत् ।
पापस्थानकहेतूनां, नाशस्तेनैव जायते ॥८८॥
कर्मागमनिरोधे च, आश्रवद्वाररोधनम् ।
संवरो हेतुताभावं, भजेत नात्र संशयः ॥८९॥
कषाये सर्वथा नाशे, मोहनीयं विनश्यति ।
मोहनीयविनाशेन, संसारसागरं तरेत् ॥९०॥
क्षायोपशमिके भावे, गृहीते पूर्वयोगतः ।
पश्चात्क्षायिकरूपेण, तस्य परिणतिर्भवेत् ॥९१॥
मिश्रश्रद्धानभावेन, क्षायिकी च ततो भवेत् ।
क्षायोपशमिकाज्ज्ञानात्कैवल्यं क्षायिकं ततः ॥९२॥
मिश्रभावादिचारित्राद्यथाख्यातं च क्षायिकम् ।
चारित्रं परिजायेत, मोक्षप्राप्तिस्ततो भवेत् ॥९३॥
क्षमया क्रोधनाशश्च, मृदुत्वे माननाशता ।
आर्जवेन च कौटिल्यं, सर्वथा परिनश्यति ॥९४॥
सन्तोषेणैव लोभस्य, विजयः परिजायते ।
भावनाऽनित्यतादीनां, भावनीया प्रयत्नतः ॥९५॥
शुद्धभावनया चैव, शुद्धो भावः प्रजायते ।
सर्वे संवररूपास्ते, उपायाः परिदर्शिता ॥९६॥

एतेषां रक्षणेनैव, संवरो रक्षितो भवेत् ।
यमाश्च नियमाश्चैव, आसनं प्राणयामकम् ॥९७॥
प्रत्याहारश्च सर्वं तत्प्रोक्तं योगांगरूपकम् ।
संवरहेतुता तत्र, दर्शिता जैनशासने ॥९८॥
धारणाध्यानतारूपे, समाधिर्निर्जरा खलु ।
संवरनिर्जरातत्त्वे मोक्षकारणरूपके ॥९९॥
जैनदर्शनशास्त्रेषु, योगस्य पालनं परम् ।
अवश्यमेव कर्त्तव्यं, इत्याज्ञापारमेश्वरी ॥१००॥
मुमुक्षूणां च साधूनां आत्मनश्चिन्तनं विना ।
सम्मतिश्चान्यकार्यस्य, दर्शिता नैव ज्ञायताम् १०१
कदाचित्कार्यप्रासङ्गे, यदि कार्यं तु चापतेत् ।
तदा निवृत्तिपुष्टित्वसाधिकां प्रवृत्तिं भजेत् ॥१०२॥
आश्रवः सर्वथा हेयः, उपादेयश्च संवरः ।
तदर्थं सर्वथा यत्नं, कुर्वन्ति जैनसाधवः ॥१०३॥
निवृत्तिप्रधानस्य, प्रवृत्तेश्चाभिधानकम् ।
प्रवचनाष्टमातृत्वं, गदितं जैनशासने ॥१०४॥
साधुजीवनप्राधान्या, दिनचर्या निगद्यते ।
तृतीययामकं त्यक्त्वा, अन्यत्रियामकालिके ॥१०५॥

मुख्यतया तु स्वाध्यायः, ध्यानं च करणं मतम् ।
उपदेशादिदानं च, सावद्यरहितं सदा ॥१०६॥
जैनसिद्धान्तकारेण, योगार्थेषु प्रधानतः ।
ध्यानशब्दः प्रयुक्तोऽस्ति, ध्यानलक्षणवेदिना १०७
आलम्बनादिभेदानां, व्याख्या विस्तृतरूपतः ।
अनेकजैनशास्त्रेषु, प्रोक्ता गणधरादिभिः ॥१०८।

उत्तराध्ययनसूत्रस्याध्ययनं २६ ।

दिवसस्स चउरो भाए, कुज्जा भिक्खु वियक्खणे ।
तओ उत्तरगुणे कुज्जा दिणभागेसु चउसुवि १०६
पढमं पोरिसि सज्झायं बिइअं झाणं झिआयइ ।
तइआए गोयरकालं, पुणो चउत्थिय सज्झायं ॥११०
रत्तंपि चउरो भाए, भिक्खु कुज्जा वियक्खणो ।
तओ उत्तरगुणे कुज्जा, राइभागेसु चउसुवि ।१११
पढमं पोरिसि सज्झायं, बिइअं झाणं झिआयइ ।
तइआए निद्दमोक्खं तु चउत्थिए भुज्जो वि सज्झायं
स्थानांगसूत्रके ज्ञेयं, समवायांगसूत्रके ।
व्याख्याप्रज्ञप्तिसूत्रेषु, उत्तराध्ययनसूत्रके ॥११३॥

आत्मचिन्तनरूपस्य, ध्यानस्य परिशीलनम् ।
सर्वकार्यं परित्यज्य, ध्यानमेव समाश्रय ॥११४॥
आवश्यकीयनिर्युक्तौ, कायोत्सर्गकनामके ।
अध्ययने च साधूनां, ध्यानता प्रतिपादिता ॥११५॥
येन योगेन शुद्धस्य, सम्बन्धश्चात्मनो भवेत् ।
योगः स एव मन्तव्यः, साक्षात् योगतत्ववेदिना ११६
यमनियमनामाख्यौ, योगौ संवररूपकौ ।
संवरः कर्मरोधाख्यः, अतश्चात्मनि युज्यते ॥११७
आसनस्यैव सम्बन्धः, आत्मनि चैव नो भवेत् ।
आसनं विग्रहस्यैव, योगस्तत्र कथं भवेत् ॥११८॥
दृढभावः शरीरस्य, विनासनं न युज्यते ।
दृढशरीरसम्बन्धः, ध्यानेषु चोपयुज्यते ॥११९॥
ध्यानं तु निर्जरारूपं, निर्जरा कर्मणो भवेत् ।
आत्मनः शुद्धिहेतुत्वं, परम्परा निगद्यते ॥१२०॥
मन्तव्यमासनं चैव, अतएव हि योगिना ।
प्राणायामस्तु योगाङ्गं, कया रीत्या प्ररूप्यते १२१
द्रव्यतः प्राणयामस्य, सम्बन्धो नैव चात्मनः ।
श्वासनिष्कासनादीनां क्रियाणां च प्रधानता ॥१२२

तस्याश्च निग्रहे ज्ञेयः सम्बन्धो ज्ञानिना सदा ।
आत्मनि तु न कश्चिच्च, सम्बन्धः परिज्ञायताम् १२३
पुद्गलरूपता तासु, देहः पुद्गलरूपकः ।
अतो द्वयोर्हि सम्बन्धः, साक्षान्नैव निगद्यते ॥१२४
भावतः प्राणयामश्च, गुणप्रवेशनादिकः ।
सम्बन्धश्चात्मनस्तस्य, साक्षादेव प्ररूप्यते ॥१२५॥
आत्मशुद्धिप्रकारे च, हेतुता तस्य युज्यते ।
अतोऽपि सैव मन्तव्या, न तु निरर्थकः खलु ॥१२६
इन्द्रियसंयमश्चैव, प्रत्याहारे निगद्यते ।
अतो हि संवरः सोऽपि, आत्मविशुद्धिहेतुकः ॥१२७
मनसः संयमश्चैव, धारणासु निगद्यते ।
सोऽपि संवररूपः स्यादात्मविशुद्धिहेतुकः ॥१२८॥
तपो भेदस्वरूपाच्च, ध्यानात्तु निर्जरा मता ।
संवरोऽपि ततश्चैव, कथितो ध्यानशालिना ॥१२९
यावत्पर्यन्तध्यानाग्निः, आत्मनि ज्वलितो भवेत् ।
तावत्कालीनपर्यन्तं, कर्मणां निर्जरा मता ॥१३०॥
कर्मणो पुद्गलरूपस्य, रागद्वेषस्य शाटनम् ।
तत्कार्यं चैव ध्यानाग्निः, वितनोत्यतिशीघ्रकम् ॥१३१॥

मूलस्य ज्वालनेनैव, अन्येषां कीयती स्थितिः ।
मूलनाशेन नश्यन्ति, कर्माण्यन्यानि निश्चितम् १३२
तृतीयध्यानरूपे च, योगनिरोधकालीने ।
सर्वयोगनिरोधेन, सर्वसंवरता भवेत् ॥१३३॥
निर्जराऽपि भवेदेव, तत एव सुनिश्चिता ।
चतुर्थध्यानरूपे च समाधौ पूर्णनिर्जरा ॥१३४॥
सर्वेषां कर्मणां चैव, सर्वथा निर्जरा खलु ।
चतुर्थध्यानपर्यन्ते, जायते नात्र संशयः ॥१३५॥
मोक्षः स एव विज्ञेयः, ततश्चोर्ध्वगतिर्भवेत् ।
धर्माधर्मास्तिकायौ च, यत्र स तत्र गच्छति ॥१३६॥
ततश्चोपरि नो याति, धर्मा[1]स्त्यादिवियोगतः ।
कर्मणां सर्वथाऽभावे, नाधो याति ततः खलु १३७॥
लोकाग्रे च स्थितिस्तस्य, सिद्धस्य परमात्मनः ।
साद्यनन्तत्वपर्यन्तं, सुखाऽनन्त्यं भुनक्ति सः १३८॥
सम्पूर्णयोगतत्त्वस्य, सेवने फलपूर्णता ।
सातिचारे च न्यूनत्वं, फलस्य परिकीर्त्तितम् १३९॥
अतोऽप्रमत्तभावेन, अतिचारविहीनता ।
सर्वदा सेवनीयोऽयं, योगश्च योगिना सदा १४०

[1] धर्माऽस्तिकायादि

तादृग्महत्फलं श्रुत्वा, को योगे न प्रवर्त्तते ।
यो न प्रवर्त्तते तत्र, तस्य जन्म निरर्थकः ॥१४१॥
ते धन्याः पुरुषा ज्ञेयाः, ये च योगं समाश्रिताः ।
आत्मानं निर्मलं कृत्वा, ये च मोक्षं गताः खलु १४२
योगशब्दश्च येषां नो, कर्णगोचरतां गतः ।
जन्मनिरर्थकस्तेषां, पशुप्रायाश्च सर्वदा ॥१४३॥
महापातकिनो ये स्युः, परस्त्रीलम्पटाः सदा ।
लुंटाका मद्यमांसादिसेविनो दुर्भगा जनाः ॥१४४॥
हिंसादिष्वनुरक्ता ये सप्तव्यसनसेविनः ।
तेऽपि योगं समाराध्य, प्राप्ताः शिववधूश्रियम् १४५॥
चिरकालार्जितान्येव, येन पापानि सर्वदा ।
ते नाशयन्ति योगेन, घनवच्चण्डवाततः ॥१४६॥
अप्राप्तपूर्वधर्माणः, मरुदेव्यादिका खलु ।
तेऽपि योगप्रभावेण, भवन्ति शिवशालिनः ॥१४७॥
भरतादिमहाराजाः, षट्खंडभरताधिपाः ।
महायुद्धादिकर्त्तारः, महारम्भत्वसेविनः ॥१४८॥
तेऽपि राज्यश्रियं त्यक्त्वा योगधर्मसमाश्रयात् ।
रत्नत्रयं च सम्प्राप्य, आसेदुः केवलश्रियम् ॥१४९॥

महापापिनो दुष्टाश्च, दृढप्रहारिणो जनाः ।
तेऽपि योगं समासाद्य, प्रयाताः परमं पदम् ॥१५०॥
सर्वोत्तमीययोगश्रीप्राप्तये यत्नतां भज ।
अन्यत्सर्वं च त्यक्तव्यमित्याज्ञा पारमेश्वरी ॥१५१॥
योगफलस्य वक्तव्ये, प्रासङ्गिकं च वर्णितम् ।
तत्र यदि क्षतिर्मेस्यात् क्षन्तव्योऽहं च योगिभिः ॥
योगशास्त्रस्य सज्ज्ञानं, विद्यते नहि किञ्चन ।
तथापि धृष्टतां धृत्वा, कथितं लेशमात्रकम् ॥१५३॥
कृपया गुरुदेवानां, यत्प्राप्तं तत्समर्पितम् ।
भव्यजनाश्च तस्यैव, कुर्वन्तु चोपयोगकम् ॥१५४॥
योगस्याभ्यासतां मुक्त्वा, नान्यत्र स्वीयमानसम् ।
योजयन्तु च हे भव्याः ! कदाचिदपि कुत्रचित् ॥१५५
अतः प्रमादस्थानानां, सर्वेषां त्यागभावतः ।
अप्रमत्तत्वभावेन, तन्वन्तु योगभावनाम् ॥१५६॥
योगप्रदीपनामाख्यः ग्रन्थो मया विनिर्मितः ।
तन्निर्माणेन यत्पुण्यं, जातं तेनैव सर्वथा ॥१५७॥
शुद्धचारित्रसामग्री शीघ्रं मोक्षप्रसाधनी ।
अविलम्बेन भूयाद् मे, नान्यं किञ्चिच्च प्रार्थये १५८

॥ इति श्रीशास्त्रविशारदजैनाचार्यविश्ववन्द्य परमोपकारीशासनसम्राट् सूरिचक्रचक्रवर्तिपरम-योगिजङ्गमयुगप्रधान श्रीविजयधर्मसूरीश्वरशि-ष्येण न्यायविशारदन्यायातीर्थतत्त्वाख्यानार्हद्दर्श-नदीपिकाधर्मदीपिकासप्तभङ्गीप्रदीपधर्मप्रदीपस-म्यक्त्वप्रदीपद्रव्यप्रदीपव्युत्पत्तिवादवृत्ति शक्ति-वादटिप्पणिकानयप्रदीप योगप्रदीपप्रभृत्यनेक-ग्रन्थ निर्मापकोपाध्यायमङ्गलविजयेन विरचिते योगधर्मप्रतिपादकयोगप्रदीपे योगफलवर्णनना-मात्रयोविंशतितमः प्रकाशः समाप्तः॥

तत्समाप्तौ च ग्रन्थोऽपिकलिकातानगर्यां श्रीगूर्जरजैनश्वेताम्बरीय तपगच्छीयो-पाश्रये समाप्तोऽभूत् ॥

ॐ शान्तिः ॥ शान्तिः ॥ श्रीरस्तु ॥

कल्याणमस्तु ॥

॥ नमो नमः श्री प्रभुधर्मसूरये ॥

# वीरधर्मपट्टावलिः ।



## योगप्रदीपस्य प्रशस्तिः ।

वन्दे-शासननायकं जिनपतिं वीरं सिद्धार्थात्मजं
द्वादशवर्षमितं तपश्च विहितं येनैव घोरं महत् ।
उपसर्गादिककष्टसोढशक्तं ध्यानाप्तकैवल्यकं
पावापुरिस्थितमनन्तसुखदं, श्रीवर्धमानं स्तुवे ॥१॥

मिथ्यात्वतैमिरतया च व्याप्तम्
यदीयस्वान्तमज्ञानदोषतः ।
श्रीवीरभानूदयेनैव नष्टम्
पावानगर्यां यजनक्षणे तत् ॥२॥

श्रीवर्धमानात्त्रिपदीमवाप्य
दृब्धं परिपूर्णश्रुतं च येन ।
श्रीद्वादशांगित्वरूपात्प्रसिद्धम्
तमिन्द्रभूतिं शतशो नमामः ॥३॥

तस्यैव यादृशी भक्तिः, निःसीमा जगतां गुरौ ।
तल्लेशो मादृशां स्याच्चेत्तदैव सफलं जनु ॥४॥
मानोऽपि रत्नलाभाय, सद्रागः प्रभुभक्तये ।
खेदः कैवल्यज्ञानाय, सर्वं चित्रं गुरो तव ॥५॥
अल्पायुष्कत्वहेतोश्च, अन्येषां गणधारिणाम् ।
भगवत्पट्टयोग्यत्वं, नैव तेषां प्रकीर्त्तितम् ॥६॥
सुधर्मस्वामिनां किन्तु, स्वपट्टत्वं समर्पितम् ।
तदादिशिष्यसम्पत्तिः, तेषामेव विभाव्यते ॥७॥
विचरन्त्यधुना ये च, ते सर्वे साधवः किल ।
सुधर्मस्वामिनां शिष्याः, ज्ञातव्या सर्वसज्जनैः ॥८
श्रीवीरात्त्रिपदीमवाप्य रचना पूर्वस्य पूर्वं कृता
सल्लब्धिं परिप्राप्य नैव मनसि दर्पाङ्कुरो रोपितः ।
सर्वज्ञ सदृग्यदीय शुद्धशिक्षां गृह्णाति संघः सदा
तद्धर्मेण सुवासितं च भरतं जीयात्सुधर्माग्रणोः ॥९
प्रभुश्रीवीरदेवानां, पट्टो येन विभूषितः ।
स सुधर्मा गणी सर्वकल्याणकारको भवेत् ॥१०॥
कोटिं नवनवतिं विहाय हेम्नामष्टौ च प्रियास्तथा ।
मातृपितृगणैश्च येन गृहीता चौरैः सह तत्क्षणे

श्रीसुधर्मगुरोश्च पार्श्वे सततं गत्वा बहुप्रेमतः ।
दीक्षा चार्हती योगशुद्धहृदयाज्ज्योयात्स जम्बू गुरुः ११
सुधर्मस्वामिनां पट्टः, भूषितो येन साधुना ।
जम्बूस्वामिगुरुः स स्यात्सङ्घकल्याणकृत्सदा ॥१२॥
ऋषभधरिणीपुत्रः, जम्बूनामा महामुनिः ।
सम्प्राप्तशीलसम्यक्त्वः, अभूत्साधुशिरोमणिः १३
षोडशवर्षपर्यन्तं, गृहे स्थित्वा ततः परम् ।
छद्मस्थे विंशतिर्ज्ञेया वर्षाणां च ततः परम् ॥१४॥
अशीतिवर्षपूर्णायुः परिपाल्य शिवं गतः ।
तत्पट्टे प्रभवः स्वामी, स्थापितः गुरुणा तदा ॥१५॥
आर्यप्रभवस्वामी च, कात्यायनीयगोत्रकः ।
आर्यशय्यंभवं प्राप्य, ततस्तेऽपि दिवं गताः ॥१६॥
वात्सगोत्रेषु सम्भूतः, आर्यशय्यंभवो मुनिः ।
यज्ञस्तम्भस्य चाधस्ताद्वीतरागजगद्गुरोः ॥१७॥
शान्तिनाथजिनेन्द्रस्य, वीतरागत्वदर्शिनी ।
मूर्त्तिं दृष्ट्वा प्रबुद्धोऽसौ, जैनोदीक्षां च लब्धवान् ॥
मनकाख्यस्वपुत्रस्य, शिवाय रचितं महत् ।
दशवैकालिकाख्यं हि सूत्रं स्वाचारदर्शकम् ॥१६॥

जगत्कल्याणरूपं तन्मत्वा संघेन रक्षितम् ।
पठित्वा नैकभव्याश्च, मोक्षमार्गे प्रयान्ति वै ॥२०॥
प्रभवस्वामिनः पट्टे, शय्यंभवो महामुनिः ।
श्रुतकेवलितां प्राप्य, व्यहरच्च महीतले ॥२१॥
सूरेः शय्यंभवस्यैव, पट्टेऽभूच्छ्रुतकेवली ।
यशोभद्राख्यसूरिश्च, प्रतापिसूर्यसन्निभः ॥२२॥
तुङ्गिकायनगोत्रीयः, सर्वलब्धिसमन्वितः ।
अनेकभव्यजन्तूनां, बोधको दोषरोधकः ॥२३॥
सम्भूतिविजयाख्यश्च, तत्पट्टे शान्तसेवधिः ।
माढरगोत्रसम्भूतः, सम्पूर्णश्रुतपारगः ॥२४॥
प्राचीनगोत्रसंजातः, भद्रबाहुमहामुनिः ।
नैकागमेषु निर्युक्तीः, कृतवान् बुद्धियोगतः ॥२५॥
कल्पसूत्राख्यसूत्रं च, उद्धृतं दृष्टिवादतः ।
संघोपद्रवनाशाय, स्तोत्रं व्यरचयत्तथा ॥२६॥
उपसर्गहराख्यं च, जगज्जन्तुहितावहम् ।
महास्तोत्रं कृतं येन, शीघ्रं दुरितनाशकम् ॥२७॥
तस्मै महामुनीन्द्राय, नमः श्रीभद्रबाहवे ।
रक्षणं जैनधर्मस्य, कृतं च मुनिना तदा ॥२८॥

सम्भूतिविजयस्यैव, पट्टे साधुशिरोमणिः ।
गौतमगोत्रसम्भूतः, स्थूलभद्रो महामुनिः ॥२६॥
पाटलिपुरवास्तव्यः, शकटालाख्यमंत्रिणः ।
पुत्रः कोशागृहे वासी, पितृमृत्योरनन्तरम् ॥३०॥
मन्त्रिमुद्राप्रदानाय, नन्दराजेन तत्क्षणे ।
आहूतः स्थूलभद्रोऽसौ, तन्मुद्रा ढौकिता तदा ॥३१
तां दृष्ट्वा स्थूलभद्रेण, चिन्तितं मानसे निजे ।
राज्योन्मादवशेनैव, पितृणां मृत्युता खलु ॥३२॥
कर्णे जप प्रभावेन, राज्ञां च मतिमान्द्यतः ।
पितृणां मृत्युता जाता, ममापि सा कथं न स्यात् ॥
अतो मृत्युनिरोधाय, त्यक्त्वा वेश्यानिवासता ।
मौनं विधाय तत्स्थानाद्विचाराय गतस्ततः ॥३४॥
दास्यामि चोत्तरं पश्चान्मानसे कृतनिश्चयः ।
सम्भूतिविजयाख्यश्च, सम्मुखे मीलितो गुरुः ॥३५
महामुनिं च तं दृष्ट्वा, स्वान्ते च चिन्तितं तदा ।
मृत्युनिरोधकार्याय, समर्थोऽयं मुनीश्वरः ॥३६॥
शरणं तस्य चेन्मे स्यान्मम श्रेयस्तदा भवेत् ।
इत्येवं मानसे मत्वा, दीक्षायै प्रार्थना कृता ॥३७

योग्यजीवं परिज्ञाय, गुरुणा दीक्षितः किल ।
राजसभां समागत्य, धर्मलाभं प्रदत्तवान् ॥३८॥
शोचितो राजप्रश्नश्च, लोचितमुत्तरं कृतम् ।
तं श्रुत्वा मानसे स्वीये, राज्ञा च परिचिन्तितम्॥३९
अहो ! चैतस्य दार्ढ्यं तदहो मानसनिश्चयः ।
अहो ! वैराग्यपुष्टित्वं, कामरागस्य मन्दिरे ॥४०॥
इत्येवं स्तुतिश्लाघां च, मुहुर्मुहुः करोत्यसौ ।
तत्काले राजहर्म्याच्च, निर्गतः शान्तसेवधिः ॥४१॥
कोशायाः प्रतिबोधाय, चातुर्मासाय याचनाम् ।
करोति गुरुसाम्मुख्ये, स्थूलभद्रो महामुनिः ॥४२
योग्यस्य योग्यतां ज्ञात्वा, गुरुणा स्वीकृतिः कृता ।
गतः कोशागृहे साधुः, चित्रशालां च याचते ॥४३
पूर्वप्रेमवशेनैव, शाला समर्पिता तदा ।
षड्रसभोज्यसामग्री, वर्षाकालो महांस्तथा ॥४४
मदनागारवासेन, मदनोऽपि विनाशितः ।
कोशाश्रृङ्गारसामग्रीं, दृष्ट्वापि नैव मोहितः ॥४५
वैराग्यमयवाक्येन, अध्यात्मदेशनादिना ।
प्रतिबोध्य च तां कोशामणव्रतं प्रदत्तवान् ॥४६॥

शुद्धां च श्राविकां कृत्वा, आगतौ गुरुसन्निधौ ।
कठिनकार्यकर्त्तारं, स्थूलभद्रमुनीश्वरम् ॥४७
धन्यवादं मुहुर्दत्त्वा, कथितं गुरुणा तदा ।
साधुशिरोमणिर्ज्ञेयः, भारते नैव त्वादृशः ॥४८॥
दशपूर्वं च सम्पूर्णं, पठितं चार्थयोगतः ।
चतुःपूर्वं च सूत्रेण, अर्थेन नैव लब्धवान् ॥४९॥
सम्पूर्णदृष्टिवादं च, भद्रबाहुगुरोर्मुखात् ।
सम्प्राप्य भारतेऽन्तिमः, सञ्जातः श्रुतकेवली ॥५०
वेश्यागृहनिवासेन, षड्रसभोज्यभोगिना ।
कामरागवद् वेश्यायाः, हावभावे न मोहितः ॥५१॥
तादृशो भारते वीरः, न भूतो न भविष्यति ।
सत्साधुगणनायां च, प्रथमोस्थूलभद्रकः ॥५२॥
भगवत्स्थूलभद्रेण, स्वपट्टे स्थापितौ च द्वौ ।
आर्यमहागिरिश्चैकः, सुहस्ती च द्वितीयकः ॥५३
एलापत्ये च गोत्रे वै, सम्भूतः स महामुनिः ।
विच्छेदे जिनकल्पेऽपि, तत्कल्पतुलना कृता ॥५४
विशुद्धव्रतयोगेन, स्वीयवीर्यं परिस्फुरन् ।
कठिनं तादृशं कार्यं, कृतं तेन मुनीन्द्रकैः ॥५५॥

वासिष्ठगोत्रसम्भूतः, सुहस्तिगुरु संयमी ।
गुणानुरागरक्तत्वात्स्तुतिरेव चकार सः ॥५६॥
श्रेष्ठिगृहे स्थितः सूरिरार्यमहागिरेस्तथा ।
जिनकल्पविनाशेऽपि, जिनकल्पस्य कार्यता ॥५७
कृता येन मुनीन्द्रेण, तस्य स्तुतिं च किं ब्रुवे ।
इत्येवं भावना तेन, भाविता शुद्धयोगतः ॥५८॥
आर्यमहागिरिं तं च, वन्देऽहं भक्तिभावतः ।
धन्यास्ते मुनयो ज्ञेया, जैनशासनदीपकाः ॥५६
सुहस्तिसूरिबोधेन, भद्राश्राद्धासुतेन वै ।
अवन्तिसुकुमारेण, लब्धा दीक्षा च शास्वती ॥६०
द्वात्रिंशच्च वधूस्त्यक्त्वा, स्वर्गतुल्यं च सौख्यकम् ।
तीव्रवैराग्ययोगेन, गृहीतं भावतो व्रतम् ॥६१॥
गुरोरनुमतिं प्राप्य, श्मशाने ध्यानकं कृतम् ।
पूर्वभवीयवैराच्च, जम्बूकी चागता तदा ॥६२॥
तया च भक्षिते देहे, न कृता स्वल्पदेवना ।
शुद्धचारित्रयोगेन, विग्रहं च समर्पितम् ॥६३
त्रिप्रहरीयदुःखं तदनुभूय महामुनिः ।
यतः स्थानादवन्त्यां च, आगतस्तत्र चागमत् ॥६४

तत्स्थाने मन्दिरं शुभ्रं, कारितं तत्सुतेन च ।
महाकालं च तन्नामधृतं, जिनालयस्य च ॥६५॥
अवन्तिपार्श्वनाथस्य, मूर्त्तिरपि च कारिता ।
प्रतिष्ठिता शुभे योगे, सूरिणा शुद्धमन्त्रकैः ६६॥
दुर्भिक्षे च परिप्राप्ते, अटन् रङ्कः क्षुधातुरः ।
भिक्षार्थं परिभ्रान्यन् सन्सूरीणां निकटे गतः ॥६७
गोचर्यार्थं गतः सूरिः, कस्यचिच्छ्रेष्ठिनो गृहे ।
विशुद्धमोदकीं भिक्षां, श्रेष्ठी ददाति भावतः ॥६८
भिक्षां च तादृशीं दृष्ट्वा रङ्को याचति मोदकान् ।
अतीव क्षुत्प्रयोगेन, मह्यं पीडा प्रजायते ॥६९॥
मह्यं ददातु भो किञ्चित्त्वत्पार्श्वे प्रचुराः खलु ।
विद्यन्ते मोदकाः सूरे ! ददाने नैव न्यूनता ॥७०॥
सूरिणा ज्ञानयोगेन, भाविकालो विलोकितः ।
अस्माच्छासनवृद्धिश्च, भाविकाले च निश्चिता ७१
स्वीयज्ञानेन विज्ञाय, पश्चादुक्तं मुनीश्वरैः ।
गृह्यते यदि दीक्षा चेन्ममाहारस्तु लभ्यते ॥७२॥
दीक्षा च दीयतां साधो, मा विलम्बो विधीयताम् ।
दत्ता च तत्क्षणे दीक्षा, भोजनं कारितं महत् ॥७३

अतिगरिष्ठभोज्यं च, रूक्षदेहे न पच्यते ।
भक्षितं प्रचुरं तेन, देहपीडा ततो भवेत् ॥७४
देहे व्याधिः समुत्पन्ना, अतीव प्राणघातिनी ।
तदीयभक्तिकर्त्तव्ये, श्रेष्ठिनस्ते समागताः ॥७५॥
तान् दृष्ट्वा मानसे स्वीये, व्यचिन्तयत्स साधुराट् ।
अहो संयमसाम्राज्यं, मीलितं गुरुयोगतः ॥७६॥
ददति ये न मे भिक्षां, तेऽपि सेवासु चागताः ।
सेवां च तादृशीं दृष्ट्वा, जाता धर्मेषु रागता ॥७७
धन्योऽहं कृतकृत्योऽहं, मानुष्यं सफलं मम ।
जैनधर्मस्य सम्प्राप्तिः, विना पुण्यं न जायते ॥७८॥
चिन्तामणिमहारत्नं, रङ्कगृहे न राजते ।
मादृशरङ्कहस्ते च, तदपि चागतं प्रभो ! ॥७९॥
तदेवं पुण्ययोगेन, लब्धं गुरुप्रसादतः ।
धन्यास्ते गुरवो ज्ञेया, धन्यो धर्मश्च सर्वदा ॥८०॥
इत्येवं भावनां कृत्वा, विशुद्धपरिणामतः ।
मृत्वा मौर्यकुले जातः, सम्प्रति नाम संप्रति ॥८१॥
चन्द्रगुप्तप्रपौत्रोऽयमशोकनृपपौत्रकः ।
कुणालस्य सुतो जातः गुरुदीक्षा प्रभावतः ॥८२॥

जातमात्रेण सम्प्राप्तमशोकदत्तराज्यकम् ।
जिनेन्द्ररथयात्रा च, प्रयाति कुत्रचिद्दिने ॥८३॥
संघेन बहुहर्षेण, अतीवाडम्बरेण च ।
सम्पूर्णनगरे तत्र, भ्रामिता रथयात्रिका ॥८४॥
आर्यसुहस्तिभिः साकं, सुसाधुवृन्दकं तथा ।
प्रचुरं च समायातं, धर्मोन्नतिनिमित्ततः ॥८५॥
राजमार्गे समायाते, सम्राट् च सम्प्रतिस्तदा ।
सम्मुखे च समायाति, दृष्टा च रथयात्रिका ॥८६॥
तन्मध्ये गुरुदेवं च, दृष्ट्वा चिन्तति मानसे ।
नेपथ्यं तादृशं चैव, पूर्वं दृष्टं मया क्वचिद् ॥८७॥
दर्शनाद् गुरुदेवानां, जातिस्मृतिरजायते ।
धन्योऽहं कृतकृत्योऽहं, जातं गुरोश्च दर्शनम् ॥८८
पूर्वभवं च संस्मृत्य, गुरुपादान्तिके तदा ।
आगत्यैव नमस्कारं, करोति शुद्धभावतः ॥८९॥
रङ्कावस्था मदीया क्व क्व च राज्यस्य योग्यता ।
जातमात्रेण सम्प्राप्तं, राज्यं च भारतं खलु ॥९०॥
एतत्सर्वंगुरूणां च, कृपया समवाप्तकम् ।
गुरुकृपा च किं किं नो, कार्यं चैव करिष्यति ॥९१

भवकूपाद्यथा पूर्वमुद्धृतो हस्तदानतः ।
तथैवोद्धरणं चैव, अस्मिन्भवे वितन्यनाम् ॥९२॥
गुरुणा श्रुतज्ञानेन, सर्वं विलोकितं तदा ।
तस्य भाविहितायैव, मार्गोऽपि दर्शितः खलु ॥९३
आगत्य गुरुदेवं च, पृच्छति भक्तिपूर्वकम् ।
त्वत्प्रसादेन सम्प्राप्ता, भारते चेदृशी भूमिः ॥९४॥
गुरुणा देशना पूर्वं, बोधितः सम्प्रतिस्तदा ।
विशुद्धजैनधर्मश्च, संप्राप्तो गुरुयोगतः ॥९५॥
शुद्धसम्यक्त्ववतां प्राप्य, सञ्जातो दृढधर्मवान् ।
अपूर्वधर्मसम्प्राप्तिः, गुरुं विना न जायते ॥९६॥
गुरूणामुपदेशेन, धर्मोन्नतिविधापने ।
पुस्फोरितं स्वीय वीर्यं स्वं, जैनधर्मे क्षणे क्षणे ॥९७॥
अवन्त्यां च नगर्यां हि साधुसभा नियोजिता ।
आर्यसुहस्तिद्वारेण, विभक्ता देशभागकाः ॥९८॥
अमुकसाधुसन्दोहैरमुके भागके खलु ।
विहर्त्तव्यं च सर्वत्र, दातव्या शुद्धदेशना ॥९९॥
अमुकैरमुके भागे, विहर्त्तव्यं च प्रेमतः ।
भारते चैकदेशोऽपि, मोक्तव्यो साधुना नहि ॥१००॥

साधुविहारशून्येन, भारतं धर्महीनकम् ।
अतः सर्वत्र गन्तव्यं, साधुना भारते खलु ॥१०१
किं चानार्यप्रदेशेषु, साधुविहारहेतवे ।
कृत्रिमसाधवस्तत्र, प्रेष्यन्ते च मया तथा ॥१०२॥
व्यवस्थां ईदृशीं कृत्वा, सर्वत्र दर्मिनां[1] तथा ।
विहारः कारितस्तेन, प्रचारो विहितो बहु ॥१०३॥
स्वल्पकालेन जैनानां, साम्राज्यं तेन निर्मितम् ।
धर्मप्रचारबाहुल्यं, सुहस्तिगुरुयोगतः ॥१०४॥
सपादलक्षसंख्याकाः, प्रसादास्तेन कारिताः ।
जिनानां ते च विज्ञेयाः जैनधर्मस्य भारते ॥१०५॥
सपादकोटिसंख्याकाः, प्रतिमाः कारिताः शुभाः ।
जीर्णानि मन्दिराण्येव, उद्धृतानि विशेषतः १०६
षट्त्रिंशत्सहस्राणि, उद्धृतानि तथा खलु ।
एकलक्षाणि धातूनां, प्रतिमास्तेन कारिताः ॥१०७
शतशो दानशालानामुद्घाटनं कृतं तदा ।
धर्मप्रचारकार्याय, म्लेच्छानां मोचितः करः ॥१०८

---

1 जैनसाधूनाम् ।

साधुविहारयोग्यानि, क्षेत्राणि कारितानि च ।
वस्त्रपात्रान्नपानादि शुद्धं देयं च साधुभ्यः ॥१०९
इत्येवं घोषितं तेन, ज्ञापितं देशनादिना ।
प्रतिपुरं प्रतिग्रामं, कृत्रिमसाधुद्वारतः ॥११०॥
यस्य गृहेषु यद्वस्तु, विद्यते शुद्धमानकम् ।
तद्वस्तु साधुसामीप्ये, ढौकनं शुद्धभावतः ॥१११॥
यदि साधुश्च गृह्णाति, तदा देयं च तत्तथा ।
मूल्यं तस्य महाराजा, तस्मै दास्यति कोशतः ११२
एवंरीत्या च म्लेच्छेषु, विहारः सुलभः कृतः ।
साधुभिस्तत्र गत्वैव, प्रचारो बहुधा कृतः ॥११३॥
आर्यदेशेषु साधूनां, प्रचारे स्वल्पकष्टता ।
अन्यत्र कष्टबाहुल्यं, तदपि सुलभीकृतम् ॥११४॥
अनेककोटिसंख्याकाः, जैनधर्मानुयायिनः ।
जैनाश्च कारितास्तेन, श्रद्धारत्नसमर्पणात् ॥११५॥
धन्याश्च गुरवस्ते वै, धन्याः सम्प्रतिभूमिपाः ।
शासनरागता तादृग्, येषां स्वान्ते विराजते ११६
तादृशगुरुशिष्याणां, समायोगस्तु दुर्लभः ।
सुहस्तिना कृतं यादृक् तादृशं च करोति कः ॥११७

दन्तधावनकार्यं च, कर्त्तव्यं तेन तत्क्षणे ।
नव्यमन्दिरनिर्माणजल्पनं कर्णगोचरे ॥११८॥
समायाति तदा चैव, कर्त्तव्यं दन्तधावनम् ।
तादृशी प्रतिज्ञा तेन, कृता गुरुसमीपके ॥११६॥
चतुर्दिक्षु च सर्वत्र, मन्दिराणां विधापनम् ।
भव्यमूर्त्तिप्रतिष्ठानां, विधानं शुभयोगतः ॥१२०॥
सुयोग्यशिष्ययोगेन, आर्यसुहस्तिना खलु ।
भारते जैनसाम्राज्यं, कारितं धर्मभावतः ॥१२१॥
प्रभुवीरात्समारभ्य, आर्यसुहस्तिकावधि ।
निर्ग्रन्थगच्छनाम्नैव, प्रसिद्धं वीरशासनम् ॥१२२॥
वीरनिर्वाणकालाच्च, द्वितीयस्मिन् शताब्दिके ।
उत्तरार्धे च दुष्कालो, जातो द्वादशवार्षिकः ॥१२३
साधुसंख्यासु न्यूनत्वं, श्रुतज्ञानस्य ह्रासता ।
श्रुतसाधोश्च रक्षायै, सम्प्रतेर्यत्नको महान् ॥१२४
जैनधर्मस्य रक्षायां, सर्वं च रक्षितं भवेत् ।
स्थितिद्वयस्य चोन्नत्यै, निर्ग्रन्थसाधुना तदा ॥१२५
विभिन्नगच्छशाखानां, कुलानां व्यवस्थाकृता ।
एवं रीत्या च कर्त्तव्ये, सर्वं व्यवस्थितं भवेत् ॥१२६

भद्रबाहुविनेयाच्च, गोदासाभिधानकात् ।
गोदासगणसम्भूतः, ज्ञातव्यो जैनशासने ॥१२७
आर्यमहागिरेः शिष्याद् बलिस्सहस्य नामतः ।
बलिस्सहगणस्यैव, उत्पत्तिस्तत्र जायते ॥१२८॥
सुहस्तिसूरिशिष्येभ्यः, उद्देहचारणौ गणौ ।
मानववेसवाट्याख्यौ, गणौ च निर्गतौ तदा ॥१२९
सुहस्तिसूरिशिष्याश्च, मुख्या द्वादशसंख्यकाः ।
पञ्चमः सुस्थितस्तेषु, षष्ठः सुप्रतिबुद्धकः ॥१३०॥
उदयगिरिमध्ये च, सूरिमन्त्रस्य कोटिशः ।
जापस्य जपनादेव, जातः कोटिकगच्छकः ॥१३१॥
कोटिकगच्छमध्ये च, वज्री विद्याधरी तथा ॥
उच्चनागरिका चैव माध्यमिका चतुर्थिका ॥१३२॥
शाखाश्च परिज्ञातव्याः उपशाखाऽप्यनेकशः ।
इत्येवं परिमन्तव्यं, निर्ग्रन्थ नामधेयकम् ॥१३३॥
निर्ग्रन्थग्रन्थतायाश्च, नामान्तराणि सन्ति वै ।
न तु विभिन्नगच्छत्वं; ज्ञातव्यं बुद्धिशालिना ॥१३४
आर्यसुहस्तिनां पट्टे, सुस्थितप्रतिबुद्धकौ ।
संजातौ मुख्यशिष्यौ द्वौ पट्टशोभाविवर्धकौ ॥

आर्यमहागिरेः काले, आर्यसुहस्तिनस्तथा ।
द्वादशवार्षिकः कालः, अपतच्च भयङ्करः ॥१३६॥
तत्काले नैक संख्याकैः, साधुभिर्भोज्य त्यागतः ।
अनशनं च सम्प्राप्य, स्वर्गं गताश्च तत्क्षणे ॥१३७
दुष्कालस्य प्रभावेन, आगमज्ञानह्रासता ।
कलिंगाधिपराज्ञा च, खारवेलेन तत्क्षणे ॥१३८॥
जैनस्थविरसाधूनां, कुमारीपर्वते खलु ।
एकत्रीकरणायैव, आह्वानं च कृतं तदा ॥१३९॥
आर्यबलिस्सहश्चैव, बोधिलिङ्गनक्षत्रकौ ।
देवाचार्यश्च धर्मश्च, प्रभृत्यनेक साधवः ॥१४०॥
सुस्थितप्रतिबुद्धौ च, उमास्वातिस्तथा परः ।
श्यामाचार्याश्च तत्रैव, आगता स्थविरास्तथा ॥१४१
आर्यपोइणिकाः साध्व्यः, समितौ चागताः खलु ।
कलिङ्गभिक्षुराजश्च, पुष्यमित्रादिकाः किल ॥१४२॥
चतुर्विधकसंघस्य, आगतिस्तत्र जायते ।
कलिङ्गराजविज्ञप्त्या, साधुसाध्व्य अनेकशः ॥१४३
मगधमथुरावङ्गे, देशे धर्मप्रचारतः ।
आगमज्ञ मुनीन्द्रैश्च, आगमसंग्रहः कृतः ॥१४४॥

पूर्वधरमुनीन्द्रैश्च, पूर्वस्य संग्रहः कृतः ।
यस्य पार्श्वे च यज्ज्ञानं, तत्सर्वं संग्रही कृतम् १४५
आर्यसुहस्तिनः पट्टे, सुस्थितप्रतिबुद्धकौ ।
द्वयोर्गोत्राभिधाने च, व्याघ्रापत्यकनामके ॥१४६॥
कोटिशमन्त्रजापाच्च, कोटिकौ तौ प्रकीर्त्तितौ ।
काकन्दिकनगर्यां च, काकन्दकौ समुद्भवात् ॥१४७
सुविहितक्रियानिष्ठौ, सुज्ञाततत्त्वकौ तथा ।
महापुरुषरूपौ तौ, विज्ञेयौ जिनशासने ॥१४८॥
धर्मोन्नतिविधानाय, सततं चोद्यमौ तथा ।
धर्मं प्राणसमं मत्वा, धर्मध्यानपरायणौ ॥१४९॥
कोटिकगच्छके जाताः, इन्द्रदिन्नादि सूरयः ।
स्थविरप्रियग्रन्थश्च, विद्याधरादिकास्तथा ॥१५०॥
सुस्थितसूरिपट्टे च, कौशिकगोत्रभूषकः ।
दिन्नसूरिश्च तत्पट्टे, विज्ञेयो वीरशासने ॥१५१॥
आर्यसिंहगिरिश्चैव, तत्पट्टे शान्तसेवधिः ।
संजातो दृढधर्मश्च, जगत्कल्याणकारकः ॥१५२॥
प्रसङ्गतोऽनुवक्तव्याः, प्रभावशालिसूरयः ।
आद्यश्च कालिकाचार्यः, गर्दभिल्लविनाशकः ॥१५३

सांवत्सरी महापर्व, प्रागस्ति पञ्चमी दिने ।
चतुर्थ्यां कालिकाचार्याज्जातं संघनियोगतः ॥१५४॥
धारावासनगर्याश्च, वीरसिंहस्य पुत्रकः ।
भृगुकच्छनृपाणां च, मातुलः समभूत्तदा ॥१५५॥
गुणाकराख्यसूरीणां, प्रबुद्धो देशनादितः ।
जैनीं दीक्षां समादाय, सम्भूतो जैनसाधुराट् ॥१५६
तद्भगिन्याः सरस्वत्या, भ्रातृदीक्षाऽनुयोगतः ।
तया दीक्षा प्रपन्ना च, विशुद्धा गुरुसन्मुखे ॥१५७
बुद्धिबलेन साधुः सः, सूरित्वं प्रतिपन्नवान् ।
निरतिचारचारित्रं, पालयति च सर्वदा ॥१५८॥
अनुमतिं गुरूणां च, प्राप्य विहृतवांस्तथा ।
सर्वत्र परिभ्राम्यन् सनुज्जयिन्यां समागतः ॥१५९॥
रूपलावण्ययुक्ता या, विशुद्धब्रह्मचारिणी ।
साध्वी सरस्वती साऽपि, तत्पूर्यां च समागता ॥१६०
गर्दभिल्लनृपश्चैव, सर्वदा स्त्रीषु लम्पटः ।
महासती स्वरूपं च, दृष्ट्वा स मोहमूर्छितः ॥१६१
बलात्कारात्समादाय, अन्तःपुरे स नीतवान् ।
तन्मुक्त्यर्थं च सूरीशैः, प्रयत्नश्च कृतो बहु ॥१६२

विनाशकालयोगेन विपरीता मतिर्भवेत् ।
दुर्बुद्धिगर्दभिल्लेन, स्वान्ते नैव विचारितम् ॥१६३
साध्वी शीलसुरक्षायै, आचार्यैश्च विचारितम् ।
विनाऽन्यराजसामर्थ्यात्साध्व्याश्च मोचनं न हि ॥
शकराजं समानीय, भीषणयुद्धमाहृतम् ।
गर्दभिल्लसमुच्छेद्य, साध्वी शुद्धा च मोचिता १६५
बलभानुमित्रकानां च, तद्राज्यं हि समर्पितम् ।
कालिकाचार्यबोधेन, ताभ्यां धर्मश्च स्वीकृतः ॥१६६
तदाग्रहाच्च तत्रैव, चातुर्मासी कृता तदा ।
मन्त्रिणां मतिमांद्येन, प्रतिष्ठानपुरे गतः ॥१६७॥
तत्रस्य नृपसामीप्ये, जैनधर्मोपदेशनम् ।
प्रभावशालिबोधेन, प्रबुद्धः सोऽपि भूपतिः ॥१६८॥
राजाग्रहनियोगेन, चतुर्थी द्विवसे खलु ।
पञ्चमीतः समानीय, पर्व तदा समादृतम् ॥१६९॥
अद्यावधि च तत्पर्व, प्रचलति च भारते ।
तदीयाज्ञा शिरोधार्य, स्वीकृतिश्च कृता समैः १७०
धन्यास्ते कालिकाचार्याः, धर्मोन्नतेश्च कारकाः ।
साध्वीशीलस्य रक्षायै, स्वशक्तिपरिस्फोटिता ॥१७१

आर्यदिन्नस्य पट्टेषु, आर्यसिंहगिरिस्तथा ।
कौशिकगौत्रसम्पन्नः, जातिस्मरणवान् खलु ॥१७२
तत्पट्टे गौतमाभिख्य, गोत्रे सूरिपुरन्दरः ।
वज्रस्वामिमहासाधूः, सम्भूतो लब्धिभाक् तथा ॥
आर्यधनगिरेः पुत्रः, सुनन्दाकुक्षिसम्भवः ।
तुम्बवनाख्य ग्रामस्थः, जातो धर्मपरायणः ॥१७४॥
स्वोत्पत्तिसमये श्रुत्वा, पितृदीक्षा मनोहराम् ।
संजात जातिस्मृत्या च, मातुरुद्वेगहेतवे ॥१७५॥
रोदति सततं तत्र, षण्मासावधिकं तथा ।
भिक्षार्थं चैकदा साधुः धनगिरिः समागतः ॥१७६
तं दृष्ट्वा च तया प्रोक्तं, गृह्यतां स्वीय पुत्रकम् ।
धनगिरिमहाभागैः, गृहीतः सोऽपि तत्क्षणे ॥१७७
महाभारत्व योगेन, दत्तं वज्राभिधानकम् ।
पालनस्थः स बालोऽपि, जातश्चैकादशांगवित् १७८
यदा त्रिवार्षिको जातः, रूपलावण्यसंयुतः ।
तं दृष्ट्वा स्वीय मातृणां, मोहश्च वर्धते खलु ॥
मात्रा राजसभां गत्वा, पुत्राय प्रार्थना कृता ।
धनगिरिः सुनन्दा च, आगतौ राजमन्दिरे ॥१८०॥

पुत्रव्यामोहकार्याय, सुनन्दा सुखभक्षिकाम् ।
अनेकविधता युक्तां, तत्र गत्वा च ढौकते ॥१८१॥
धनगिरिमहाभागैः, साधुचिह्नं रजोहरम् ।
तत्समीपे च मुक्त्वा वै, प्रोक्तं द्वाभ्यां च तत्क्षणे ॥
तुभ्यं यद्रोचते तद्धि, गृह्यतां भाग्यसेवधे ।
मोहसाधनमिष्टान्नं, त्यक्त्वा रजोहरं धृतम् ॥१८३
ततो मातापि वैराग्याद्दीक्षां गृह्णाति भावतः ।
यदाष्टवार्षिको जातः, तदा जृम्भकदेवकः ॥१८४॥
पूर्वभवीय मित्रोऽसौ, परीक्षार्थे तदागतः ।
उज्जयिन्याश्च मार्गेषु, वृष्टिनिवृत्तिकालिके ॥१८५॥
कुष्माण्डशुद्धभिक्षां च, दीयमानां न गृह्णीयात् ।
अनिमेषत्व चिह्नेन, जानाति देवपिण्डकम् ॥१८६॥
मह्यं न कल्पते तद्धि, कथितं तेन तत्क्षणे ।
तुष्टदेवेन तत्काले, दत्ता वैक्रियलब्धिका ॥१८७॥
द्वितीय समये भिक्षा, घृतपुराभिधानिका ।
दीयमानापि साऽशुद्धा, देवपिण्डस्वरूपिका ॥१८८॥
तद्योग्यां च मत्वावै तुष्ट जृम्भकदेवतः ।
सम्प्राप्ता च म.ाविद्या, आकाशगामिनी तदा ॥१८९

अन्यदा पाटली पुत्रे, विहारेण समागताः ।
तत्र साध्वी मुखाच्चैव, वज्रस्वामि गुणावलिम् ॥
श्रुत्वा च रुक्मिणी नाम्नी, कनीधनस्य श्रेष्ठिनः ।
गृह्णाति नियमं तत्र, वज्रस्वामि पतिं विना ॥१६१॥
नान्यं पतिं करिष्यामि, इति च प्रतिज्ञा कृता ।
धनश्रेष्ठिवरेणैव, नैकोपायाः कृताः खलु ॥१६२॥
परन्तु सा प्रतिज्ञाताद् न च्युता लेशमात्रतः ।
तदा वज्रमहाभागः, आगतश्च पुरे वरे ॥१६३॥
श्रुत्वा धनेन तत्काले, स कोटिद्रव्यसंयुताम् ।
रुक्मिणीं दीयमानां च, न गृह्णाति स साधुराट् १६४
प्रतिबोध्य तदा तां च, वैरागमयवाक्यजैः ।
गम्भीरशुद्धबोधैश्च, दत्तं रत्नत्रयं तदा ॥१६५॥
शुद्धा साध्वी च संजाता, वज्रगुरूपदेशतः ।
चारित्रं च विशुद्धं तत्पालयति सहर्षतः ॥१६६॥
दुर्भिक्षे चैकदा जाते, संघं संस्थाप्य पट्टके ।
सुभिक्षीय पुरीमध्ये, गुरुभिः संघ आनीतः ॥१६७
पर्युषणा समायाते, प्रभुभक्तिप्रवर्धिका ।
पुष्पादि सर्वसामग्री, निषिद्धा बौद्धधर्मिभिः ॥१६८

संघेनैव समागत्य, गुरुणा प्रार्थना कृता ।
विना विशुद्धसामग्रीं, प्रभुभक्तिः कथं भवेत् ॥१६६
भवादृग्गुरुसंयोगे, कथं भक्तौ च विघ्नता ।
द्वेषबुध्या च तेनैव, प्रतिषेधः कृतः खलु ॥२००॥
जैनधर्ममहाद्वेषी, अयं च बौद्धभूपतिः ।
स्वसत्तायाः समुन्मादः, धर्मद्वेषेण जायते ॥२०१॥
जैनानां भक्तिनाशाय, उपायस्तेन शोधितः ।
अतः केनापि योगेन, जैनत्वं परिदृश्यताम् ॥२०२॥
गुरुणा संघविज्ञप्त्या, तद्भक्तिपरिपुष्टये ।
धर्मोन्नतिसमुद्दिश्य, गताश्च सूरयस्ततः ॥२०३॥
व्योमविद्याप्रयोगेन, माहेश्वरी पुरी खलु ।
मालिनं पितृमित्रं च, जल्पन्ति पुष्पहेतवे ॥२०४॥
हिमवत्पर्वते गत्वा, श्रीदेव्याश्च समीपके ।
हुताशनवनाच्चैव, लक्षशः कुसुमानि च ॥२०५॥
महापद्मानि संगृह्य, देवकृत विमानके ।
माहेश्वरीय पुष्पाणि, लात्वा महोत्सवेन च ॥२०६॥
दुन्दुभिनादपूर्वेण, आगतास्तत्र सूरिराट् ।
देवेन सर्वपुष्पाणि, दत्तानि श्रावकाय च ॥२०७॥

अतीव भक्तिपूर्वेण, अतीवानन्दयोगतः ।
प्रभुभक्तिं प्रकुर्वन्ति, सर्वे च तत्र श्रावकाः ॥२०८

विशुद्धपुष्पगन्धेन, शुद्धसुगन्धिवस्तुना ।
जिनेन्द्रपूजनं दृष्ट्वा, राज्ञा मनसि शोचितम् ॥२०९

सर्वं गुरुप्रसादेन, जैनसंघेन कृतं तथा ।
तादृशा गुरवो नैव, अस्माकं दर्शने खलु ॥२१०॥

गुरुदर्शनकार्याय, राजा तत्र समागतः ।
गुरूणां देशनां श्रुत्वा, शुद्धकल्याणकारिणीम् ॥२११

सम्यग्रत्नं परिप्राप्य, जैनधर्मप्रभावनाम् ।
करोति चातिभावेन, दृढधर्मपरायणः ॥२१२॥

अहो गुरुमहात्म्यं तद्, बोद्धुं च प्रतिबोध्य वै ।
तद्देशे जैनधर्मत्वं, स्थापितं गुरुणा तदा ॥२१३॥

शत्रुंजये महातीर्थे, श्रेष्टिजावडभावडैः ।
विक्रमशतके पूर्णे, अष्टवर्षोत्तरे तथा ॥२१४॥

तत्तीर्थोद्धृतिकार्यं च, कृतं तैः श्रेष्टिभिः किल ।
प्रतिष्ठायाश्च कर्त्तव्ये, गुरवः प्रभावशालिनः ॥२१५

विद्यया परिपूर्णाश्च, तत्कार्ये प्रार्थिताश्च तैः ।
तेषां च भाग्ययोगेन, मीलिता दशपूर्विणः ॥२१६

वज्रस्वाम्याख्य सूरीन्द्राः, अतिप्रभावशालिनः ।
विहारानुक्रमेणैव, आगतास्तेऽपि तत्र वै ॥२१७॥
विज्ञप्तिं श्रेष्ठिनां श्रुत्वा, महालाभाय ते तथा ।
स्वीकृत्यैव प्रतिष्ठायाः, कार्यं प्रारब्धकं खलु ॥२१८
कपर्दीयक्षविघ्नेन, मूलनायकस्वामिनाम् ।
स्थैर्यं च नैव जायेत, उत्थापनं पुनः पुनः ॥२१६॥
महाविद्याबलेनैव, ज्ञाता तस्यैव विघ्नता ।
यक्षं सन्तोष्य तत्रैवाधिष्ठातृत्वं कृतं तदा ॥२२०।
तन्मूर्त्तिः स्थापिता तत्र, तत्तीर्थे गुरुणा खलु ।
आधिपत्यं च तस्यैव, शत्रुंजये विराजते ॥२२१॥
महाकार्यं विधायैव, गुरुभिर्विहृतिः कृता ।
तीर्थोद्धारप्रतिष्ठा च, जाता सद्गुरुयोगतः ॥२२२
अन्यदा गुरुदेवानां, कफोद्रेकप्रभावतः ।
भोजनादनुस्वाद्यर्थं, शुण्ठीग्रंथिश्च रक्षिता ॥२२३
कर्णे च स्थापिता साऽपि, विस्मृता वृद्धभावतः ।
प्रतिक्रमणकाले च, पतिता कर्णतस्तदा ॥२२४॥
आसन्नमृत्युतां ज्ञात्वा, सूरिणा च प्रमादतः ।
द्वादशवर्षपर्यन्तं, दुर्भिक्षस्य प्रवशनः ॥२२५॥

सूरिर्ज्ञानेन विज्ञाय, वज्रसेनं हि तत्क्षणे।
आहूय कथितं तेन, लक्षमूल्योदनात्खलु ॥२२६॥
त्वं भिक्षां च यदाऽप्नुयाः, तदुत्तरदिने च भोः।
सुभिक्षं तु त्वया ज्ञेयमन्यथा न कदाचन ॥२२७॥
पूर्वं च दशमं तस्माद् व्युच्छिन्नं वज्रस्वामितः।
वज्रसेन महाभागैः, तदनु विहृतिः कृता ॥२२८॥
सोपारकपुरे तस्माच्छिष्येण सह चागतः।
जिनदत्ताख्य भव्यानां, भिक्षार्थं गतवान् गृहे २२९
तत्पत्न्याश्चेश्वरी नाम्न्याः क्रीतं च लक्ष्यमूल्यकम्।
अन्ने तस्मिंश्च संक्षिप्तं, विषं हालाहलं तदा २३०
विचारितं स्वस्वान्ते च अन्नं धनं न विद्यते।
आगतेऽह्नि च भिक्षूणां, भिक्षां दास्ये कथं खलु २३१
दर्शयामि कथं स्वास्यं, विचार्य विषवत्कृतम्।
तस्या विशुद्धभावोऽपि, ज्ञातो हि गुरुणा तदा २३२
आगत्य सूरिणा प्रोक्तं, नैवं कार्यं कदाचन।
श्वः काले भूरिपोतं तद्, आगच्छति च धान्यकं २३३
तच्छ्रुत्वा च सहर्षेण, जिनदत्तेन शोचितम्।
यदि सत्यं भवेत्तर्हि, आनन्दः परिजायते ॥२३४॥

प्रचुरधान्यसम्प्राप्ते, सुकालः परिजायते ।
नागेन्द्रचन्द्रनिर्वृत्तिविद्याधरैः सुतैः सह ॥२३५॥
जिनदत्तोहि चेश्वर्या, प्रेरितो वृतमात्तवान् ।
पुत्रचतुष्कनाम्ना च, भिन्नाः शाखाश्च निसृताः ॥
चन्द्रनाम्ना च तद् गच्छः, शाखारूपेण जायते ।
नागेन्द्रेणैव नागेन्द्रः, चन्द्रेण चन्द्रगच्छकः ॥२३७॥
निर्वृतिनामरूपेण, निर्वृतिनामगच्छकः ।
विद्याधरेण तद्रूपः, एवं च परिज्ञायताम् ॥२३८॥
वज्रसेनमहाभागपट्टे च चन्द्रसूरयः ।
प्रभावशालिनस्तेऽपि, ज्ञातव्या जैनशासने ॥२३९॥
प्रभावशालिसाधूनां[1], सिद्धसेनदिवाकराः ।
ज्ञातव्याश्च महाभागाः, विक्रमप्रतिबोधकाः ॥२४०
वृद्धवादिगुरूणां च, पार्श्वे कुमुदचन्द्रकैः ।
महाविज्ञैः समागत्य, स्वकल्याणं च साधितम् ॥
बङ्गदेशीय कुमाररराजं च देशनादिना ।
जैनं कृत्वा च सुश्राद्धः, कारितो जैनशासने ॥२४२

---

१—प्रभावशालि साधूनां मध्ये ।

परमार्हतभक्तोऽपि, संजातो गुरुयोगतः ।
विहृत्यच ततः स्थानादवन्त्यां गुरवो गताः ॥२४३
अवन्तिपार्श्वनाथस्य, अवन्तीनगरीयके ।
मूर्त्तिर्ब्राह्मणलोकैश्च, स्वाधीनी कृत्य सर्वथा ॥२४४
जैननामापमानं च, कृतं तादृशकार्यतः ।
तत्र गत्वा महाकालमन्दिरे च कृता स्थितिः ॥
कल्याणमन्दिराख्यं च, स्तोत्रं सुरचितं तदा ।
तत्स्तोत्रपठने यच्च, संजातं तन्निशाम्यताम् ॥२४६
पञ्चदशमश्लोकस्य, उच्चारणं यदा भवेत् ।
तदा तच्छिवलिङ्गं च, स्फुटितं गुरुमंत्रतः ॥२४७॥
तन्मध्ये पार्श्वनाथस्य, प्रतिमा निःसृता शुभा ।
तदृष्ट्वा सर्वलोकाश्च कुर्वन्ति शुद्धभावनाम् २४८
महाश्चर्यं महाश्चर्यं, जगति गुरुणा कृतम् ।
विक्रमादित्य राजापि, आगतो गुरुसन्निधौ ॥२४९
स्तुतिं च गुरुदेवानां, करोति भक्तिभावतः ।
विक्रमप्रतिबोधाय, प्रारब्धा देशना खलु ॥२५०॥
गुरूपदेशयोगेन, विशुद्धशक्तियोगतः ।
प्रतिबोध्यैव राजानं श्रावकः सूरिणा कृतः ॥२५१॥

संस्कृतं प्राकृतं ज्ञानं, प्रचुरं परिज्ञायताम् ।
तत्सदृशोहि विज्ञश्च, तत्काले भारते नहि ॥२५२॥
जैनदर्शनशास्त्राणि, शुद्धन्याययुतानि च ।
निर्मापितानि जैनेषु, विद्यन्ते खलु भारते ॥२५३॥
आद्यं निर्मापणं न्यायशास्त्राणां सूरिणा कृतम् ।
तत्पश्चान्न्यायशास्त्रस्य, ग्रन्थानैकाश्च निर्मिताः ॥
सर्वागमीय ग्रन्थानामनुवादश्च संस्कृते ।
कर्त्तव्ये स्वीय जिज्ञासा, दर्शिता संघसम्मुखे ॥२५५
नमस्कारमहामंत्रानुवादश्च कृतस्तदा ।
तच्छ्रुत्वा संघमुख्येन, प्रायश्चित्तं प्रदर्शितम् ॥२५६
तत्प्रायश्चित्तरूपेण, विक्रमप्रतिबोधनम् ।
कृतं च गुरुदेवेन, बहुयुक्तिप्रयोगतः ॥२५७॥
विक्रमीय चरित्राच्च, विज्ञेयं ज्ञानशालिना ।
अत्र तु नाममात्रेण, दर्शितमधुना मया ॥२५८॥
सिद्धाचलस्य यात्रायै, महासंघश्च योजितः ।
निष्कासितो महानेव, विक्रमेणैव तत्क्षणे ॥२५९॥
ओङ्कारनगरे जैनमन्दिरं नूतनं कृतम् ।
अश्वावबोधतीर्थस्य, उद्धारोऽपि कृतः खलु ॥२६०॥

अनेकधर्मकार्याणि, कारितानि च सूरिणा ।
सन्मतितर्कन्यायावताराद्किाश्च ग्रन्थकाः ॥२६१
सर्वोत्तमाश्च विज्ञेयाः, प्रौढयुक्त्या समन्विताः ।
तन्नामस्मृतिमात्रेण, पापं च परिनश्यति ॥२६२॥
दक्षिणदेशमध्ये च, सूरीणां स्वर्गवासता ।
सञ्जाता कालयोगेन, दिवाकरा दिवं गताः ॥२६३
धन्यास्ते सूरयो ज्ञेयाः, जैनधर्मस्य दीपकाः ।
अद्यावधि च तन्नाममन्त्ररूपेण गीयते ॥२६४॥
चन्द्रगच्छादि गच्छाश्च, नामान्तरस्वरूपतः ।
चतुरशीतिगच्छाश्च, सञ्जाता वाचनादितः ॥२६५
चन्द्रगच्छादि गच्छाश्च, रूपान्तरेण[1] ते तथा ।
नामान्तरं स्वरूपेण, विज्ञेया जैनशासने ॥२६६ ॥
निर्ग्रन्थ प्रथमं नाम, द्वितीयं कोटिकं तथा ।
चन्द्रगच्छस्तृतीयं च, अभिधानं प्ररूपितम् ॥२६७
वनगच्छचतुर्थं च अभिधानं निगद्यते ।
यतो हि तच्च संजातं, तत्स्वरूपं च लेशतः ॥२६८

१—निर्ग्रन्थ गच्छस्य ।

चंद्रसूरीशपट्टेषु, सामन्तभद्रसूरयः ।
महाप्रतापसंयुक्ताः जगद्द्योतकारकाः ॥२६६॥
दिगम्बरत्वभेदोऽपि, पतितः कालदोषतः ।
सम्प्रदाय द्वयस्यापि, ते पूज्याः सूरयो मताः ॥२७०
तन्निर्मिताश्च सद्ग्रन्थाः, मन्यन्ते चाप्तरूपतः ।
द्वाभ्यां च सम्प्रदायाभ्यां, संशयो नात्र विद्यते ॥
विवादो नैव केषाञ्चित्तद् विषये प्रजायते ।
युक्त्यनुशासनं देवागमस्तोत्रं च सुन्दरम् ॥२७२॥
स्वयम्भूस्तोत्ररूपाश्च, ग्रन्थाः सर्वैश्च सम्मताः ।
सूरीणां वृद्धदेवानां, प्रतिबोधस्य हेतवे ॥२७३॥
देवागमीय स्तोत्रं तत्कृतं सामन्तसूरिभिः ।
दिगम्बराश्च ते सन्ति, इत्युक्तौ न प्रमाणाता ॥
प्रमाणाभावतो नैव, तादृग् वाक्यं च मन्यते ।
प्रमाणविरहेणापि, यदि त्वया निगद्यते ॥२७५॥
तदा शशविषाणं च, मन्यतां च स्वच्छन्दतः ।
कल्याणमन्दिरस्यैव सिद्धसेनदिवाकराः ॥२७६॥
श्वेताम्बराश्च कर्त्तारः, प्रसिद्धं युक्तियुक्ततः ।
तथाप्यज्ञानदोषेण, नग्नाटत्वं च भाषितम् ॥२७७॥

यथैव मानतुंगानां, सूरीणां स्वीकृतिः कृता ।
तथैवात्रापि ज्ञातव्यं, सामन्तभद्रसूरिषु ॥२७८॥
तद् ग्रन्थेषु प्रमाणं च, नग्नाटसाधकं न हि ।
उत्कटत्यागभावेन, स्वीकृता वनवासता ॥२७९॥
दृष्ट्वा दिगम्बरैस्तेषु, घोषितं च दिगम्बरम् ।
योगिनां समदृष्टित्वात्पक्षपातो न विद्यते ॥२८०॥
पूर्वविदश्च ते ज्ञेयाः, घोरतपस्विनस्तथा ।
आगमस्यानुसारेण, क्रियायाः कारकाश्च ते ॥२८१॥
देवकुलादिशून्येषु, स्थानेषु वनवासता ।
वनवासित्वयोगेन, वनगच्छोपि निर्गतः ॥२८२॥
वनवासित्वगच्छोऽपि, निर्ग्रन्थतश्चतुर्थकः ।
प्ररूपणासु भेदस्य, लेशमात्रं न विद्यते ॥२८३॥
सामन्तभद्रपट्टेषु, वृद्धदेवाः समागताः ।
सततं धर्मवृद्धीणां, कारका दुःखवारकाः ॥२८४॥
तत्पट्टे परिज्ञातव्याः, प्रद्योतनाख्य सुरयः ।
शासनरागता तेषां हृदये परिराजते ॥२८५॥
सूरयो मानदेवाख्याः, तत्पट्टवृद्धिकारकाः ।
कर्त्तारो लघुशान्तीनां, सङ्घोपद्रवनाशकाः ॥२८६॥

तत्पट्टे मानतुङ्गाख्याः, सूरयो धर्मवर्धकाः ।
विशेषरूपतस्तेषां, स्वरूपं कथ्यते मया ॥२८७॥
धारानगरवास्तव्य; वृद्धभोजाभिधानकः ।
तन्नृपस्य सभायां च, भक्तामरस्य कारकाः २८८॥
नैकतालकदानेन, सूरीणां च नियन्त्रितः ।
एकैकश्लोक पाठेन, एकतालकत्रोटनम् ॥२८९॥
सम्पूर्णस्तोत्रसंजाते, सर्वतालकत्रोटनम् ।
सूरिभिश्च कृतं तत्र, महाश्चर्यप्रदर्शकम् ॥२९०॥
तादृशीं गुरुशक्तिं च, दृष्ट्वा नृपश्चमत्कृतः ।
जैनधर्मप्रभावोऽपि, तत्सभासु प्रजायते ॥२९१॥
गुरूपदेशलाभेन, प्रभावः प्रसृतो बहु ।
प्रभावशालिनस्ते च, सूरयो जगती तले ॥२९२॥
बप्पभट्टिगुरूणां च, स्वरूपं लेशमात्रतः ।
प्रसङ्गतो निगद्येत, स्वकीय ज्ञानहेतवे ॥२९३॥
पाञ्चालदेशवास्तव्य, सूरपालनृपस्य च ।
पुत्रास्ते सूरयो ज्ञेया, जगदुद्योतकारकाः ॥२९४॥
लघुवयसि दीक्षा च, गृहीता शुद्धभावतः ।
सिद्धसेनाख्य सूरीणां, पार्श्वे च मोढगच्छके २९५

ज्ञानचारित्रयोगेन, आचार्यत्वे नियोजिताः ।
संजाता बप्पभट्ट्याख्याः, सूरयो जैनशासने २९६
प्रत्यहं श्लोकसाहस्रं, सूरिकण्ठेषु जायते ।
तादृशशक्तिसामर्थ्यमन्यत्रनैव विद्यते ॥२९७॥
गोपगिरिनृपाणां च, उपदेशप्रभावतः ।
प्रतिबोधनकार्यं च, सूरिभिश्च कृतं तदा ॥२९८॥
आमराजेन तत्काले, विशालं खलु मन्दिरम् ।
निर्मापितं च तत्रापि, प्रतिमा सुमनोहरा ॥२९९॥
सुवर्णमयमूर्त्तिश्च, महामूल्येन कारिता ।
प्रतिष्ठिता शुभे लग्ने, सूरिभिः शुभमन्त्रतः ॥३००॥
महावीरप्रभूणां च, सा मूर्त्तिः परिज्ञायताम् ।
आमराजस्य भाग्येन, जातं सुन्दरमन्दिरम् ।३०१।
लक्षणावर्तग्रामस्य[1], नृपस्य प्रतिबोधकाः ।
धर्मराजं शुभे धर्मे, संस्थाप्य स दृढो कृतः ॥३०२॥
वर्धनकुञ्जरादीनां, बोद्धानां परिजीवकाः ।
वादिकुञ्जरसिंहस्य, उपाधिर्मीलितस्तदा ॥३०३॥

---

१ लक्ष्मणावर्त्त

तस्य सेनापतिं चैव, प्रतिबोध्यैव तत्क्षणे ।
दत्त्वा भागवतीं दीक्षामात्मकल्याणकारितम् ३०४
सूरीणामुपदेशेन, आमराजेन भावतः ।
सिद्धाचलादि तीर्थानां, सङ्घो निष्कासितो महान् ॥
इत्याद्यनेककार्याणि, कृतानि सूरिभिः खलु ।
जैनधर्मप्रभावश्च, संजातो गुरुयोगतः ॥३०६॥
मानतुंगाख्यसूरीणां, पट्टे च वीरसूरयः ।
यथार्थनामयुक्तास्ते, शासनवृद्धिकारकाः ॥३०७॥
सूरयो जयदेवाख्याः, तत्पट्टे शुभचिन्तकाः ।
स्वीय शक्त्यनुसारेण, जैनधर्मप्रभावकाः ॥३०८॥
देवानन्दाख्य सूरिश्च, तत्पट्टपरिवर्धकः ।
शुद्धा क्रियानुरागेण, रक्तं च स्वीयमानसम् ॥३०९॥
विक्रमसूरयो ज्ञेयाः, तत्पट्टपरिदीपकाः ।
जैनसिद्धान्तज्ञातारः, स्वपरोन्नतिकारकाः ॥३१०
ततो नृसिंहसूरीणां, परिचयो विशेषतः ।
कार्यते धर्मयोगेन, स्वपरोन्नति हेतवे ॥३११॥
स्वपरशास्त्रज्ञातारः; महाविज्ञाश्च ते मताः ।
नरसिंहपुरे यक्षस्योपदेशप्रदाः खलु ॥३१२॥

तं प्रतिबोध्य तस्माच्च, मांसाहारस्य भक्षणम् ।
त्याजितं सूरिभिश्चैव, स्वप्रभावः प्रदर्शितः ।३१३।
क्षोमाणानामधेयं च, राजकुलं स्वशक्तितः ।
प्रतिबोध्यैव धर्मेषु, दृढीकृतं च सूरिभिः ॥३१४॥
तद्वंशीय समुद्राख्य, कुमारं प्रतिबोध्य च ।
दीक्षां भगवतीं दत्वा, कल्याणं कारितं च तैः ३१५
समुद्रसूरयः पश्चात्ते जाता भाग्ययोगतः ।
वादे दिगम्बरं जित्वा, स्वशक्तिपरिदर्शकाः ॥३१६
नागह्रदीय तीर्थं च, ततश्च स्वायती कृतम् ।
श्वेताम्बरीय संघस्य, विजयः कारितश्च तैः ।३१७
महाप्रभावसद्युक्ताः जैनशासनदीपकाः ।
आचार्यनरसिंहाख्याः, जयन्तु जगती तले ॥३१८॥
समुद्रसूरयो ज्ञेयाः, धर्मोन्नति प्रभावकाः ।
तत्पट्टे शोभमानास्ते, जगदानन्ददायकाः ॥३१९॥
तत्पट्टं भूषयामासुः, मानदेवाख्य सूरयः ।
शासनभक्तिकर्त्तारः, वादीभसिंहसादृशाः ।३२०॥
विबुधप्रभसूरीन्द्राः तत्पट्टं भूषयन्ति वै ।
अनेकशास्त्रज्ञातारः, भव्यानां प्रतिबोधकाः ।३२१॥

तत्पट्टं शोभयामासुः, जयानन्दाख्य सूरयः ।
सर्वत्रानन्ददातारः, जगत्कल्याणकारकाः ॥३२२॥
अलंचक्रुश्च तत्पट्टं, रविप्रभाख्य सूरयः ।
रविसमप्रकाशं च, कुर्वन्ति भारते खलु ॥३२३॥
प्रकाशयन्ति तत्पट्टं, यशोदेवाख्य सूरयः ।
चन्द्रोज्वलयशोवादैः, शासनं दीपयन्ति ते ॥३२४
प्रद्युम्नसूरिदेवानां, विषये लेशमात्रकम् ।
लिख्यते स्वात्मबोधाय, अन्येषां ज्ञानहेतवे ॥३२५।
मेदपाटनृपाणां च, अल्लाख्यानां च बोधकाः ।
धर्मवादविधाने च, अद्वितीयाः प्रकीर्त्तिताः ॥३२६
तैराचार्यमहाभागैः, राजसभासु चान्यदा ।
नग्नाटवादिनां तत्र, पराजयश्च कारितः ॥३२७॥
श्वेताम्बरं दृढीकृत्य, युक्त्या च साधितं तदा ।
सर्ववादेषु नग्नानां, पराजयश्च जायते ॥३२८॥
त्रिभुवनगिर्यादीनां, नृपाणां प्रतिबोधकाः ।
सर्वत्र जैनधर्मस्य, विजयं कारयन्ति ते ॥३२९॥
तन्नाम्ना चापरे जाताः, आचार्या जैनशासने ।
मेदपाटनृपाणां च, तन्मध्ये बोधकश्च कः ॥३३०॥

अतस्तन्निर्णयो नैव, जातोऽद्यावधि शासने ।
ऐतिहासिकसामग्र्याः, अभावे निर्णयो न हि ३३१
सूरयो मानदेवाख्याः, तत्पट्टे चागतः खलु ।
ततो विमलचन्द्राख्याः, सूरयः पट्टदीपकाः ॥३३२॥
तत्पट्टं भूषयामासुः, उद्योतनाख्यसूरयः ।
वटगच्छ समुत्पत्तिः, तत एव प्रजायते ॥३३३॥
तत्स्वरूपं विशेषेण, कथ्यते ज्ञानहेतवे ।
श्रोतव्यं प्रेमभावेन, शासनोन्नतिकांक्षिभिः ३३४
पञ्चत्रिंशत्तमे पट्टे, सुधर्मस्वामिनां खलु ।
संजाताश्च महाभागाः, उद्योतनाख्य सूरयः ।३३५
मथुरा तीर्थयात्रा च, अनेकशः कृता च तैः ।
सम्मेतशिखरस्यैव, पञ्चकृत्वश्च सा कृता ॥३३६॥
एकदा खलु तीर्थानां, यात्रां कृत्वा हि चार्बुदे ।
यात्रार्थं च समायाताः, तलहट्ट्याश्च नैकटे ॥३३७
टेलिग्रामस्य सीमायां, वटस्याधस्तले तदा ।
स्थिताश्च सूरयस्तत्र, विश्रामकृतिहेतवे ॥३३८॥
तत्काले सुग्रहाणां च, योगस्तु जायते महान् ।
आचार्येणैव तत्काले, चिन्तितं निजमानसे ॥३३९॥

अधुना शुभयोगानां, योगो मीलतिसर्वथा ।
शुभे लग्ने शुभं कार्यं, कर्त्तव्यमिति चिन्तितम् ३४०
सर्वदेवादिशिष्याणां, मुख्यानां च तदा खलु ।
स्वाभिप्रायं प्रदर्श्यैव, स्वकार्यकरणोद्यताः ॥३४१॥
आचार्यपददानं च, तेषां कृतं च तत्क्षणे ।
आशीर्वादप्रदानं वै, कृतं च सूरिभिस्तदा ॥३४२
वटवृक्षसमायुष्मत्संततिः परिवर्धताम् ।
शासने सुखपूर्वेण, प्रचारः प्रविधीयताम् ॥३४३॥
तत्काले सर्वदेवानां, ख्यातिश्च वटगच्छतः ।
जैनेषु सर्वदा जाता, पश्चाच्च वनगच्छतः ॥३४४॥
वटेष्वाचार्यतादानाद्वटगच्छः प्रजायते ।
समाचार्यां न भेदोऽस्ति, निर्ग्रन्थतश्च कश्चन ३४५
अतो नामान्तरं ज्ञेयं, न तु स्वतंत्रगच्छता ।
इत्येवं सर्वं ज्ञातव्वं, जैनशासनवेदिभिः ॥३४६॥
सर्वदेवाख्यसूरीणां, सन्ततिर्वटवृक्षवत् ।
प्रशाखादिस्वरूपेण, अतीव परिवर्धते ॥३४७॥
नागेन्द्रादिकगच्छानामवान्तरीय गच्छकाः ।

अनेकशश्च संजाताः, तेऽपि वटे[1] समागताः ॥३४८
वटगच्छस्य मुख्यत्वं, तत्काले परिवर्त्तते ।
चैत्यवाससमुत्पत्तिः, सजाता तस्य पूर्वतः ॥३४९॥
[2]वटशासनकाले च, परे गच्छा विनिर्गताः ।
समाचार्याः प्रभेदेन, भिन्नत्वं तत्र चागतम् ।३५०।
सर्वदेवाख्य सूरीणां, पट्टेऽभूद्देवसूरयः ।
कर्णसिंहाख्य हालारनृपस्य प्रतिबोधकाः ॥३५१॥
मालवदेशवास्तव्य, पोर्वाख्य गृहिणस्तथा ।
प्रतिबोध्य विशुद्धे च, जैनधर्मे समानीताः ॥३५२॥
प्राग्वाटजातिरूपेण, तेषां च स्थापना कृता ।
प्रभावशालिनस्ते च संजाता जगती तले ॥३५३॥
प्रसङ्गतः परेषां च, महात्मनां च वर्णनम् ।
वादिवेतालश्रीशान्तिसूरीणां च विधीयते ॥३५४॥
थारापद्राख्य गच्छीय, विजयसिंहसूरयः ।
तच्छिष्यास्ते च संजाताः चन्द्रगच्छस्य दीपकाः ३५५
धनपालकवीनां च, प्रेरणाशक्तियोगतः ।
भोजराजसभायां च, दर्शयन्ति स्वशक्तिताम् ३५६

१ वटगच्छे । २ वटगच्छशासनकाले ।

नैकवादिवराणां च, वादे जित्वा हि तत्क्षणे ।
स्वीय चमत्कृतिश्चैव, सूरिभिर्दर्शिताः खलु ।३५७
उत्तराध्ययने सूत्रे, गम्भीरार्थेन संयुता ।
न्यायगर्भितटीकाऽपि, रचिता बुद्धियोगतः ॥३५८
पाइटीकाभिधाना च, प्रसिद्धा जैनशासने ।
सप्तशतं च श्रीमालकुटुम्बानां च बोधनम् ॥३५९॥
अपूर्वशक्तियोगेन, सूरिणा च कृतं तदा ।
अतीववादशक्त्या च, भोजराजेन हर्षतः ॥३६०॥
वादिवेतालरूपश्च, दत्तोपाधिश्च तत्क्षणे ।
तत्सभायां च तैरेव, पदं कवीन्द्रनामकम् ॥३६१॥
सम्प्राप्त विज्ञयोगेन, वादिचक्रित्वकं परम् ।
एवमनेकरूपा च पदवी तेषां च मीलिता ॥३६२॥
गूर्जराभिधभीमश्च, भोजश्च मालवाधिपः ।
सन्मानं गुरुदेवानां, कुर्वन्ति नैकरूपतः ॥३६३॥
थारापद्रीय चौहाण—जातीनां प्रतिबोधनम् ।
प्रभावशालिना तेन, सूरिणा च कृतं तदा ॥३६४॥

### मलधारिअभयदेवसूरिस्वरूपम्

गौर्जरदेशवास्तव्य, कर्णदेवेन तत्क्षणे ।

गुरुषु शुद्धचारित्रमुत्कृष्टं च तपस्तथा ॥३६५॥
दृष्ट्वा तेनैव सूरीणां, मलधारिपदार्पणम् ।
कृतं प्रसन्नरूपेण, गुणेषु पक्षपाततः । ३६६॥
कुलपाकतीर्थयात्रां च, कृत्वैलचपुरे वरे ।
गत्वा श्रीपालराजस्य, प्रतिबोधनता कृता ॥३६७॥
मुक्तागिर्याख्य तीर्थस्य, कारिता तत्र स्थापना ।
सिरपुरेऽन्तरिक्षस्य, पार्श्वनाथप्रभोस्तथा ॥३६८॥
प्रतिष्ठाविधियोगेन, सूरिणा तेन कारिता ।
परमजैनधर्मत्वं, प्रापितं तन्नृपे तदा ॥३६९॥
मुक्तागिर्याख्य तीर्थं च, श्वेताम्बरीय सूरिभिः ।
स्थापितं हि ततो नैव, नग्नाटत्वं च तत्र वै ॥३७०॥
श्वेताम्बरीय श्राद्धानां, तत्र वसत्यभावतः ।
दिगम्बरीय-सत्ता च, संजाता तत्र तीर्थके ॥३७१॥
मूलनायकमूर्त्तिश्च, श्वेताम्बरत्व दर्शिका ।
अद्यापि विद्यते तत्र, गत्वा च दृश्यतां खलु ॥३७२॥

मलधारिहेमचन्द्रपरिचयः ।

अभयदेवसूरीणां, मलधार्यभिधानताम् ।
सुशिष्या हेमचन्द्राश्च, प्रखरवादिनस्तथा ॥३७३॥

विशेषावश्यके सूत्रे, महद्वीका विनिर्मिता ।
अष्टाविंशतिसाहस्रश्लोकप्रमाणसंयुता ॥३७४॥
गम्भीरार्थेन युक्ता सा, नैकवादसमन्विता ।
गणधरादिवादाश्चा, तत्रैव चिन्तिता खलु ॥३७५॥
अजयमेरुराजाऽपि, व्याख्यानं श्रोतुमिच्छया ।
प्रत्यहं देशनायां च, आगच्छति च भावतः ।३७६
भुवनपालराजेन, सूरीणामुपदेशतः ।
जैनमन्दिरपूजायै, आगतानां करो नहि ॥३७७॥
सर्वथा करमुक्ताश्च, कृतास्तेनैव श्रावकाः ।
सूरिव्याख्याप्रभावेन, जातो धर्मे च रागवान् ३७८
सौराष्ट्रराजखेंगारः, संजातः सूरिभक्तराट् ॥
शाकम्भरीयराजेन, पृथ्वीपालेन तत्क्षणे ॥३७९॥
सूरीणामुपदेशेन, जैनधर्मश्च स्वीकृतः ।
रणथम्भोरग्रामे च, कारितं जैनमन्दिरम् ॥३८०॥
सिद्ध[1]राजादि राजापि, व्याख्यानश्रवणाय वै ।
आगच्छति गुरूणां च, नैकटे नैकशः खलु ॥३८१
निर्माता नैकग्रन्थानां, जेता च नैकवादिनाम् ।

---

१ सिद्धराज जयसिंह ।

शुद्धप्रभावसद्युक्ता, जयतु जैनशासने ॥३८२॥

वादिदेव परिचय।

महानैयायिकास्ते च, शासने प्रौढतार्किकाः
चतुरशीतिसाहस्रश्लोकप्रमाणतायुतः ॥३८३॥
रत्नाकरान्तस्याद्वादादिग्रन्थस्तैश्च निर्मितः।
गौर्जरेश्वरसिद्धराजस्तेषां भक्तराट् खलु ॥३८४॥
तत्सभायां च नग्नाटाः, कुमुदचन्द्रवादिनः।
वादे जित्वा च सद्युक्तया, जयध्वजः प्रवर्तितः ३८५
सांख्यदर्शनकाराणां, वादिनां तस्य संसदि।
जित्वा च धर्मवादेन, वादिसिंहपदं तथा ॥३८६॥
सम्प्राप्तं सूरिभिस्तैश्च, जैनधर्मः प्रवर्धितः।
जैनशासनशोभायाः कारकाश्च जयन्तु ते ॥३८७॥

कलिकालसर्वज्ञहेमचन्द्रपरिचयः —

सम्पूर्णे भारते तेषां, यशोगानं प्रवर्तते।
सर्वकविवरेन्द्रेषु, प्राधान्यं तेषु वर्तते ॥३८८॥
सर्वेषां ग्रन्थकर्तॄणां प्राधान्यं तेषु सर्वदा।
व्याख्यानशालिनां मध्ये, मुख्यव्याख्यानकारकाः ॥

कुमारपालभूपालबोधकागुरवश्च ते ।
अष्टादशासु देशेषु, अमारिपटघोषणम् ॥३६०॥
कारितमुपदेशेन, सूरिणा भूपतेः खलु ।
जन्मसफलता राज्ञां, कारिता सूरिणा तदा ॥३६१
अपूर्वविज्ञता तेषामपूर्वबुद्धिकौशलम् ।
अपूर्वा तर्कशक्तिश्च, सर्वापूर्वं च सूरिषु ॥३६२॥
व्याकरणं च लिङ्गानुशासने नैव संयुतम् ।
पादलक्षप्रमाणं च, श्लोकानां तत्र वर्तते ॥३६३॥
काव्यानुशासनं चैव, छन्दोऽनुशासनं तथा ।
वादानुशासनं तैश्च, स्वोपज्ञं च विनिर्मितम् ३६४
न्याये प्रमाणमीमांसा, सटीका तैश्च निर्मिता ।
अनेककाव्यग्रन्थाश्च, रचिता सूरिभिः खलु ॥३६५॥
प्रौढिमयोगशास्त्रं च, सटीकं वर्तते खलु ।
वीतरागमहास्तोत्रं, जैनगीतास्वरूपकम् ॥३६६॥
सार्धत्रिकोटिश्लोकानां, निर्माणं जैनशासने ।
तैरेव कारितं बुध्या, सर्वाश्चर्यविधायकम् ॥३६७॥
नैकमन्दिरनिर्माणं, प्रतिष्ठाकरणं तथा ।
अनेकतीर्थयात्रा च, संघद्वारा कृता खलु ॥३६८॥

सिद्धाचलमहासंघ, कुमारपालभूभुजैः ।
अतीव भक्तियुक्तैः, निष्कासितश्च भावतः ॥३९९॥
कलिकालीय सर्वज्ञाः जयन्तु ते सूरिवराः ।
तेषां स्मरणमात्रेण, गलन्ति पापपङ्कजाः ॥४००॥
प्रसङ्गतश्च सम्प्रोक्तं, वादिवैतालकादीनाम् ।
संक्षेपेण चरित्रं च, स्वपरज्ञानहेतवे ॥४०१॥
देवसूरिप्रभूणां च, अष्टात्रिंशतिपट्टके ।
सर्वदेवाख्य सूरिश्च, तत्पट्टे च द्वितीयके ॥४०२॥
यशोभद्राख्य सूरिश्च, तत्पट्टे परिराजते ।
मुनिचन्द्राख्य सूरिश्च, तत्पट्टपरिवर्धकः ॥४०३॥
अजितदेवसूरिश्च, मुनिचन्द्रान्वये खलु ।
विजयसिंहाख्य सूरिश्च, अजितदेवपट्टके ॥४०४॥
सोमप्रभाख्य सूरिश्च, तत्पट्टपरिदीपकः ।
अनुक्रमेण ते ज्ञेयाः, सूरयो वटगच्छके ॥४०५॥
षष्ठं निर्ग्रन्थसाधूनां, तपोगच्छाभिधानकम् ।
कथं केन च सम्प्राप्तं, तत्स्वरूपं निगद्यते ॥४०६॥
सोमप्रभाख्य सूरीणां, मणिरत्नाख्य सूरयः ।
लघुभ्रातृत्वरूपेण, प्रसिद्धा जैनशासने ॥४०७॥

तच्छिष्यातीवयोग्याश्च, परं संवेगधारकाः ।
जगच्चन्द्राभिधानेन, विख्याता वीरशासने ॥४०८॥
योग्यानां योग्यतां ज्ञात्वा सोमप्रभाख्य सूरिणा ।
आचार्यत्वे नियुक्तास्ते, जगच्चन्द्राख्य सूरयः ॥
तदानिं वटगच्छेषु, क्रिया शैथिल्यमागतम् ।
तदुद्धारस्य कर्त्तव्ये, जिज्ञासा मानसे बहु ॥४१०॥
सहयोगं विना नैव, कार्यसिद्धिः प्रजायते ।
भुवनचन्द्रसूरीणां, संयोगः कार्यसाधकः ॥४११॥
तत्सहायेन तैरेव, क्रियोद्धारश्च कारितः ।
शिष्यदेवेन्द्रसूरीणां साहाय्यं परमं मतम् ॥४१२॥
शुद्धक्रियां च कुर्वन्ति, आचाम्लं च तपस्तथा ।
अभिग्रहं नवीनं च, निरन्तरं प्रजायते ॥४१३॥
अनेकाचार्यवर्यांश्च, ज्ञात्वा संवेगरूपकान् ।
तद्धस्ते सूरिभिस्तैश्च, क्रियोद्धारश्च कारितः ॥४१४
अमात्य वस्तुपालश्च, तेजपालमहाशयः ।
जैनशासनमध्ये च, पुष्पदन्तो ह्यपूर्वकौ ॥४१५॥
शत्रुंजयस्य यात्रायां, एकादशश्च च सूरयः ।
भिन्नगच्छसमुत्पन्ना, निमन्त्रिता महाशयैः ॥४१६

जगच्चन्द्राख्य सूरिश्च, मुख्यतया विराजते ।
अनेककार्यकर्तृत्वं, सूरिषु च निगद्यते ॥४१७॥
घोरतपस्विनस्तांश्च, परमत्यागिनस्तथा ।
मेदपाटनरेशेन, जैत्रसिंहेन तत्क्षणे ॥४१८॥
तान् दृष्ट्वा च तपा रूपं पदं तेन समर्पितम् ।
दीक्षाग्रहणकालादारभ्य कण्ठगतासुकम् ॥४१९॥
आचाम्लाख्य तपश्चर्यं, कृतं कल्याणहेतवे ।
मेदपाटनरेशश्च, जातः परमभक्तराट् ॥४२०॥
राजसभासु तैरेवः दिगम्बरीय वादिनाम् ।
द्वात्रिंशद्गणनानां च, जित्वा वादे सुयुक्तितः ॥४२१
हीरकवदभेद्यत्वाद्युक्तीनां वादकालिके ।
हीरलेति च सोपाधिः, प्राप्तश्च राजसंसदि ॥४२२॥
मेदपाटनृपाश्चैव, मन्यन्ते बहुभक्तितः ।
वटगच्छस्य सन्नाम, सूरितश्च तपोऽभिधम् ॥४२३
अद्यावधि च तन्नाम, वर्तते जैनशासने ।
उन्नतिः खलु तस्यैव, प्रतिदिनं च जायते ॥४२४॥
जगच्चन्द्राख्यसूरीणां, पट्टे देवेन्द्रसूरयः ।
महाप्रभावसद्युक्ताः, संजाता जैनशासने ॥४२५॥

कर्मग्रन्थादिशास्त्राणां, कर्त्तारो भाग्यशालिनः ।
श्रावकदिनकृत्यानां, निर्मातारश्च ते मताः ॥४२६

मेदपाटनृपाणां च, समरसिंहभूभुजाम् ।
जयतल्लाख्य देवीनां, सर्वेषां प्रतिबोधकाः ॥४२७॥

सूरीणामुपदेशेन, जयतल्लाख्य राज्ञीभिः ।
चित्रकुटीय दुर्गेषु, पार्श्वनाथस्य मन्दिरम् ॥४२८॥

निर्मापितं च भावेन, सम्यक्त्वप्राप्तिहेतवे ।
प्रतिष्ठा सूरिवर्येण, कारिता विधिपूर्वकम् ॥४२९॥

गूर्जरदेशवास्तव्य, वीरधवलभूपतेः ।
भक्तिश्च गुरुदेवानामुपर्यतीव जायते ॥४३०॥

अमात्यवस्तुपालोऽपि, जातश्च गुरुभक्तराट् ।
समरसिंहभूपालैः, सूरीणामुपदेशतः ॥४३१॥

अमारिपटहोद्घोषः, स्वराज्ये कारितो मुदा ।
अनेकधर्मकार्याणि, कृतानि गुरुबोधतः ॥४३२॥

महाप्रतापिनस्ते च, जैनशासनदीपकाः ।
जयन्तु गुरुदेवाश्च, तादृशा जगती तले ॥४३३॥

तत्पट्टे धर्मघोषाख्याः, सूरयश्च समागताः ।
मण्डपदुर्गवास्तव्य, पेथडाख्यस्य मन्त्रिणः ॥४३४

झांझणाख्य कुमाराणां, सूरयः प्रतिबोधकाः ।
तदुपदेशेन मंत्री च, चतुरशीति मन्दिरम् ॥४३५॥
अनेकपुस्तकागारान्, करोति भक्तिभावतः ।
प्रतिभाशालिनस्ते च, जैनशासनवर्धकाः ॥४३६॥
सोमप्रभाख्य सूरिश्च, तत्पट्टे परिराजते ।
सोमतिलकसूरिश्च, तत्पट्टे च समागतः ॥४३७॥
तत्पट्टं भूषयामासुः, देवसुन्दरसूरयः ।
अनेकग्रन्थकर्त्तारः, अनेकराजबोधकाः ॥४३८॥
सोमसुन्दरसूरिश्च, जयतु पृथिवीतले ।
देवसुन्दरसूरीणां, पट्टे सोऽपि समागतः ॥४३९॥
मुनिसुन्दरनामानः, सूरयो वीरशासने ।
तत्पट्टे च समायाताः, धर्मवृद्धिकराश्चते ॥४४०॥
अध्यात्मकल्पद्रुमादिग्रन्थानां कारकाः खलु ।
सहस्रावधि[1]कर्त्तारः, महाप्रतापशालिनः ॥४४१॥
मुजफराख्य म्लेच्छानां, गूर्जरे च निवासिनाम् ।
उपदेशं विधायैव, धर्मप्रभावदर्शिनः ॥४४२॥

---

१—अवधान ।

सुबा द्फरखानानां खम्भातपुरवासिनाम् ।
प्रतिबोधनकर्त्तारः, सूरयस्ते महाशयाः ॥४४३॥
अद्भुतवादशक्तिं च, दृष्ट्वा तैर्यवनैस्तदा ।
वादिगोकुलषण्डाख्यं, पदं तत्र समर्पितम् ॥४४४॥
दक्षिणविज्ञलोकैश्च, कालीसरस्वतीनामकम् ।
पदं दत्तं गुरुभ्यश्च, सभासु सर्वसन्निधौ ॥४४५॥
शिरोहिराजद्वारा च उपदेशप्रदानतः ।
अमारिपटहोद्घोषः, दापितः स्वीय राजसु ॥४४६॥
एवमनेककार्याणां, कर्त्तृणां च प्रतापिनाम् ।
सूरीणां हि गुणानां वै स्तुतिं कर्तुं न शक्यते ॥
तत्पट्टं शोभयामासुः, रत्नशेखसूरयः ।
श्राद्धविध्यादि शास्त्राणां, कर्त्तारो जैनशासने ॥४४८
दफरखानपर्षद्यां, बांबी प्रमुखवादिभिः ।
सम्मील्य गुरुदेवानां, कालीसरस्वतीपदम् ॥४४९॥
दत्तं सद्भावपूर्वेण, सहर्षेणैव तत्क्षणे ।
स्वप्रभावश्च तत्रापि, सूरिभिः परिदर्शितः ॥४५०॥
श्राद्धप्रतिक्रमस्यैव, वृत्तिश्च रचिता शुभा ।
श्राद्धविधीय ग्रन्थस्य, वृत्तिश्च विधिकौमुदी ॥४५१

षडावश्यकवृत्तिश्च, चतुसहस्रश्लोकिका ।
आचारत्वप्रदीपाख्यः, ग्रन्थस्तैरेव निर्मितः ॥४५२॥
हैमव्याकरणे तैश्च, अवचूरिर्विनिर्मिता ।
प्रबोधचन्द्रवृत्तिश्च, कृतेति परिश्रूयते ॥४५३॥
लक्ष्मीसागरसूरिश्च, तत्पट्टे च समागतः ।
लघुवयसि चारित्रं, गृहीत्वा पठनं कृतम् ॥४५४॥
सिद्धान्तचर्चावार्तासु, कौशल्यं प्राप्तवान् खलु ।
गच्छभेदस्य नाशाय, करोति च परिश्रमम् ॥४५५
राजनगरश्राद्धेन, गुरूपदेशदानतः ।
ज्ञानकोशः कृतस्तेन, हस्तलिखित-पत्रके ॥४५६॥
वस्तुपालस्य रासोऽपि सूरिणा तेन निर्मितः ।
तादृशगुरुदेवाश्च, जयन्तु जैनशासने ॥४५७॥
सुमतिसाधुसूरिश्च, तत्पट्टे राजते सदा ।
हेमविमलसूरिश्च, तत्पट्टे च समागतः ॥४५८॥
सूत्रकृताङ्गसूत्रस्य, दीपिका तेन निर्मिता ।
कवित्वं गुरुदेवे च, राजते नात्रसंशयः ॥४५९॥
हेमविमलसूरीणामानन्दविमलाभिधाः ।
तत्पट्टे सूरयो ज्ञेयाः, धर्मोन्नति विधायकाः ॥४६०

महातपस्विनस्ते च, क्रियोद्धारस्य कारकाः ।
त्यागि चारित्रपात्रत्वं, तेषु च परिशोभते ॥४६१
तपस्त्यागप्रभावेन, सौराष्ट्रपतिना खलु ।
सुरत्राणेन सौराष्ट्रे, तद्विहारश्च याचितः ॥४६२॥
जगर्षिमुख्यसाधूनां, विहारस्तत्र जायते ।
गत्वोपदेशदानेन, प्रभावः परिदर्शितः ॥४६३॥
सूरीणामुपदेशेन, कर्माशाहाख्य श्रावकैः ।
शत्रुंजयस्य तीर्थस्य, उद्धारस्तैश्च कारितः ॥४६४॥
नवोपवासकं कृत्वा, अन्त्यावस्थासु सूरिभिः ।
अनशनं विधायैव, स्वर्गे गच्छन्ति शुद्धितः ॥४६५
तत्पट्टं भूषयामासुः विजयदानसूरयः ।
खरतरतपोगच्छे, प्राग्जातं वैमनस्यकम् ॥४६६॥
तत्सर्वं तन्महाभागैरन्योऽन्यसहकारतः ।
शासनवृद्धिकार्याय, विनाशितं च प्रेमतः ॥४६७॥
द्वेषोत्पादकग्रन्थाश्च, गच्छद्वयस्य सन्ति ये ।
जलाधीनाश्च ते सर्वे, कारितास्तैश्च सूरिभिः ॥
अपूर्वप्रेमवृद्धिश्च, संजाता गुरुयोगतः ।
जल्पानां सप्तकस्यैव, आज्ञा च सूरिभिः कृता ॥४६९

परस्परं च बन्धुत्वं, वर्धितं सूरिभिस्तदा ।
जयन्तु गुरुदेवाश्च, तादृशा जैनशासने ॥४७०॥
तत्पट्टं दीपयामासुः, हीरविजयसूरयः ।
लघुवयसि दीक्षां च, गृहीत्वा वीरशासने ॥४७१॥
गुर्वाज्ञां च गृहीत्वैव, देवगिरौ समागताः ।
तत्रत्य विज्ञपार्श्वे च, पठनं पुष्कलं कृतम् ॥४७२॥
प्रमाणशास्त्रग्रन्थेषु, ग्रन्थाः षडद्शनात्मकः ।
अधीताः स्वल्पकालेन, नव्यन्यायः कृतस्तथा ॥४७३
सामुद्रिकं च ज्योतिष्कं, साहित्ये संहिता मतिः ।
नाटकशास्त्रग्रन्थाश्च, अधीताः सूरिभिस्तथा ४७४
सिद्धान्ते पूर्णयोग्यत्वं, सम्प्राप्तं गुरुयोगतः ।
कर्मग्रन्थादिशास्त्राणां, ज्ञानं शुद्धं समादृतम्४७५
यशोगानं च सूरीणां, जैनजैनेतरे तथा ।
आइनेऽकबरी ग्रन्थे, अबुलफजलेन च ॥४७६।
विन्सेण्टस्मिथविज्ञैश्च, स्वग्रन्थेषु स्तुतिः कृता ।
सर्वविज्ञजनैरेव, प्रशंसाऽतिकृता तदा ॥४७७॥
अपूर्वब्रह्मतेजोभिः, शुद्धपाण्डित्ययोगतः ।
शुद्धचारित्रयोगेन, प्रभावः प्रसृतो महान् ॥४७८॥

सम्राडकबरस्तेषां, संजातो भक्तराट् सदा।
धर्मोपदेशतां श्रुत्वा, कृतं कार्यमनेकधा ॥४७६॥
सूरीणामुपदेशेन, वर्षे षण्मासिकावधि।
मांसाहारनिषेधश्च, अक्बरैः सर्वथा कृतः ॥४८०॥
निर्दोषपशुपक्षीणाममारित्वं च घोषितम्।
शत्रुंजयादितीर्थानां, करस्तेन निषेधितः ॥४८१॥
पर्युषणादिने चैव, समस्त भारते खलु।
मांसाहार निषेधश्च, कारितः सूरिबोधतः ॥४८२॥
साधूनां विहृतौ विघ्नं दूरीकृतं च भारते।
सूरिषु भक्तियोगेन, उपदेशप्रभावतः ॥४८३॥
जगद्गुरुपदं तेषामर्पितं भक्तिभावतः।
तत्सभासु च नान्येन, सम्प्राप्तं तादृशं पदम् ४८४
सर्वजनहितायैव, कार्यं कृतमनेकशः।
तत्सर्वं परिदृष्टव्यं[1], सूरीश्वराख्यग्रन्थके ॥४८५॥
शासनदीपकेनैव, विद्याविजयबन्धुना।
लिखितं स प्रमाणेन, सर्वदेशीय युक्तितः ॥४८६॥

---

1 सूरीश्वर अने सम्राट ग्रन्थतः।

हीरविजयसूरीणां सन्नाम भारते खलु ।
सुवर्णाक्षररूपेण, विद्यते जगतो तले ॥४८७॥
महावीरप्रभूणां च, अहिंसा परिघोषणा ।
सम्पूर्णभारते चैव, प्रवर्त्तिता च सूरिणा ॥४८८॥
भारतीयाश्च राजानः, सूरीणां चरणाम्बुजे ।
अहोभाग्यं च मन्वाना, आगच्छन्ति च प्रेमतः ४८६
अपूर्वसूरीशौभाग्यमपूर्वविज्ञता तथा ।
अपूर्वः शिष्यसन्दोहोऽपूर्वं सूरिवरे खलु ॥४६०॥
रोगाक्रान्ते शरीरेऽपि, भैषज्यं नैव सेवितम् ।
धर्मध्यानं च कुर्वाणाः, सूरयश्च दिवं गताः ४६१
ऊनाख्यग्राममध्ये च, अन्त्या सर्वा क्रिया तदा ।
कृता श्राद्धेन भावेन, सशोकेनैव तत्क्षणे ॥४६२॥
तत्पट्टं भूषयामासुः, विजयसेनसूरयः ।
प्रभावशालिनस्तेऽपि, धर्मप्रभावकारकाः ॥४६३॥
सूबानां खानखानानामुपदेशस्यदापनम् ।
तद् द्वारानेककार्यं च, कारितं सेनसूरिणा ॥४६४॥
गुरूणां वृद्धभावे च, देशना श्रवणाय च ।
विजयसेनसूरीणामाह्वानमकबरैः कृतम् ॥४६५॥

सूरिभिस्तत्र गत्वैव, लाहोराभिधग्रामके ।
प्रबला देशनाद्वारा, प्रभावोऽपि प्रदर्शितः ॥४९६॥
भूषणाख्यैश्च सम्राटैः, चिन्तामणेश्च सम्मुखे ।
सूरते च कृतो वादः, तेषां निरूत्तरी कृता ॥४९७
योगशास्त्रस्य चाद्यैकश्लोकस्य बुद्धियोगतः ।
पञ्चाधिकशतार्थाहि, कृताश्च सूरिभिः खलु ॥४९८
सुमित्ररासग्रन्थश्च, सूरिभिर्निर्मितस्तदा ।
चतुर्लक्षप्रभूणां च, मूर्त्तीनां शुभयोगतः ॥४९९॥
प्रतिष्ठा च कृता तैर्हि, यात्राऽपि प्रचुरास्तथा ।
कालीसरस्वतीरूपं, पदं प्राप्तं च तैः खलु ॥५००॥
सम्राडकबरैस्तेषां, दत्तं विशुद्धप्रेमतः ।
जयन्तु सूरयस्तेऽत्र, भारते जैनशासने ॥५०१॥
कादम्बर्याख्य साहित्ये, स्फुटा टीका च निर्मिता ।
भानुसिद्धीन्दुविज्ञाभ्यां[१], बुद्धिचातुर्ययोगतः ॥५०२॥
विजयहीरसूरीणां, विज्ञान्तेवासिनः समे ।
सर्वे च ग्रन्थकर्त्तारः, सर्वे सिद्धान्तपारगाः ॥५०३॥

---

१—भानुचन्द्रसिद्धिचन्द्राभ्यां ।

तत्पट्टं दीपयामासुः, विजयदेवसूरयः ।
मण्डपदुर्गमध्ये च, तेषामामन्त्रणं भवेत् ॥५०४॥
जहांगिरेण सम्राजा, आहूय देशना श्रुता ।
महातपापदं तेन, अर्पितं बहुहर्षतः ॥५०५॥
जगतसिंहराणानां, योगेन ह्युदयेपुरे ।
धर्मोपदेशकं दत्वा, अहिंसा च प्रवर्त्तिता ॥५०६
महाभागाश्च ते ज्ञेया, शुद्धधर्मोपदेशकाः ।
जयन्तु भारते ते च, जैनशासनवर्धकाः ॥५०७॥
तत्कालीन महाभागाः, यशोविजयविज्ञकाः ।
अपूर्वप्रतिभा युक्ताः, महाप्रतापशालिनः ॥५०८॥
अपूर्वयोगिनस्ते च, अपूर्वत्यागिनस्तथा ।
अपूर्वशक्तियुक्ताश्च, सर्वापूर्वसमन्विताः ॥५०९॥
द्वितीय हरिभद्राश्च, अवतीर्णाः क्षमातले ।
यादृशी प्रतिभा तेषां, नान्यत्र तादृशी खलु ॥५१०
प्रौढयुक्तिभृतास्तेषां, ग्रन्थाश्च जैनशासने ।
सर्वविषयशास्त्राणि, कृतानि तर्कशैलितः ॥५११
तत्समं नैव पाण्डित्यं तत्काले नैव भारते ।
तादृशा जैनधर्मे च, न सन्ति पण्डिता खलु ॥५१२

संस्कृते प्राकृते चैव, गौर्जरे मरुदेशीये ।
भाषावादे च ग्रन्था स्युरनेके जैनशासने ॥५१३॥
काश्यां द्वादशवर्षान्तं, स्थित्वा दर्शनशास्त्रकम् ।
नव्यप्राचीनग्रन्थाश्च, अधीता गुरुयोगतः ॥५१४॥
वादविषयशक्तिश्च, काश्यां प्रौढाश्च दर्शिता ।
न्यायविशारदं चैव, पदं प्राप्तं च तत्र वै ॥५१५॥
रहस्यपदयुक्तानां, अष्टाधिकशतं खलु ।
ग्रन्थाश्च निर्मितास्तैश्च, प्रौढयुक्तिसमन्विताः ।५१६
अपूर्वतत्त्वचर्चा च, अपूर्वबुद्धियोगतः ।
अनेकवादग्रन्थाश्च, रचितास्तैर्महात्मभिः ॥५१७॥
सर्वविषयसाहित्यं, निर्मितं प्रौढयुक्तितः ।
जैनशासनधूर्ग च, ऊढा तेन महात्मना ॥५१८॥
जैनदर्शनमध्ये च, तत्समा नैव साधवः ।
विद्यन्ते विज्ञवर्याश्च, अतो धन्याश्च ते खलु ॥
दिगम्बरादियुक्तीनां, खण्डनं विहितं महत् ।
अध्यात्ममतशास्त्रे च, दृश्यतां तत्त्वकांक्षिभिः ॥
तादृशाः साधवश्चैव, जयन्तु जगती तले ।
अस्माकं वन्दनं तेषां, भवतु च पुनः पुनः ॥५२१॥

विजयसिंहसूरिश्च, विजयदेवपट्टके ।
क्रमेणैव समायातः, वीरधर्मस्य शासने ॥५२२॥
तदानिं च क्रिया काण्डे, शैथिल्यं हि प्रवेशितम् ।
तन्निराशाय यत्नोऽपि, सत्यविजयसाधुभिः ॥५२३
क्रियोद्धारस्य कार्येषु, नैकसाधुसमागताः ।
आत्मकल्याणकर्त्तव्ये, केषामिच्छा न जायते ॥५२४
वैरागी महातपस्वी च, सत्यविजयसाधुराट् ।
अपरसाधुसाहाय्यात्क्रियोद्धारश्च कारितः ॥५२५॥
ततः संवेगि नाम्ना च, आत्मार्थिनश्च साधवः ।
जैनशासनमध्ये च, विख्याता धर्मयोगतः ॥५२६॥
कर्पूरविजयश्चैव, तत्पट्टे परिराजते ।
क्षमाविजयसाधुश्च, ज्ञातव्यस्तदनन्तरम् ॥५२७॥
जिनविजयभव्यात्मा, ततोऽनुराजते खलु ।
तपोगच्छे च विख्यातः जयतु भुवि मण्डले ॥५२८
उत्तमविजयस्तस्मात्पद्मविजयपण्डिताः ।
रूपविजयसाधुश्च, कीर्त्तिविजयसाधुराट् ॥५२९॥
कस्तूरविजया ज्ञेयाः, पूज्याश्च भाग्यशालिनः ।
मणिविजयसौभाग्यं वर्तते सर्वसाधुषु ॥५३०॥

महायोगित्वरूपेण, प्रसिद्धाः शक्तिशालिनः ।
जगत्पूज्या महाभागाः, मणिविजयसाधवः ॥५३१
अशीतिषटशतं तेषां, शिष्यप्रशिष्यरूपतः ।
विद्यन्ते साधवश्चैव, चिन्तामणिस्वरूपकाः ॥५३२।
तपोगच्छेषु ते ज्ञेया, सर्वेषां गुरवः खलु ।
संविज्ञेषु शिरोभूताः, जयन्तु गुरवः सदा ॥५३३॥
बुद्धिविजयशिष्याश्च, मुख्यास्तेषां च सम्मताः ।
दुलवाग्रामसंजाताः, पाञ्चालदेशमध्यके ॥५३४॥
टेकसिंहपितुर्नाम, कर्मादे मातृनामकम् ।
बटेलसिंह तन्नाम, प्राक्काले गुरूणां मतम् ॥५३५॥
संवेगि शुद्धसाधूनां, तद्देशे विरहो महान् ।
अतो लुम्पकसाधूनां, दीक्षां पार्श्वेऽगृहीत्तदा ।५३६
बुटेरायश्च तन्नाम, ढुंढकेन नियोजितम् ।
जिनागमविलोकेन, जिनपूजां विलोकिता ॥५३७॥
गुरुपार्श्वे च सम्प्रोक्तं, कथं मूर्त्तिर्न मन्यते ।
सूत्रेषु बहवः पाठाः, विद्यन्ते च पदे पदे ॥५३८॥
गुरुणा क्रोधदृष्ट्या च, पूजा प्रोक्ता न कुत्रचित् ।
इत्युक्ते गुरुणा पाठाः, दर्शिता गुरुसम्मुखे ॥५३९॥

मूलचन्द्रेण तत्काले, दीक्षा च गुरुसंनिधौ ।
गृहीता भक्तिभावेन, ततो जाताः सहायकाः ॥
गुरुपार्श्वे च तत्पाठाः, दृष्टा यदा च तेन वै ।
मूलचन्द्रमहाराजै, गुरूणां कथितं तदा ॥५४१॥
दाक्षिण्यं नैव कर्त्तव्यं, त्यज्यतां मुखवस्त्रिका ।
सदा मुखेषु पाटाश्च, अश्वानामेव शोभते ॥५४२
प्रत्युताऽसंख्यजीवानां, हिंसा च जायते ध्रुवम् ।
तस्याश्च त्रोटनं श्रेष्टं, इत्युक्त्वा तैश्च त्रोटिता ॥
कृपाराममहाभागाः, शुद्धवैराग्यमूर्त्तयः ।
आत्मकल्याणकर्त्तव्ये, गुरून् गवेषयन्तिते ॥५४४॥
मातुलमूलचन्द्राणां, योगश्च मीलितस्तदा ।
तद् गुरुनिकटे तैश्चा, दीक्षा च स्वीकृता शुभा ॥
वृद्धिचन्द्रं च तन्नाम, योजितं गुरुणा तदा ।
ततः पाञ्चालदेशेषु, मूर्त्तिपूजोपदेशनम् ॥५४६॥
विशुद्धश्रावका नैके, संजाताश्चोपदेशतः ।
विहृत्य तैर्महाभागैः, शुद्धधर्मश्च दर्शितः ॥५४७॥
सिद्धाचलस्य यात्रायै ततश्च साधवस्त्रयः ।
यात्रां कृत्वा चतुर्मासं, कृतं भावपुरे वरे ॥५४८॥

राजनगरमध्ये च, आगत्यैव ततः परम् ।
मणिविजयपार्श्वे च, शुद्धदीक्षा च याचिता ॥५४६
संवेगि साधवो जाताः, त्रयोऽपि गुरुसामीपे ।
बुटेरायस्य सन्नाम, बुद्धिविजयरूपकम् ॥५५०॥
मुक्तिविजयसन्नाम, मूलचन्द्रस्य स्थापितम् ।
वृद्धिविजयरूपं च, वृद्धिचन्द्रस्य योजितम् ॥५५१॥
शिष्यौ तौ द्वौ च संजातौ बुद्धिविजययोगिनां ।
परं संवेगतां प्राप्य, हर्षितौ तौ महाशयौ ॥५५२।
आत्मारामादि पूज्यैश्च, पश्चात्पाञ्चालमध्यके ।
शुद्धधर्मप्रचारश्च, विहितः पुष्कलस्तदा ॥५५३॥
अष्टादशमहाभागैः, साधुभिः सह तत्र वै ।
आत्मारामैश्च पाटानां, त्रोटनं च कृतं महत् ५५४
गूर्जरदेशमध्ये च, आगतास्ते महाशयाः ।
बुटेरायगुरूणां च, दीक्षां पार्श्वेऽगृहीत्तदा ॥५५५
शुद्धसंवेगिनो जाताः, परमवैराग्यमूर्त्तयः ।
शुद्धधर्मप्रचाराय, गुरूणां ते सहायकाः ॥५५६॥
नीतिविजयपूज्याश्च, क्षान्तिविजयसाधवः ।
बुद्धिविजयसाधूनां, शिष्याश्च ते समे मताः ॥५५७

संवेगिसाधवश्चैव, अतोवृद्धिं गताः खलु ।
प्रचारकार्यकर्त्तव्ये, सर्वे ते च सहायकाः ॥५५८॥
विजयानन्द सूरीणां, पांचालश्च प्रदेशकः ।
शुद्धश्रद्धाप्रवेशाय, अर्पितो गुरुभिस्तदा ॥५५९॥
पूज्यानां मूलचन्द्राणां, राजनगरमध्यके ।
प्रचारो विहितः शुभ्रः, आशातीतश्च तत्क्षणे ।५६०
पूज्यानां वृद्धिचन्द्राणां, काठियावाडमध्यके ।
अनेकधा प्रचारस्य, कार्यं च विहितं शुभम् ॥५६१॥
नीतिविजयपूज्यैश्च, सुरतादिप्रदेशके ।
धर्मप्रचारकार्यं च, कृतं शासनरागतः ॥५६२॥
क्षान्तिविजयसत्साधुः, महातपोविधायकः ।
वैराग्यपुष्टिव्याख्याभिः, प्रचारः कृतवान् खलु ५६३
तदा सुसंपशान्तिश्च, अपूर्वा परिदृश्यते ।
अपूर्वबन्धुभावत्वं, परस्परं प्रजायते ॥५६४॥
साहित्यवृद्धिकार्यं च, साधुभिश्च कृतं तदा ।
नूतनग्रन्थनिर्माणं, विजयानन्दसूरिभिः ॥५६५॥
प्रज्ञापनाऽऽख्यसूत्रस्य, टीप्पनं वृद्धिचन्द्रकैः ।
पूज्यैश्च विहितं ज्ञेयं, स्वाध्यायो विहितो महान् ५६६

परिचयो विशेषेण, वृद्धिचन्द्रमहात्मनाम् ।
कार्यते सुखबोधाय, शान्तिसाम्राज्यसिद्धये ॥५६७
जगद्गुरुत्वयोग्यत्वं, दृश्यते पादपंकजे ।
शान्तरसमयीमूर्त्तिः, तेषां च प्रविलोक्यते ॥५६८
साधूनां शान्तिदातारः, पक्षपातविवर्जिताः ।
गुणज्ञा गुणद्रष्टारः, दृश्यन्ते नैव तादृशाः ॥५६९॥
क्रोधस्यावसरो नैव, तेषां पार्श्वे च कर्हिचित् ।
देवाणुप्रियशब्देन, मुनीन् जल्पन्ति सर्वदा ॥५७०॥
साधुजीवनपर्यन्तं, मिथ्यादुष्कृतकस्य वै ।
दातव्येऽवसरो नैव, तेषां कदापि जायते ॥५७१॥
विचार्यशुद्धवक्तारः, कुर्वन्ति नैव चापलम् ।
हितमितादिशब्देन, युक्तं जल्पन्ति ते तथा ५७२
तत्काले सर्वसाधूनामाधिपत्यं च राजते ।
क्लेशवार्ता न कर्हिचित्तत्समीपे भवेत् खलु ॥५७३॥
महाक्रोधिमनुष्याश्च, यदाऽऽगच्छन्ति नैकटे ।
शान्तमूर्त्तिं च तं दृष्ट्वा, तेऽपि गच्छन्ति शान्तिताम्
तख्तसिंहाख्यभूपाला, आगत्य गुरुसन्निधौ ।
एकदा तेऽपि जल्पन्ति, दृष्ट्वा च पादपंकजम् ५७५

भवतां चेन्न दीक्षा स्यात् संसारे भूपतिस्तदा ।
अहो गुरुषु सौभाग्यं, अद्भुतं परिदृश्यते ॥५७६॥
साधूनां पाठनं सम्यग्देशना मेघगम्भीरा ।
व्याख्याशैली हि चापूर्वा, गुरुषु विद्यते सदा ५७७
शिष्यसन्दोहबाहुल्यं, प्रज्ञाशक्तिसमन्वितम् ।
तादृशं नैव केषाञ्चिद्यादृशं विद्यते गुरौ ॥५७८॥
विद्वत्ता खलु चाद्यापि, गुरूणां समुदायके ।
अन्येषां समुदायेषु, तादृशो नैव विद्यते ॥५७९॥
एकादशसु शिष्येषु, मध्ये द्वौ श्रेष्ठपण्डितौ ।
वादिशिरोमणी तौ च, महाप्रभावशालिनौ ॥५८०
प्रथमो हि गुरुदेवः स्यान्नेमिसूरिर्द्वितीयकः ।
स्वपरशास्त्रज्ञातारौ, सिद्धान्तेषु महोदधी ॥५८१॥
परे सिद्धान्तज्ञातारः, स्वात्मीयधर्मपोषकाः ।
गम्भीरविजयाद्याश्च, संस्कृतग्रन्थकारकाः ॥५८२॥
केवलविजयाश्चाद्याः, वैराग्यरसपोषकाः ।
भद्रभावेन संयुक्ताः, साधुद्वयसमन्विताः ॥५८३॥
गम्भीरविजयानां च, साधवः सप्तसंख्यकाः ।
स्वयं पण्डितवर्याश्च, सिद्धान्तपारगामिनः ॥५८४॥

उत्तमविजया ज्ञेयाः, उत्तमधर्मदेशकाः ।
साधुत्रयसमायुक्ताः, गुरुभक्तिपरायणाः ॥५८५॥
चतुरविजयाः पूज्याः, शान्तस्वभावताजुषः ।
वैराग्यरसतायुक्ताः, जैनसिद्धान्तज्ञायकाः ॥५८६॥
द्वादशसाधुसंयुक्ताः, तपोधर्मप्रदर्शकाः ।
आत्मकल्याणमार्गेषु, विचरन्ति च ते सदा ॥५८८॥
राजविजयपूज्याश्च, सदा वैराग्यदीपकाः ।
भावविजयसाधुश्च, तपस्विनां शिरोमणिः ॥५८८॥
हेमविजयसाधूनाममोघधर्मदेशना ।
वैराग्यवासनारूपा, दससंख्याकसाधवः ॥५८९॥
विजयनेमिसूरीणां, षष्टिसंख्याकसाधवः ।
अनेके पण्डितास्तेषु, अनेके ग्रन्थलेखकाः ॥५९०॥
प्रेमविजयसाधूनां, शिष्यत्रयी च वर्तते ।
अपूर्वप्रेमभावश्च, विद्यते च महात्मनाम् ॥५९१॥
शान्तमूर्त्तिस्वरूपेण, कपूरविजयस्य वै ।
ख्यातिश्च जैनधर्मेषु, अपूर्वत्यागभावतः ॥५९२॥
साधूनां सप्तसंख्याः स्याद्भाषाग्रन्थस्य लेखकाः ।
प्राचीनपुस्तकानां च, ते स्वयमनुवादकाः ॥५९३॥

वृद्धिचन्द्रगुरूणां च, अतीव प्रेमपात्रता ।
सम्पादिता च यैरेव, तेषां च शिष्यसम्पदा ॥५६४॥
विशेषरूपतश्चैव, निगद्यते प्रसङ्गतः ।
सर्वदिग्गामिनः शिष्याः, परेषां नैव सन्ति वै ५६५॥
विजयधर्मसूरीणां, गुरूणां किमु कथ्यते ।
वर्णनं तद्गुणानां च, जैनजैनेतरैः कृतम् ॥५६६॥
षोडशभिन्नभाषायां, गुरूणां जीवनं खलु ।
विभिन्नदेशविज्ञैश्च, लिखितं स्वीयभक्तितः ५६७॥
प्रौढजीवनवादश्च, संस्कृते प्राकृते च वै ।
मंगलविजयाद्यैश्च, साधुभिश्च विनिर्मितः ॥५६८॥
गौर्जर्यां चैव भाषायां, गद्यपद्यात्मकानि च ।
निर्मिताऽनेकरूपाणि, विद्यन्ते जीवनानि च ॥५६९॥
आदर्शसाधुग्रन्थानां, हिन्दीभाषासु निर्मितिः ।
फ्राञ्चेटलीयभाषायां, जीवनं विद्यते तथा ॥६००॥
आङ्गलसिंहलीयासु, भाषासु नैकजीवनम् ॥
लिखितं विभिन्नविज्ञैश्च, सर्वेषां बोधहेतवे ॥६०१॥
महाराष्ट्रीयभाषायां, कन्नडासु तथैव च ।
षड्भाषायां च ग्रंथोऽपि लिखितः साधुभिः खलु ॥

१—व्या० सा० तीर्थ तर्कालङ्काराहिमांशुविजयैः ।

इत्येवं भिन्नभाषायां, विज्ञैश्च भक्तिभावतः ।
जीवनं लिखितं ज्ञेयं दृश्यतां सर्वसज्जनैः ॥६०३॥
शिष्याश्च प्रौढविद्वांसः, सर्वदेशविहारिणः ।
सर्वदेशीयभाषायां, विज्ञाश्च परिकीर्त्तिताः ॥६०४॥
शासनरागरक्ताश्च, शुद्धचारित्रपालकाः ।
वादिशिरोमणीभूताः, वीरशासनपोषकाः ॥६०५॥
विजयेन्द्राऽऽख्यसूरिश्च, मुख्यशिष्यश्च सम्मतः ।
इतिहासादिशास्त्रेषु, पाण्डित्यं परिवर्तते ॥६०६॥
अनेक ग्रन्थकर्त्तृत्वं, भिन्नभाषासु ज्ञायताम् ।
पञ्चशिष्यस्य सम्पत्तिः, सूरीणां परिजायते ॥६०७॥
मङ्गलविजयश्चैव, द्वितीयः परिकीर्त्तितः ।
पाठकपदसंयुक्तः, न्यायतीर्थविशारदः ॥६०८॥
अनेकग्रन्थकर्त्ता च, भाषायां संस्कृते तथा ।
प्रभाकरेण संयुक्तः, नैकदेशोविहारवान् ॥६०६॥
सम्मेतशिखरादीनां, तीर्थानां समुद्धारकः ।
बङ्गे सराकजातीनामुद्धारे च समुद्यतः ॥६१०॥
शिष्योऽपि तादृशस्तस्य, सर्वकार्यसहायकः ।
गुरुष भक्तिरागश्च, सर्वदा परिदर्शकः ॥६११॥

कीर्त्तिविजयश्चैव, सिद्धान्तपरिपाठकः ।
स्वाध्यायध्यानकर्त्ता च, श्रावकान् प्रतिबोधकः ॥
रत्नविजययोगीन्द्रः, यागकार्ये सदा रतः ।
ग्रन्थपञ्चविनिर्माता, शुद्धचारित्रपालकः ॥६१३॥
भक्तिविजयपंन्यासः जैनसिद्धान्तज्ञायकः ।
त्रिंशच्चशिष्यसंयुक्तः, गौर्जरे च विहारवान् ॥
सिंहविजयसाधुश्च, आत्मधर्मगवेषकः ।
कर्मग्रन्थादिशास्त्राणामभ्यासी सर्वदा खलु ॥६१५॥
विद्याविजयसत्साधुः, जैनशासनदीपकः ।
व्याख्यानवारिधिश्चैव, जैनसाहित्यलेखकः ॥६१६॥
अनेकग्रन्थनिर्माता, ग्रन्थाश्च सर्वदेशीयाः ।
पञ्चविंशतिसंख्याकाः, ग्रन्थानां निर्मितीकृताः ॥
शिष्योऽपि तादृशो ज्ञेयः सर्वदर्शनज्ञायकः ।
ग्रन्थपञ्चककर्त्तृत्वं, तस्मिंश्च विद्यते खलु ॥६१८॥
न्यायविजयसाधुश्च, महाविज्ञश्च सम्मतः ।
प्रखरतार्किकः सोऽपि, प्रौढग्रन्थविधायकः ॥३१६॥
अपूर्वा प्रतिभा तस्य, व्याख्यानकारको महान् ।
शुद्धसांत्वनशक्तिश्च, तत्रैव विद्यते तथा ॥६२०॥

महेन्द्रविजयश्चैव, शुद्धचारित्रपालकः ।
ज्ञानध्यानसमायुक्तः, भक्तिभावसमन्वितः ॥६२१॥
गुणविजयसाधुश्च, चारित्रे दृढरागवान् ।
गुरुभक्तिसमायुक्तः, त्यागभावेषु तत्परः ॥६२२॥
जयन्तविजयश्चैव, शान्तमूर्त्तिः प्रसिद्धभाक् ।
वैराग्यवासनायुक्तः, क्रियासु कर्मठः सदा ॥६२३॥
प्राचीनतत्त्ववेत्ता च, ग्रन्थसप्तककारकः ।
शिष्योऽपि गुरुभक्तश्च, सोऽपि ग्रन्थविधायकः ॥
देवेन्द्रविजयः साधुः स्पष्टवक्ता निगद्यते ।
चारित्रगुणरक्तः स्याद् गुरुध्यानपरायणः ॥६२६॥
धरणेन्द्राख्यसाधुश्च, भजनानन्दकारकः ।
गौर्जरे विहृतिस्तस्य, क्रियाकाण्डेषु तत्परः ॥६२६
इत्येवं शिष्यसम्पत्तिः, गुरूणां परिजायते ।
प्रशिष्या नैकसंख्याकाः, वीरशासनसम्मताः ॥
प्रशस्तिकारकेनापि, जैनतत्त्वप्रदीपकम् ।
व्युत्पत्तिवादटीका च, शक्तिवादस्य टीप्पणम् ॥
नयप्रदीपग्रन्थश्च, व्याकृतिधर्मदीपिका[1] ।
योगप्रदीपशास्त्रं च, योगस्य प्रतिपादकम् ॥६२९॥

---

1 धर्मदीपिका व्याकरणम

आदर्शभूतिनामाख्यं; गुरुदेवस्य जीवनम् ।
वीरपट्टावलिश्चैव, प्रशस्तिरूपतः खलु ॥६३०॥
नवसंख्याकग्रन्थाश्च, संस्कृते निर्मितास्तथा ।
हिन्दीभाषासु चैकः स्यात् पदार्थव्यवस्थापकः ॥६३१
तत्त्वाख्यानस्य द्वौ भागौ, पूर्वोत्तरार्द्ध भेदतः ।
षड्दर्शनस्य तत्त्वानां, समालोचकतायुतौ ॥६३२
आदर्शदीपिका साऽपि, जैनतत्त्वनिरूपिका ।
विस्तृतरूपतः सर्वतत्त्वानां परिदर्शिका ॥६३३॥
सप्तभङ्गी प्रदीपश्च, सप्तभङ्गप्ररूपकः ।
स्याद्वादापूर्वशैली च, दर्शकः सोऽपि सम्मतः ॥६३४
द्रव्यप्रदीपग्रन्थे च, षड्द्रव्यस्य प्ररूपणम् ।
श्रद्धाप्रदीपग्रन्थे च, सम्यक्त्वप्रतिपादनम् ॥६३५॥
धर्मजीवनदीपे च, गुरूणां रासरूपतः ।
चरित्रं लिखितं तत्र, विज्ञेयं धर्मकांक्षिभिः ॥६३६॥
धर्मप्रदीपग्रन्थेषु, स्तवनानां निरूपणम् ।
अध्यात्मरूपतो ज्ञेयं, भिन्नविषयकं तथा ॥६३७॥
गहूंलीसंग्रहश्चैव, गुरुस्तुतिनिरूपकः ।
आन्ध्रदेशीय[1]भाषासु, व्याकृतिकोषनिर्मितिः ॥६३८

[1] तेलुगुभाषासु

लुम्पकमत[1]दीपाख्य, मूर्त्तिमण्डनरूपकः ।
मुखे च वस्त्रिकायाश्च, बन्धनस्य निषेधकः ॥६३९॥
ग्रन्थानां विंशतिसंख्या, कृता प्रशस्तिकारकैः ।
द्रव्यानुयोगपूर्णत्वं, दृश्यते च पदे पदे ॥६४०॥
न्यायशैलीधृता तत्र, युक्तिशून्यं च नो भवेत् ।
सर्वेषां सुखबोधाय, निर्मिता शुद्धभावतः ॥६४१॥
योगप्रदीपशास्त्रेषु, वीरपट्टावलौ तथा ।
यदशुद्धं च ज्ञातं स्याद्विशोध्य परिदर्श्यताम् ६४२।
शास्त्रविरुद्धदोषश्चेत् प्रमादप्रेषदोषतः ।
स्खलना यदि चेत्तर्हि, मिथ्यादुष्कृतता भवेत् ॥६४३
गुप्तिनवनिधानेन, नवधा ब्रह्मचर्यकैः ।
युक्ते खे वत्सरे वीरविभोः कैवल्यस्थानके ॥६४४॥
माघशुक्लद्वितीयायां, योगप्रदीपशास्त्रके ।
ग्रन्थान्ते च कृता ज्ञेया, प्रशस्तिर्वीरशासने ॥६४५॥
गौर्जराभिधदेशेषु, वटपद्रीयराज्यके ।
लींचग्रामे समुत्पन्नैः, मङ्गलविजयैः कृतः ॥६४६॥
योगप्रदीपग्रन्थश्च, निर्मितो ज्ञानहेतवे ।
तत्समासौ समासिश्च, ग्रन्थस्य परिज्ञायताम् ॥६४७॥

---

१ ढुंढकमतप्रदीप ।

इति

शास्त्रविशारदजैनाचार्यजङ्गमयुगप्रधानजगत्पूज्य
श्रीविजयधर्मसूरीश्वरशिष्येण न्यायविशारद-
न्यायतीर्थोपाध्यायमङ्गलविजयेन विरचिते
योगप्रदीपग्रन्थे भगवत्सुधर्मस्वामित
आरभ्य गुरुदेवशिष्यप्रशिष्यपर्यन्त-
वर्णनाऽऽख्यवीरधर्मपट्टावलि रूपा
प्रशस्तिः समाप्ता । तत्समाप्तौ-
च ग्रन्थसमाप्तिः प्रजायते ॥

॥ ॐ शान्तिः शान्तिः ॥

# योगप्रदीपग्रन्थस्य शुद्धिपत्रकम् ।

| अशुद्धं | शुद्धं | पृष्ठ | पंक्ति |
|---|---|---|---|
| दीपकं | प्रदीपकं | २ | २ |
| द्वय | द्वयी | ६ | ३ |
| बाध | बोध | ६ | १३ |
| वतित्वं | वर्त्तित्त्वं | ८ | ११ |
| ध्रौव्योत्पाद व्ययेनाऽपि | उत्पादव्यय ध्राव्येन | १० | ११ |
| वद्यं | वेद्यं | १० | १६ |
| लाका | लोका | ११ | १३ |
| आर्हद्धर्मप्रदीपे | योगप्रदीपे | १२ | ६ |
| मुप | मुपप | १४ | १२ |
| शँ | शै | १७ | ८ |
| लन्प | लम्प | १६ | ३ |
| दांच | दांश्च | १६ | ४ |
| नांच | नाञ्चैव | २१ | १८ |
| सर्वता | सर्वतो | २२ | १० |
| ० | १ स्त्रीपुरुषसंयोगोऽपि | २२ | १६ |
| मयो | महो | २३ | ७ |
| ग्र | ग्रं | २४ | ६ |
| प्ररि | प्रर | २७ | १४ |
| त्यि | त्म | ३१ | १४ |
| शुन्यं | शून्यं | ३७ | २ |

| अशुद्ध | शुद्ध | पृष्ठ | पंक्ति |
|---|---|---|---|
| ह | हि | ४१ | ४ |
| णि: | णि | ४१ | १० |
| यस्त | यत्त | ४३ | ७ |
| डा | डा | ४३ | १६ |
| ष्य | श्य | ४६ | १३ |
| तद्व | तद् वृ | ५३ | ४ |
| द्व | द्वा | ५७ | १७ |
| सीं | शीं | ६० | ८ |
| तृ | तृ | ७१ | १८ |
| तों | ती | ७३ | ७ |
| क्व | त्तव | ७४ | ३ |
| नि | नीं | ७५ | ५ |
| र्वता | वर्ता | ७८ | १३ |
| र्थो | र्थो | ८० | १० |
| रसाख्यस्य | रसाघातः | ८१ | १६ |
| सुद् | शुद्ध | ८१ | १७ |
| गुणश्रेणिश्वसंक्रामौ | गुणश्रेणिगुणसंक्रमौ | ८४ | १२ |
| मता | मताः | ८५ | २ |
| वाणि | र्वाणि | ८६ | ५ |
| मित्था | मिथ्या | ८७ | ११ |
| भन | भेन | ८७ | १५ |
| ध्यस्थित | ध्ये स्थितः | ८६ | १७ |
| क्छा | च्छा | ८६ | १८ |
| [illegible] | थ्यात्वो | ६० | ६ |

| अशुद्धं | शुद्धं | पृष्ठ | पंक्ति |
|---|---|---|---|
| तः | त्ये | ६१ | १७ |
| याट्ट | ताट्ट | ६२ | ८ |
| त | त् | ६३ | १२ |
| कथितं पञ्च भूषणम् | कथिता जैन-शासने | ६४ | २ |
| तूर्थं तत् त्र | तुर्थं तत् त्रि | ६४ | १८ |
| बि | वि | ६६ | ५ |
| वस्य | त्रस्य | ६६ | १३ |
| तूर्थः | तुर्थः | ६६ | ११ |
| मन्ना | मंत्रा | ६६ | १६ |
| न्य श्च | न्यश्च | १०१ | १६ |
| वि | वे | ११२ | १६ |
| नूल | नव्य | ११४ | ११ |
| श्व | च्च | ११५ | ६ |
| क्ष | क्षं | ११५ | ६ |
| वर | ावर | ११८ | ७ |
| स्त्र | स्त्र | ११६ | ३ |
| द्धा | द्धं | ११६ | ११ |
| ता | कं | ११६ | ११ |
| रव्याः | ख्या | १२३ | १ |
| व श्व | विश्व | १२४ | १२ |
| त्वं | व्यं | १३६ | १ |
| अवि | आवि | १३८ | १० |
| च्छ | च्छ | १४६ | १६ |

| अशुद्धं | शुद्धं | पृष्ठ | पंक्ति |
|---|---|---|---|
| सै वोहा | सैवोहा | १५२ | १६ |
| द्धार | द्वार | १५४ | १८ |
| र्थ | र्थं | १५५ | १५ |
| द्रका | द्रु | १५६ | १८ |
| त्वे | त्वै | १६० | ३ |
| हात् | हत् | १६१ | ३ |
| षा | षट् | १६१ | १[illegible] |
| चर | चार | १६२ | १३ |
| स्या | स्य | १७५ | १५ |
| कस्य चि | कस्याश्चि | १८२ | १२ |
| रूपां | रु रूपां | १९३ | १२ |
| फलं | कलं | २१० | ६ |
| त्वे न | त्वेन | २११ | ९ |
| तृ | तृ | २१३ | ४ |
| व्या | द्व्या | २१४ | ५ |
| मादोनां | कारिणाम् | २१६ | १८ |
| त्रीन्द्रि | तीन्द्रि | २१७ | १० |
| कृत | कार | २१९ | १५ |
| द्व | दृ वृ | २२१ | ८ |
| भुंक्ते | नैजकं भुंक्ते | २२१ | १० |
| ति० | ति च | २२१ | १० |
| र्नि | र्न | २२९ | ६ |
| युवत्याः | वामायाः | २३२ | ८ |
| तीर्थ कृन्नाम कर्मत्वं | सर्वज्ञता सदा चैव | २३८ | १ |

| अशुद्धं | शुद्धं | पृष्ठ | पंक्ति |
|---|---|---|---|
| मन्तृणां | मन्तॄणां | २३८ | १० |
| तो | तौ | २३६ | १५ |
| मूर्त्तिमंतृ | स्वमूर्त्ति मन्तॄ | २४० | १६ |
| स्यत् | स्यात् | २४४ | १४ |
| चेत्यं | चैत्यं | २४५ | १ |
| न्वे | त्वे | २४५ | ७ |
| जिन बिम्बवन्द्यं विना | वन्द्यबिम्बं विना नहि | २४५ | ८ |
| पू | यू | २४५ | ६ |
| पाठा | पाठाः | २४६ | ५ |
| तत्त्वा | तत्त्व | २४६ | ६ |
| द | द्द | २४६ | १४ |
| प्राप्ति | प्राप्ति | २५० | ५ |
| शब्दत्कि कि | शब्दात्किं किं | २५१ | ६ |
| पाग्गा | पाठा | २५१ | १५ |
| लोकेन | लोंकेन | २५१ | १६ |
| सद्ध | सद्बु | २५२ | ४ |
| त्त | र्त्ति | २५३ | ७ |
| अन्या | अन्यां | २५३ | १० |
| मूत्त्या | मूर्त्त्यां | २५४ | १३ |
| पाश्वे | पार्श्वे | २५५ | ३ |
| श्च | च्च | २५५ | ७ |
| न्य | न्त | २५५ | १८ |
| श्वं | र्श्वं | २५६ | ६ |
| | किं | २५८ | १ |

| अशुद्धं | शुद्धं | पृष्ठ | पंक्ति |
|---|---|---|---|
| सर्व | सर्वं | २५८ | ८ |
| प | ष | २६४ | ६ |
| जैनस्य वै | कविज्ञके | २७८ | १४ |
| जि न | जिन | २८२ | १२ |
| बु | षु | २८३ | |
| ईया | ईर्या | २८३ | ६ |
| यं ते | यें ते | २८४ | ४ |
| भवतः कदा | खलु सर्वदा | २८४ | ४ |
| स | स्त | २६० | २ |
| ग | क | २६७ | २ |
| ण्ठा | ण्ढा | २६६ | १६ |
| धा | चा | ३०० | ५ |
| द्द | द्दे | ३०१ | ३ |
| स्थ | स्थं | ३०२ | १४ |
| तस्य स्यात् | स ज्ञेयो | ३०५ | १६ |
| संचारे | संचारे च | ३०८ | २ |
| द्धि | द्धिः | ३११ | ६ |
| या | यो | ३१२ | १६ |
| श्व | क | ३१३ | १२ |
| श्च | स्व | ३१३ | १५ |
| क | कु | ३१६ | १३ |
| व | ब | ३१८ | ८ |
| तष्मा | तस्मा | ३२० | १ |
| व | ब | ३२२ | १५ |

| अशुद्धं | शुद्धं | पृष्ठ | पंक्ति |
|---|---|---|---|
| श्चाश्च | श्चारश्च | ३२६ | ६ |
| पृथक् | विना | ३२६ | १७ |
| चत्वारो | चतस्रो | ३२८ | १४ |
| स्त्रय | स्वरस्य | ३२९ | २ |
| ङ्ग | ङ्गं | ३२९ | ९ |
| नाशिका | नाडिका | ३३० | ७ |
| भा | भाः | ३३३ | १० |
| स्त्रा | स्त्रां | ३३६ | १६ |
| न | नम् | ३३७ | ३ |
| वजा | वज्रा | ३३९ | ९ |
| अ | श्च | ३४० | १० |
| क | कम् | ३४७ | ९ |
| म | मं | ३५१ | १३ |
| शुचिभूतत्त्व | अशुचिभूत | ३५२ | १७ |
| ष्टृ | ष्टृ | ३५३ | १० |
| प्सा | प्सां | ३५३ | १४ |
| अप्रमत्तत्वम | दोषदृष्टृत्व | ३५४ | १ |
| भ्य | भ्य | ३५५ | १४ |
| भा | मा | ३५५ | १७ |
| यन्त्ते | यन्ते | ३५६ | १३ |
| ल्ये | योग्ये | ३५७ | १७ |
| प्त्ये प्रयतं | प्त्यै प्रयत्नं | ३५८ | २ |
| ति | ती | ३६० | ५ |
| न्यस्य | न्यस्त | ३६० | ११ |

| अशुद्धं | शुद्धं | पृष्ठ | पंक्ति |
|---|---|---|---|
| ध्यश्च | ध्यायश्च | ३६० | १२ |
| नेक | नैक | ३६३ | १ |
| ना | कं | ३७० | ५ |
| ते | तम् | ३७० | १३ |
| नव | नैव | ३७० | १७ |
| वारकः | चारकम् | ३७२ | १८ |
| पाधि | पधि | ३७४ | ६ |
| तग्दु | तद्गु | ३७६ | ११ |
| पांस्थ | पस्थि | ३८३ | १ |
| संघा | संधा | ३९१ | ५ |
| तषु | तेषु | ३९३ | १४ |
| कां | को | ४०० | १८ |
| जपं | जयं | ४०१ | २ |
| पका | प्रका | ४०३ | ६ |
| धि | द्धि | ४०३ | ८ |
| कागने | मागने | ४०४ | १७ |
| मार्ग | मार्गं | ४०७ | १ |
| शुभौ | शुभो | ४०८ | ४ |
| कुष्ठादि | कस्तुरी | ४१४ | १५ |
| तच्च | तश्च | ४१४ | १६ |
| ण्द्रि | न्द्रि | ४२१ | २ |
| नस्तथा | तस्तथा | ४२३ | १४ |

| अशुद्धं | शुद्धं | पृष्ठ | पंक्ति |
|---|---|---|---|
| स्र च | स्रं च | ४२४ | १ |
| स्वयंमू | स्वयंभू | ४२६ | १ |
| वण | वर्ण | ४२७ | १ |
| शाभि | शोभि | ४२७ | ११ |
| णः | णाः | ४३५ | २ |
| बधु | बन्ध | ४३५ | १४ |
| तद्वद् भ्र | तद्वद्भ्रा | ४३७ | १३ |
| आगना | आगमा | ४३७ | १४ |
| गङ्गा | गङ्गां | ४४० | १६ |
| प्रत्याहारं क्रमेणैव | प्रत्याहारक्रमेणैव | ४४५ | ४ |
| सम | मम | ४४७ | १३ |
| णो | णे | ४४६ | १२ |
| होना | हीना | ४५३ | १७ |
| स्त्वनः | रस्त्वतः | ४५७ | १० |
| य म | योम | ४५७ | १४ |
| यागा | योगा | ४५७ | १५ |
| मुद्रां | मुद्रा | ४५६ | ७ |
| मत | मता | ४५६ | ७ |
| दो | दौ | ४६३ | १७ |
| वकता | बन्धकता | ४६७ | ८ |
| स्वरूप | रूप | ४६८ | १२ |

| अशु | शुद्धं | पृष्ठ | पंक्ति |
|---|---|---|---|
| ते | ते च | ४७२ | १ |
| ज्ञ | ज्ञा | ४७६ | १२ |
| न | तत् | ४७६ | १६ |
| ला | लो | ४८१ | १ |
| यत्र | चैव | ४८४ | १५ |
| मन्धस्य न पश्यति | मन्धवन्नैव गण्यते | ४८६ | ८ |
| द्धाः | द्धा | ४८७ | १६ |
| माता | मातृ | ४६० | ५ |
| हस्य | हित्य | ५०१ | १४ |
| सु | सू | ५०३ | ४ |
| कान् | कम् | ५१७ | १ |
| रिश | रिंश | ५१७ | ७ |
| वकारा | वराका | ५१७ | १५ |
| वैधे | वैधे | ५१८ | १६ |
| क | कं | ५२४ | ८ |
| सच्छृ | सच्छ्र | ५२४ | ८ |
| त्रस्य | त्रक | ५२६ | ६ |
| आका | त्वाऽऽका | ५२६ | ६ |
| तः | तम् | ५३१ | ११ |
| ने | नं | ५३१ | १६ |
| मियथ्या | मिथ्या | ५३६ | १८ |

| अशुद्धं | शुद्धं | पृष्ठ | पंक्ति |
|---|---|---|---|
| त्नो | प्नो | ५३६ | १२ |
| स्वर | स्पर्श | ५४६ | १० |
| संस्मृरे | संस्मरे | ५४६ | १७ |
| महानत्त्व | महत्तत्त्व | ५४८ | ११ |
| दु भ | ते भ | ५५२ | ११ |
| सध्या | सद्धया | ५५७ | ११ |
| मोक्षस्य | मोक्षस्य चैव | ५५६ | ११ |
| च | ० | ५५६ | ११ |
| का | को | ५६० | १५ |
| वाह्नि | वह्नि | ५६६ | १६ |
| वादि | व्यादि | ५७१ | १५ |
| द्वि | द्वय | ५७२ | २ |
| नेक | नैक | ५७३ | १३ |
| यंत्रः | यत्र | ५७४ | १२ |
| तूर्यं | तुर्य | ५७४ | १६ |
| तूर्य | तुर्य | ५३५ | १५ |
| यत्पु | यत्यु | ५७६ | १४ |
| त्तितः | र्त्तितः | ५८० | १३ |
| चेव | चैव | ५८० | १४ |
| दि | द्वि | ५८३ | १५ |
| रः | रैः | ५८४ | ४ |

| अशुद्धं | शुद्धं | पृष्ठ | पंक्ति |
|---|---|---|---|
| चैव | चैव | ५८६ | ३ |
| बिना | विना | ५९० | ११ |
| त्रिद् | विदे | ५९२ | १ |
| धो | धौ | ५९३ | ८ |
| शा | शो | ५९३ | १५ |
| न | ण | ५९५ | २ |
| तूर्य | तुर्य | ५९५ | ३ |
| नेव | नैव | ५९६ | ३ |
| च तद्धेतूनां | हेतुर्दशिनां | ५९६ | १५ |
| तत्रेव | तत्रैव | ५९७ | ७ |
| बाधा | बोधा | ६०३ | १६ |
| चिद् | प्य | ६०३ | १७ |
| न्य | न्यं | ६०३ | १७ |
| द्ध | ध्य | ६०४ | ८ |
| तूर्या | तुर्या | ६०६ | ५ |
| द्वो | द्वौ | ६१३ | १२ |
| खल | खलु | ६१७ | ८ |
| का | काः | ६१९ | ८ |
| ता | ना | ६२१ | २ |
| यागे | योगे | ६२२ | ६ |
| सम | समा | ६२२ | १३ |

| अशुद्धं | शुद्धं | पृष्ठ | पंक्ति |
|---|---|---|---|
| नीद्यं ते | नोद्यं ते | ६२७ | १३ |
| द् | द्द् | ६३४ | १६ |
| तः | त् | ६३७ | ११ |
| असत्य प्रतिपादकं | तत्सत्यमिति गीयते | ६४० | १७ |
| तत्सत्यमिति गीयते | असत्यप्रतिपादकम् | ६४० | १८ |
| प्रधानस्य | मुख्यरूपस्य | ६४६ | १५ |
| शास्त्रषु | शास्त्रे | ६५० | ६ |
| ति | त्ति | ६५६ | २ |
| तीर्थ | तीर्थेन | ६५६ | ४ |
| योगदर्शन विचारणा | पातंजलयोग विचारणा | ६०० | १ |
| त्मज | त्मजम् | ६५७ | १ |
| ता | ताम् | ६६२ | ११ |
| तौ | तो | ६६३ | १ |
| द्रण | द्रोण | ६६३ | १३ |
| यार्थं | येर्थं | ६६५ | ७ |
| जेनाश्च | जैनाश्व | ६७० | १४ |
| भिल्ल | भिल्लं | ६७६ | ६ |
| गश्भीर | गम्भीर | ६७६ | १२ |
| भ्राति | भ्रांति | ६८० | १० |
| श्वरी पुरी | श्वरीं पुरीं | ६८० | ११ |
| ग्रंथि | ग्रन्थि | ६८२ | १४ |

| अशुद्धं | शुद्ध | पृष्ठ | पंक्ति |
|---|---|---|---|
| जौन | जौना | ६८५ | ५ |
| नश्यति | णश्यति | ६८७ | ४ |
| सूरीणां च | सूरयश्च | ६६० | ५ |
| नः | ताः | ६६० | ५ |
| सरिभिः | सूरिभिः | ६६३ | ४ |
| तः | ताः | ६६५ | ३ |
| ने नैव | नेनैव | ७०२ | ७ |
| नि | नीं | ७०४ | ५ |
| सवेग | संवेग | ७०४ | १३ |
| तो | तौ | ७०४ | १६ |
| नामकम् | पदम् | ७०८ | ५ |
| कः | काः | ७११ | ७ |
| नैव | चैव | ७१५ | १७ |
| साधन | साधव | ७१६ | १७ |
| नि | नीं | ७१७ | ३ |
| पूजां | पूजा | ७१८ | १४ |
| जौ | जौः | ७१६ | ४ |
| या | यो | ७२७ | ३ |
| गुरुध्यान | ज्ञानध्यान | ७२८ | १० |
| शुद्ध | शुद्धं | ७३० | ८ |
| पयन्त | पर्यन्त | ७३१ | ५ |

## न्यायविशारद न्यायतीर्थ परमपूज्य उपाध्याय श्रीमंगलविजयजी महाराज कृत ग्रन्थ :—

(संस्कृत)

१ जैनतत्त्वप्रदीप
२ धर्मदीपिकाव्याकरण
३ आदर्शविभूति
४ योगप्रदीप
५ वीरधर्मपट्टावली
६ व्युत्पत्तिवाद टीका (अमुद्रित)
७ शक्तिवाद टिप्पन (अमुद्रित)
८ नयप्रदीप (अमुद्रित)
९ वंगबिहार प्रकरण (अमुद्रित)
१० धर्मबोध व्याकरण एक अध्याय मूलसूत्र (अमुद्रित)
११ उल्लासकल्लोलिनी भ्रमशोधक (अमुद्रित)

(हिन्दी)

१२ जैन साहित्यमें पदार्थव्यवस्था
१३ वेदरहस्य संक्षेप (अमुद्रित)
१४ महाभारतरहस्य प्रदर्शन (अमुद्रित)
१५ मनुस्मृतिरहस्य संक्षेप (अमुद्रित)
१६ कूर्मपुराणरहस्य (अमुद्रित)

( गुजराती )

१७ आर्हतदर्शनदीपिका

१८ धर्मजीवन प्रदीप

१६ धर्मप्रदीप

२० गुरुदेव पूजा योगगर्भित ( छोटी )

२१ गुरुदेव पूजा ( बड़ी )

२२ सम्यक्त्वप्रदीप

२३ द्रव्यप्रदीप

२४ तत्त्वाख्यानपूर्वार्द्ध

२५ तत्त्वाख्यानउत्तरार्द्ध

२६ सप्तभंगीप्रदीप

२७ कवलाहारप्रकरण ( अमुद्रित )

२८ गहूंली संग्रह ( अमुद्रित )

२६ ढूंढकमतप्रदीप ( अमुद्रित )

मुनिराज श्रीप्रभाकर विजयजी कृत ग्रन्थ :—

१ सराक जाति

२ आदर्श जैनदर्शन ( जैनतत्त्वप्रदीपका अनुवाद )

---